हरिःओम्

श्रीमते रामानुजाय नमः

श्रीमद्धाधूलमहाचार्यवर्यसच्छिष्येण श्रीसुदर्शनाचार्येण

विरचिता

# वेदान्तविजयमङ्गलदीपिका।

विद्वद्रत्न गोस्वामि श्रीदीक्षितजी महोदय शेठ मौंजीसुन्दरजी, शेठ गजाधरजी सोमाणी, शेठ हरिदास धनजी मूलजी एतेषां द्रव्यादिसाहाय्येनेयं मुद्रापिता.

प्रकाशकः—

पं. भट्टश्रीगौरगोपालशर्मा

व्यवस्थापक—श्री. बा. शु. सं. पुस्तकालय,

बड़ामन्दिर भूलेश्वर, बम्बई २.

मुद्रणालय—निर्णयसागरप्रेस—मुंबई.

प्रथम संस्करण।] मूल्य रु० १।।। [वि. सं. १९९९.

हरिःओम्

श्रीमते रामानुजाय नमः

श्रीमद्धाधूलमहाचार्यवर्यसच्छिष्येण श्रीसुदर्शनाचार्येण

विरचिता

# वेदान्तविजयमङ्गलदीपिका ।

विद्वद्रत्न गोस्वामि श्रीदीक्षितजी महोदय शेठ मौंजीसुन्दरजी,
शेठ गजाधरजी सोमाणी, शेठ हरिदास धनजी मूलजी
एतेषां द्रव्यादिसाहाय्येनेयं मुद्रापिता.

प्रकाशकः—

पं. भट्टश्रीगौरगोपालशर्मा

व्यवस्थापक—श्री. बा. शु. सं. पुस्तकालय,

बड़ामन्दिर भूलेश्वर, बम्बई २.

मुद्रणालय—निर्णयसागरप्रेस—मुंबई.

प्रथम संस्करण ।] मूल्य रु० १॥। [ वि. सं. १९९९.

हरिः ओम्

श्रीमते रामानुजाय नमः

श्रीमद्वाधूलमहाचार्यवर्यसच्छिष्येण

श्रीसुदर्शनाचार्येण प्रणीता

# वेदान्तविजयमङ्गलदीपिका

श्रीमत्परमहसेत्यादि बिरुदाङ्कितैः

श्रीयदुगिरि यतिराज सम्पत्कुमार रामानुज मुनिभिः

प्रत्यवेक्षिता



कल्यब्दाः ५०४५ शा. श. १८६५

१९४३

॥ श्रीः ॥

श्रीमद्वाधूलकुलतिलक श्रीमहाचार्यसेवासमासादितसकलशास्त्रहृदयेन श्रीमद्वाधूलसुन्दरजामातृदेशिकसूनुना श्रीसुदर्शनगुरुणा श्रीमहाचार्यविरचितानां गुरूपसत्त्यादीनां पञ्चानां विजयानां गुरुशरीरतया विषयगहनतया मन्दमतिसुग्रहत्वाय सङ्क्षेपेण कृता विजयमङ्गळदीपिका अतिप्रसिद्धा विद्योतते ॥

श्रीमहाचार्यप्रणीताः पञ्च विजयाश्च—(१) गुरूपसत्तिविजयः, (२) ब्रह्मविद्याविजयः, (३) सद्विद्याविजयः, (४) अद्वैतविद्याविजयः, (५) परिकरविद्याविजय इति ॥

एतेष्वादितश्चतुरो विजयान् संक्षिप्य विजयोपन्यास इति नाम्ना निगदितः । चरमस्य प्रतिपाद्यमतिसंक्षिप्य श्रीमन्नारायणपरतत्त्वमिति नाम्नोपन्यासः कृतः ॥

अयं विजयमङ्गळदीपिकानामा ग्रन्थः मातृकामात्रे प्रतिरूपितशरीरो न कुत्रापि मुद्रितः । सत्येवं विषये—मुम्बापुरनिवासिनः श्रीवल्लभाचार्यसम्प्रदायप्रवर्तकपीठाचार्यपदाधिष्ठिताः श्रीगोस्वामिमहोदयानां तनयरत्नं सुगृहीतनामधेयाः सहृदयोत्तंसाः विद्वद्वरेण्याः निम्बार्क-मध्व-रामानुजश्रीवल्लभरूपचतुर्विधसम्प्रदायेष्वविशेषेण समासादितरहस्यार्थपरिचयाः रामानुजसम्प्रदाये अप्रकाशितान् ग्रन्थान् सम्पिपादयिषया मद्रास् नगरमागत्य तत्रत्यराजकीयपुस्तकभाण्डागारे अभिमतान् ग्रन्थान्प्रतिरूपयितुं संविधानमादधिरे । प्रसङ्गात्तन्नगरान्तःपातिनि तिरुवल्लिक्केणिनामनि बृन्दारण्यापरनामनि क्षेत्रप्रदेशे विद्यमानं श्रीगुरुमठं विज्ञाय अप्रकाशितग्रन्थसङ्ग्रहाय समागताः संस्कृतभाषयैव व्यवहरन्तः साप्तपदीनं सविस्रम्भमातेनिरे । श्रीमद्गुरूणां तु चेतः सन्ततप्रसन्नसम्भाषणेन परवशमभूत् । मिथः सौजन्यसल्लापाः समभूवन् । अनन्तरमस्मदीयग्रन्थसङ्ग्रहे तालमूलकोशात्प्रतिरूपिताः अस्मद्गुरुभिर्महता प्रयत्नेन ततस्ततोऽन्विष्य पञ्चषमातृकाः सम्पाद्य तत्साहाय्येन संशोध्य मुद्रणाय सज्जीकृताः पञ्चषा ग्रन्थास्तेभ्य उपाय-

नीकृताः । ततस्ते प्रीयमाणाः अन्येषामपि ग्रन्थानां प्रतिरूपणाय व्यवस्थां विधाय स्वाधिष्ठानाय प्रचेलुः । तत्रेदं प्रथमतया विजयमङ्गळदीपिका नाम मुद्रापितः । उपोद्घातादिलेखनायास्मत्सकाशं प्रेषितः । तदात्वे श्रीमद्गुरौ दुर्विधिवशात् मठानुबन्धिनि व्यापारे विस्रम्भघातिभिः परिजनैर्महतीं दुरवस्थां प्रापिते, सुदूरविक्षेपात् अनवधानेनैतावत्समयं पूर्वप्रस्तुतग्रन्थोपोद्घातादिलेखनं सप्रतिबन्धमभूत् ॥

ग्रन्थकर्तुरस्य कालदेशाद्यपदानादीनामसम्पादितसामग्रीकतया ग्रन्थान्तरे प्रकाशयिष्यते ॥

अस्मद्गुरवश्च पूर्वाश्रमे मैसूरु राजकीयशासनाविद्याशाखायां पण्डितपदाधिष्ठिताः साहित्यशास्त्रे अनितरसाधारणनैपुण्याः तापसवत्सराजचरित-भोजदेवकृतशृङ्गारप्रकाशयोः (पाञ्चरात्रागमे) पाद्मसंहिता पौष्करसंहिता काश्यपसंहिताद्यनेकग्रन्थानां शोधयितारः विद्वांसः आनन्दाळवार् नामानः ततो विश्रान्तिं प्राप्य श्रीयदुगिरि यतिराजपीठमलङ्कृता स्तत्रतत्र सुप्रसिद्धा इत्येतत्सर्वेषां विदितचरमेव ॥

एतद्ग्रन्थमुद्रणार्थं सहायभूत मातृकाः.

| | | |
|---|---|---|
| मद्रास् राजकीयपुस्तकभण्डागरतः | .... | एका. |
| षोळङ्गिपुरम् ........................................ | .... | एका. |
| मैसूरु प्राच्यकोशागारतः | .... | एका. |
| आसूरि सम्पत्कुमराचार्य कोशागारात् | .... | द्वे. |
| मैसूरु आस्थानविदुषां सो. नरसिंहाचार्याणां सकाशात् | .... | एका. |

एतद्ग्रन्थशोधनकार्ये कृष्णराजपुराभिजनेन आस्थानविदुषा नारायणस्वामिशास्त्रिणा सर्वोऽपि भरः सुनिर्व्यूढ इति सकृतज्ञमावेद्यते ॥

आसूरि श्रीनिवासय्यङ्गार्यः.

## विजयमङ्गळदीपिकाया विषयाः ।



कारोनेषन् प्रेस, चामराज रोड्, मैसूरु

हरिःओम्

श्रीमते रामानुजाय नमः

श्रीमद्वाधूलमहाचार्यवर्यसच्छिष्येण श्रीसुदर्शनाचार्येण

विरचिता

# वेदान्तविजयमङ्गलदीपिका 5

[1]महाचार्यकृपा[2]पात्रं मनीषाभूषमानसम् ।
सुदर्शनगुरुं वन्दे सौशील्यादिगुणोज्ज्वलम् ॥

[3]वन्दे संश्रितसर्वकामफलदं सर्वापदां वारकं
तत्सन्त्राणविभासिताब्जनयनं सम्फुल्लपद्माननम् ।
जानुद्वन्द्वसमुल्लसत्करयुगं व्यत्यस्तपादद्वयं 10
जन्मस्थेमलयादिलीलघटिकाशैलाधिराजं प्रभुम् ॥

श्रेयो देयान्ममाचार्यो विद्याविनयवारिधिः ।
परवादिमतध्वान्तदिवाकरमहागुरुः ॥

वेदान्तानां विजयमधुना देशिकानां प्रसादा-
द्वेदान्तार्थान् परकलुषितान् क्षालयित्वा हि सर्वान् । 15
सद्भिर्न्यायैर्विविधकुशलैर्व्याससूत्राधिरूढै-
र्वाधूलश्रीघनगुरुरसौ व्याकरोद्देशिकेन्द्रः ॥

वेदान्तार्थानशेषानतिरसुगमान् सम्यगालोच्य तर्कैः
सूक्ष्मैस्सूत्राधिरूढैर्विभजनकुशलैर्न्यायमार्गैश्च युक्तान् ।
गम्भीरेऽस्मिन् प्रबन्धे घनगुरुरचितेऽशेषतन्त्रार्थदीप्ते 20
कर्तुं शक्यः प्रसङ्गो न मम चलमतेस्तत्प्रसादात्तु शक्यः ॥

---

१. अयं ग्रन्थकर्तृविषयः श्लोको न ग्रन्थान्तर्गतः. २. ख—पात्रमनीषं हृष्टमानसम् । सौदर्शनं गुरुं. ३. ख—भक्तापेक्षितसर्व...शैलाधिनाथं भजे. ४. ख—षांस्तदितरकथितान्.

विजये निगमान्तानां शुभां मङ्गलदीपिकाम् ।
तनुते तत्प्रकाशाय सुदर्शनगुरुस्सुधीः ॥

इह खलु श्रीवाधूलकुलतिलको[1] महामतिरखिलशास्त्रार्थतत्त्वनिर्णायको निखिलवेदमौलिभागार्थतत्त्वनिर्धारकस्सकलमीमांसान्यायसञ्चारणनिपुणो
5 ब्रह्मविदग्रेसराग्रगण्यो भगवान् घनगुरुरखिलरामानुजार्यमतानुसारिविद्वज्जनानुजिघृक्षया संप्रदायपरम्पराप्राप्तसकलवेदान्ततात्पर्यनिर्धारकं तद्विरुद्धतात्पर्यापनोदकं समीचीनन्यायतर्कपरिकर्मितगूढभावमितरराद्धान्तमर्मच्छिदं भगवद्रामानुजराद्धान्ताद्द्वितीयदीपं[2] वेदान्तविजयाख्यप्रबन्धं प्रणिनाय ।

तत्र तदर्थानामतिविततगहनतया मन्दमतिदुरवबोधानां सकलविद्व-
10 ज्जनसुबोधाय तदर्थान् प्रधानप्रतिपाद्यानखिलान् संक्षिप्य वेदान्तविजयमङ्गलदीपिकाख्यप्रबन्धमुखेनोपन्यासः क्रियते ।

तत्र प्रथममन्येषां संशयादिनिवृत्तये ।
श्रवणादेर्विधेयत्वनिरासः क्रियते मया[3] ॥
वेदान्तवाक्यविहितश्रवणादेर्न युक्तिमत् ।
15 विधेयत्वं परोक्तं तु सिद्धेर्ध्यानविधानतः[4] ॥

वेदान्ते तावत् "द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति मोक्षसाधनतया दर्शनादीनां विधायकवाक्यानि श्रूयन्ते; तत्र किं सर्वाणि वाक्यानि विधायकानि, उत कानिचिद्वाक्यानीति विचार्यते । तत्र दर्शनसमानाकारध्यानस्य मोक्षसाधनतया अत्यन्ताप्राप्तेः "द्रष्टव्यो निदिध्यासि-
20 तव्यः" इत्येकवाक्यतया दर्शनसमानाकारध्यानविधिः न तु दर्शनध्यानयोः प्रत्येकविधिरिति अनुपदमेव वक्ष्यामः । तदर्थतया श्रवणस्य रागतः प्राप्तत्वात् श्रोतव्य इत्यनुवादः । श्रुतप्रतिष्ठार्थतया मननस्यापि रागतः प्राप्तत्वात् मन्तव्य इति चानुवादः[5] ।

---

१. ख—घनगुरुरखिलशास्त्रार्थनिर्धारकः—भगवद्रामानुजसिद्धान्तवेदान्तविजयाख्यम्.
25 २. क—राद्धान्तद्वितीयदीपं. ३. ख—तेऽधुना. ४. ख—न्यायविधानतः. ५. ख—इति चानुवादः.

तत्र श्रवणं नाम आपातदर्शनभिन्नं प्रतिवाक्यं 'अयमस्य वाक्यस्यार्थः' इति सिद्धार्थोक्तिरूपेण गुरूपदेशेन अनेकशाखास्थवाक्यार्थग्रहणम् । अत्र स्वतन्त्रवाक्यार्थज्ञानव्युदासाय गुरूपदेशेनेति । न्यायापेतगुरूपदेशजन्यवाक्यार्थज्ञानव्युदासाय सिद्धार्थोक्तिरूपेणेति । एकैकवाक्यार्थज्ञानव्युदासाय प्रतिवाक्यमिति । श्रवणस्य विधेयत्वज्ञापनाय आपातदर्शनभिन्नमिति । न चोक्तरूपेण [1]वाक्यार्थनिर्णयरूपश्रवणेनैव निदिध्यासनसंभवान्मननवैयर्थ्यमिति वाच्यम् । तस्याज्ञानमात्रनिवर्तकत्वेन संशयनिवर्तकत्वाभावात् । युक्तिपूर्वकनिर्णयरूपमननस्यैव संशयनिवर्तकत्वादिति केचित् श्रवणपदार्थमाहुः—

तन्न—श्रोतव्य [2]इत्यत्र [3]गुरुशाखावाचकपदाभावात् श्रोतव्यशब्दस्य श्रोत्रजन्यज्ञानविषयत्व एव व्युत्पत्तेः तस्यात्मन्यसंभवेन श्रोत्रजन्यज्ञानविषयशब्दजन्यज्ञानलक्षणया [4]वाक्यजन्यार्थज्ञानमेव श्रवणमिति युक्तम् । मननं च युक्तायुक्तविचारपूर्वकनिर्णयरूपज्ञानम्, स्मृतिजनकदृढतरसंस्काराधायकवाक्यार्थज्ञानं वा । तस्य मननशब्दार्थत्वाभावेऽपि वस्तुसामर्थ्येन मननविशेषो [5]लभ्यते, घटपदस्य सामान्यवाचित्वेऽपि जलाहरणसामर्थ्येन यथा छिद्रेतरघटलाभः । निपूर्वेण चिन्तावाचिधातुना निरन्तरध्यानं निदिध्यासनम् । [6]इत्थमेव श्रवणादीनां विवेकः ।

एवं स्थिते केचिदाहुर्माध्वाः—श्रोतव्य इत्यपूर्वविधिः, ब्रह्मज्ञानहेतोः ब्रह्मविचारस्य सामान्यतः प्राप्तावपि वेदविचारत्वेन ब्रह्मज्ञानहेतुताया अत्यन्ताप्राप्तत्वात्? यथा [7]स्थानप्रकरणाधिकरणोक्तरीत्या राजसूयान्तर्गतेष्टिपशुसोमेषु [8]प्रातिस्विकरूपेण सामान्यत इतिकर्तव्यताप्राप्तावपि राजसूयात्मना अप्राप्तिः । मन्तव्य इत्यपूर्वविधिः, यद्वा श्रवणमननयोर्निदिध्यासितव्यगुणविषये वस्तुसामर्थ्येन प्राप्तावपि तदन्यगुणविषये [9]अप्राप्तेस्त-

१. ख—वाक्यार्थनिर्णयरूपेण निदि. २. ख–श्रोतव्य इत्यस्य. ३. गुरूपदेशेनेत्यत्र गुरुपदस्य अनेकशाखास्थेत्यत्र शाखापदस्य चाभावादित्यर्थः. ४. ख–वाक्यजन्यज्ञानार्थज्ञानमेव. ५. ख–विद्यते. ६. क—इत्थमेवं श्रवणा. ७. पूर्वमीमांसा—अ. ३, पा. ३. अधि. ४–५. ८. क–ग–घ—प्रातिस्विकरूपचोदकतः. ९. ख—अप्राप्तत्वादपूर्वविधिः.

द्विधिरप्यपूर्वविधिः, एवं च श्रवणमननयोः निदिध्यासितव्यगुणविषये दृष्टद्वारेण अन्यत्रादृष्टद्वारेण निदिध्यासनाङ्गतेति—

तन्न—तत्र ब्रह्मज्ञानाय वेदविचारः कर्तव्य इति वचनव्यक्तेरभावात्। आत्मा श्रोतव्य इति हि विधिवाक्यं, तेनात्मविचारः कर्तव्य 5 इति वचनव्यक्तिः सिध्येत्, न तु वेदविचारः कर्तव्य इति; यदि वेदस्यात्मप्रमाणत्वाद्वेद[1]विचारः तदा तद्विचारस्यात्मनि प्रमाणत्वाद्वेदविचारः सिध्येत्। तथा च लौकिकवाक्यस्यापि विचार्यत्वप्रसङ्गः। सर्ववेदानामाराध्यब्रह्मपरत्वेन ब्रह्मणि प्रमाणत्वविवक्षायां न[2] तस्य विधेयता, रागादेव प्रवृत्तेः। किञ्च मननस्य विधेयत्वेऽपि कथं श्रवणस्य विधेयत्वं 10 मन्तव्यार्थश्रवणस्य मननहेतुतया लोकत एव प्राप्तत्वात्। किञ्च श्रवणमननयोर्विधेयत्वे निदिध्यासितव्यगुणांशे अनुवादः प्राप्तत्वात् अन्यत्र चाप्राप्तत्वाद्विधिरित्येकस्यैव वाक्यस्य विध्यनुवादवैरूप्यप्रसङ्गः। न चेष्टापत्तिः, "तत्प्रकृत्यर्थं[3] यथाऽन्येऽनारभ्यवादाः" इत्यधिकरणविरोधात्। "अनुप्रासर्षिषु[4] सामान्यात्" इत्यधिकरणविरोधाच्च; तत्रोभयत्रापि विध्य- 15 नुवादवैरूप्यप्रसङ्गेन पूर्वपक्षनिरासात्।

यदुक्तं वेदविचारत्वेन ब्रह्मज्ञानहेतुताया अप्राप्तिरिति। तत्र किं सर्ववेदविचारत्वं विवक्षितं वेदविचारत्वमात्रं वा? नाद्यः, सर्वत्वबोधकपदाभावात्। किं च सर्वत्वं किं वेदविशेषणं[5] विचारविशेषणं वा? नाद्यः, प्रामाण्यविचारादेरेव विधेयत्वप्रसङ्गात्। न द्वितीयः, सर्वविचाराणां 20 यौगपद्यासंभवेनातीतानां कारणत्वायोगात्। अतीतानामदृष्टद्वारकत्वे[6] च कर्मविचारस्य मननशब्दार्थत्वकल्पना व्यर्था। अतीतेन ब्रह्मविचारेण अपूर्वविधित्वोपपादनसंभवात्।

---

१. क—विचारसिद्धिः तदा वाक्यस्यात्मनि प्रमाणत्वाद्वाक्यविचारः. २. ख—प्रमाणत्वादेव प्रवृत्तेः. ३. पू. मी. अ. ३. पा. ६. सू. १४. ४. पू. मी. अ. ३. पा.५, 25 सू. ५२. ५. वेदस्य उत वेदविचारस्य विशेषणं वा. ६. ख—अतीतानागतधर्मविचारस्य.

न द्वितीयः, एकेनैव विचारेण चारितार्थ्यात् । [1]राजसूयदृष्टान्तश्च विषमः । इदं हि तदधिकरणशरीरं-राजसूये बहव इष्टिपशुसोमयागाः सर्वे फलवन्तस्समप्रधानाः, तत्राभिषेचनीयो नाम सोमयागः, तत्सन्निधौ विदेवनादयः समाम्नाताः, ते किं [2]सर्वस्य राजसूयस्याङ्गमुताभिषेचनीयस्यैवेति। यदि सन्निधिर्बलीयान् अभिषेचनीयाङ्गम्, अथ प्रकरणं बलीयः 5
ते राजसूयाङ्गमिति । तत्र सन्निधिविशेषादभि[3]षेचनीयाङ्गत्वे प्राप्ते तदभिधीयते—"[4]प्रकरणाविशेषात्" सर्वार्थतैव युक्ता । यद्यपि अभिषेचनीयस्यापि फलवत्त्वात् प्रकरणमस्ति । तथापि तत्प्रकरणं सर्वेषामस्तीति सर्वार्थतैव युक्ता । अभिषेचनीयाङ्गत्वे हि पाठसन्निधिविशेषेण [5]विशेष्याकाङ्क्षां कल्पयित्वा अभिषेचनीयाङ्गत्वं कल्प्यम् । ततो वरं क्लृप्ताकाङ्क्षा- 10
तत्सर्वार्थताकल्पनमिति । अत्र सन्निधेः प्रकरणस्य बलवत्त्वं व्युत्पाद्यम् [6]
[7]नत्वाकारान्तरेण । आकाङ्क्षाविरहेऽप्याकारान्तरेणाकाङ्क्षा व्युत्पाद्या । किञ्च वेदान्तविचारांशे लोकत एव प्रवृत्तिसिद्धेस्तदंशे न विधेः प्रयोजकत्वं कल्प्यं, किन्तु पूर्वभागविचारांश एवेति विधेर्विधेयैकदेशप्रयोजकत्वमस्वरसमापद्येत । 15

अपरे तु माध्वाः—द्रष्टव्यः श्रोतव्यो मन्तव्य इत्यादिना श्रवणादिकं [8]मोक्षोपायत्वेन विधाय "आत्मनि खल्वरे दृष्टे श्रुते मते" इति तदुपक्रम्य "एतावदेव खल्वरे अमृतत्वम्" इत्युपसंहारेण एतावच्छब्देन दर्शनादिकं परामृश्य (पार्थक्येन) अमृतत्वमिति मोक्षसाधनत्वमुक्तम् । ते च दर्शनादयः 'दर्शपूर्णमासाभ्यां स्वर्गकामः' इति षड्यागस्यापि तुल्यवत्फलसंब- 20
न्धप्रतिपादनेन षड्यागा इव समप्रधानाः । अत्रापि एतावदेव खल्वरे अमृतत्वमिति दर्शनादिचतुष्टयस्य तुल्यवत्फलसंबन्धप्रतिपादनात् । यद्यपि श्रवणादेर्मननादिद्वारा मोक्षहेतुत्वेन समप्राधान्यं, तथापि नोत्तरोत्तरं प्रति

---

१. ख—राजसूयाधिकरणविरोधो विषमः. २. ख—समप्रधानस्य. ३ षेचनीयस्याङ्गमिति प्राप्ते अभिधीयते. ४. पू. मी. अ. ३, पा. ६, सू. १८. ५. क—विरुद्धाकाङ्क्षां. ६. ख—कल्प्यम्. ७. क—न कारणान्तरेण. ८. क—मोक्षोद्देशेन. 25

शेषत्वमिति क्रतूपकारकाधानवत् [1]प्राधान्याविरोधः । अन्यथा एतावदेवा-
मृतत्वमित्यत्र साधनत्वमसाधनत्वं च प्रतिपाद्यमिति वैरूप्यम् । एतावदे-
वामृतत्वमित्यैकरूप्यं स्वरसतोऽवगम्यते । न चैतावच्छब्देन दर्शनस्यैव
परामर्श इति वक्तुं शक्यम् । प्रकृतत्वाविशेषेण सङ्कोचस्य सङ्कोचकाभावे
5 वक्तुमशक्यत्वात् ।

ननु श्रवणमननयो[2]र्मननध्यानहेतुत्वस्य लोकदृष्टत्वेन तद्द्वारकत्वेऽपि
निदिध्यासनस्य मोक्षे जनयितव्ये कथं दर्शनद्वारकत्वं ध्यानस्य? दर्शन-
हेतुताया लोकप्राप्तत्वाभावादिति चेन्न । दृष्टे संभवत्यदृष्टकल्पनायोगेन
दर्शनस्यैव द्वारत्वकल्पनात् । यद्यपि श्रवणमननयो[3]र्निदिध्यासितव्यगुण-
10 विषये प्राप्तत्वेन न विधिसंभवः । तथापि गुणान्तरेषु तयोरत्यन्ताप्राप्त-
त्वात् श्रोतव्यो मन्तव्य इत्यपूर्वविधिः । तत्र श्रवणस्य दृष्टं मननमेव
द्वारम् । मननस्य तु ध्येयांशे दृष्टमन्यत्रादृष्टमिति ॥

अयमपि पक्षः पूर्वोक्तदूषणेनैव निरस्तः । किञ्च श्रवणस्य मननहेतु-
तायाः लोकतः प्राप्तत्वात् कथं विधेयत्वम् । न च मननहेतुत्वेन प्राप्ता-
15 वपि मोक्षहेतुत्वेनाप्राप्तेरपूर्वविधिरिति वाच्यम् । तथा सति मननस्य ध्येये-
तरगुणविषयत्वकल्पनावैयर्थ्यात् मोक्षहेतुत्वेनाप्राप्तस्य मननस्य विधिसं-
भवात् । किञ्च आत्मा श्रोतव्यो मन्तव्य इत्यत्रात्मशब्देन सकलगुणवि-
शिष्ट एवात्मोच्यते, अविशेषात् । आप्नोतीत्यवयवव्युत्पत्त्या सकलगुण-
विशिष्टस्यैव शब्दार्थत्वात् निदिध्यासितव्य इत्यत्रापि स एवोच्यते ।
20 अन्यथा आत्मशब्दार्थवैरूप्यप्रसङ्गात् । ततश्च सकलगुणविशिष्टात्मवि-
षयकनिदिध्यासनदर्शनयोः विधिरिति विद्याभेदोच्छेदः । तादर्थ्यस्य श्रव-
णमननयोः [4]लोकत एव प्राप्तत्वादविधेयत्वं च स्यात् । आत्मशब्दस्य
स्वरूपमात्रपरत्वे तु आत्मध्यानहेतुत्वं श्रवणमननयोर्लोकत एव प्राप्तमिति
विधिवैयर्थ्यम् । दर्शनरूपज्ञानस्या[5]विधेयत्वान्न द्रष्टव्य इति विधिः ।
30 तत्साधनविधौ तु निदिध्यासनविधिरेव स्यात् ।

---

१. ख–प्रधानान्तरं कल्प्यम्. २. ख–निदिध्यासनहेतुत्वस्य. ३. ख–मन्तव्यगुण-विषये. ४. ख–लोकत एव विधेयत्वं च स्यात्. ५. ख–अविधेयत्वापातात् साधनविधौ तु.

यदुक्तम् "एतावदरे खल्वमृतत्वम्" इत्यादिना चतुर्णां मोक्षसाधनत्वेन विधानमिति । तन्न, प्रयोजकत्वमात्रेण [1]सामानाधिकरण्योपपत्तेः लाङ्गलं जीवनमितिवत् । न हि लाङ्गलं साक्षाज्जीवनहेतुः । किन्तु कर्षणादिबहुव्यापारव्यवधानेनैव । किञ्च एतावदित्यस्य [2]कमिपदाभावेन नियोज्यसमर्पकत्वाभावात् [3]खलुपदप्रयोगाच्चायमर्थवादः । कमिपदकल्पनेन नियोज्यसमर्पकत्वं तु यत्र तत्कल्पनं तत्रैव स्यात् । तच्च द्रष्टव्यो निदिध्यासितव्य इत्यत्रैव । तत्र लोकसिद्धफलाभावात् । न तु श्रोतव्यो [4]मन्तव्य इत्यत्र तत्कल्पनं युक्तम् । तयोर्ध्यानफलकत्वस्य लोकत एव प्राप्तेः ।

यत्तु निदिध्यासनस्य दर्शनं द्वारमिति, तदपि न; स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः, "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" इति ध्यानदर्शनयोस्तुल्यवन्मोक्षसाधनत्वप्रतिपादनेन द्वारद्वारिभावासिद्धेः । ध्यानस्य दर्शनहेतुताया लोकतः प्राप्त्यभावात् । अस्तु वा दर्शनद्वारकत्वं; तथापि ध्यानस्य दर्शनजनकत्वमदृष्टद्वारेणैव स्यात् । ततश्च तद्द्वारेण मोक्षसाधनत्वसंभवे दर्शनद्वारकत्वकल्पनं व्यर्थमेव । तस्मात् ध्यानं दर्शनात्मकमेव ज्ञानमत्र विधीयते । न तु दर्शनोद्देशेन ध्यानविधिः । दर्शनस्यापुरुषार्थत्वात् 'अमृतत्वस्य तु नाशास्तिवित्तेन' 'एतावदरे खल्वमृतत्वम्' इति प्रकृतपरमपुरुषार्थमोक्षस्यैव फलत्वसंभवेन तत्कामस्यैव नियोज्यताकल्पनस्योचितत्वाच्च । तत्र च ध्यानदर्शनयोः प्रत्येकविधाने दर्शनस्याविधेयत्वेन विधानानुपपत्तिः, परमात्मदर्शनासंभवः, गुरुलघुविकल्पनानुपपत्तिश्च । तस्मात् द्रष्टव्य इति [5]दर्शनसमानाकारज्ञानविधिः । तच्च ज्ञानं विशेष्याकाङ्क्षायां प्रकृतं निदिध्यासनमेवेति दर्शनसमानाकारध्यानविधिः ।

एवं दहरादिविद्यानामपि मोक्षसाधनत्वेन विधानात् भिन्नस्यैव दर्शनसमानाकारध्यानस्य विधाने गुरुलघुविकल्पानुपपत्तिप्रसङ्गात् दहरादि-

---

१. ख—सामानाधिकरण्ये लाङ्गलम्. २. ख—कमितिपदाभावेन. ३. ख—मनना-भावाच्चायमर्थवादः. ४. ख—मन्तव्य इत्येतयोः ध्यानफलकल्पनं. ५. ख—दर्शनसामानाधिकरण्यज्ञानविधिः.

विद्यानामपि दर्शनसमानाकारध्यानरूपत्वमवगम्यते। दर्शनसमानाकारश्च वैशद्यविशेषः। वैशद्यं च चाक्षुषत्वारोपनिमित्तं चाक्षुषज्ञानसादृश्यम्, तच्च कामिनीभावनायां दृष्टम्। चक्षुषा कामिनीं पश्यामीत्यनुभवात्।

ननु तत्र कामिनीविषयकमानससाक्षात्कार एव चाक्षुषत्वारोपो 5 दृष्टः। तत्कथं ध्याने चाक्षुषत्वारोपनिमित्तं वैशद्यमिति चेन्न। तत्रासन्निकृष्टकामिनीविषयकमानससाक्षात्कारासंभवेन कामिनीभावनायामेव चाक्षुषत्वारोपात्। न च ज्ञानमेव मनःकामिन्योः संबन्ध इति न मानससाक्षात्कारासंभव इति वाच्यम्। ज्ञानप्रत्यासत्तिघटितप्रत्यक्षसामग्रीतः तदघटितज्ञानसामग्रीमात्रस्य प्रबलत्वात्। अन्यथा स्मृतिसन्तानात्मकध्या-10 नानुपपत्तिप्रसङ्गात्। द्वितीयादिज्ञानानां प्रत्यक्षत्वप्रसङ्गात् शाब्दानुमित्योः प्रत्यक्षत्वप्रसङ्गाच्च। न चैवं तत्ताविशिष्टप्रत्यभिज्ञाप्रत्यक्षानुपपत्तिः। समानविशेष्यज्ञानप्रत्यासत्तिघटितप्रत्यक्षसामग्र्याः प्रबलत्वात्।

दर्शनसमानाकारध्यानं च भक्तिरूपापन्नमित्यवगम्यते। 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' इत्यादिश्रुतेः; कथमनया 15 श्रुत्या भक्तिरूपज्ञान[1]सिद्धिः? उच्यते—एष परमात्मा यं जीवात्मानं वृणुते तेन जीवात्मना एष परमात्मा लभ्यते। एष परमात्मा स्वां स्वीयां तनूम् अप्राकृतदिव्यमङ्गलविग्रहं तस्य जीवात्मनः विवृणुते अनुभावयतीत्यर्थः। अत्र जीवात्मनः परमात्मना वरणीयत्वं प्रतिपाद्यते। प्रियतम एव हि लोके वरणीयो दृष्टः। प्रियतमत्वं च जीवात्मनः, परमात्मनि जीवा-20 त्मनः अत्यन्तप्रीतिः स्वत एव भवति। तथा च अत्यन्तप्रीतिरूपभक्तिप्रसन्नो भगवान् निरतिशयपुरुषार्थं ददातीत्यर्थः पर्यवस्यति। अयमेवार्थः— 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः।' इति वचनेनोपबृंहितः। अनेन परमपुरुषार्थलक्षणमोक्षस्य भक्तिसाध्यत्वमुक्तम्। "भक्त्या त्वनन्यया" इति भक्त्येकसाध्यत्वं प्रतिपादितम्। दर्शनसमानाकारध्यानस्य 25 मोक्षसाधनत्वं 'द्रष्टव्यो निदिध्यासितव्य' इति वाक्येन प्रतिपादितम्।

---

१. ख—ज्ञानविधिः.

न च भक्तिध्यानयोस्तुल्यवन्मोक्षसाधनत्वं संभवति, गुरुलघुविकल्पानुपपत्तिप्रसङ्गात् । "भक्त्या लभ्यस्त्वनन्यये"ति भक्त्येकसाध्यत्वविरोधाच्च । तस्मात् दर्शनसमानाकारध्यानमेव भक्तिरूपापन्नं मोक्षसाधनमित्यवगम्यते ।

ननु भगवद्ध्यानस्य विषयसारस्येन[2] सुखरूपतया रागत एव तत्र प्रवृत्त्युपपत्तेः विधिवैयर्थ्यमिति चेन्न । सुखरूपतया रागतः प्रवृत्तिसंभवेऽपि मोक्षार्थिनो मोक्षसाधनताज्ञानं विना तत्र नियतप्रवृत्त्यनुपपत्तेः मोक्षसाधनत्वेनाप्राप्तध्यानविधौ विरोधाभावात् । यथा क्षीरपाने रागतः प्रवृत्तिसंभवेऽपि पित्तोपहतस्य तन्निवृत्तिसाधनताज्ञानं विना नियतप्रवृत्त्यनुपपत्तेः तत्साधनत्वेनाप्राप्तक्षीरपानविधिः ।

ननु कामिनीभावनायां तद्विषयकविशदानुभवजन्यरागसहकारादेव वैशद्यं दृष्टम् । इह कथं तदुपपत्तिः? भगवति पूर्वं विशदानुभवाभावात् इति चेन्न । उपासनाप्रीतभगवत्प्रसादेन वैशद्यसंभवात् । एतदेव—

"तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥"

इति भगवतोक्तम् ॥—

ननु निदिध्यासनं न ज्ञानं, विधेयत्वात् । अतः कथं ज्ञानधर्मवैशद्योपपत्तिरिति चेन्न । होमादौ क्रियात्वयत्नसाध्यत्वयोरिव निदिध्यासनेऽपि ज्ञानत्वयत्नसाध्यत्वयोर्दुरपह्नवत्वात् । कस्यचिज्ज्ञानस्य यत्नसाध्यत्वं कस्यचित्तदसाध्यत्वं चानुभवसिद्धं, यत्नसाध्यत्वेन ज्ञानत्वनिरासे तदभावात्[3]; तन्निरासो वाऽन्यत्र कथं न स्यात् । तस्मात् ध्यानं ज्ञानं विधेयं च अन्यथा स्वत्वत्यागात्मकबुद्धिविशेषस्यापि यागस्याविधेयत्वप्रसङ्गात् ॥ २ ॥

केचिदाहुर्मायिनः—अपूर्वविधिरेवायं, वेदान्तसंश्रवणस्य ब्रह्मसाक्षात्कारहेतुत्वेन मानान्तरेणानवगमात् । केषाञ्चिदाधुनिकानां कृतेऽपि श्रवणे ब्रह्मसाक्षात्काराभावात्, अकृतश्रवणानां वामदेवादीनां ब्रह्मसाक्षा-

१. ख—साध्यत्वेन. २. ख—तत्प्रवृत्त्युपपत्तिविधि. ३. क—तदन्यत्वं वा.

त्कारदर्शनेन च उभयतो व्यभिचार इति कारणत्वस्य ग्रहीतुमशक्यत्वमिति; तदप्ययुक्तम् । तथा सति व्यभिचारेण कारणत्वस्यैवासंभवे अपूर्वविध्यभावप्रसङ्गात् । निदिध्यासनार्थत्वेन श्रवणमननयोः रागादेव प्रवृत्तिसंभवेन विधिकल्पनागौरवाच्च ॥

5 नन्वेवमपि विहितकर्माङ्गतया विहिताचमनादिप्राप्त्यर्थोऽयं विधिरस्तु, प्राप्तेऽप्यर्थे प्रयोजनवशेन विधिदर्शनात् । तथाहि । "अथातोऽग्निमग्निष्टोमेनानुयजन्ति" इति अग्निष्टोमाङ्गतया अग्निनामकस्थण्डिलविशेषं विधायाम्नातस्य तमुक्थ्येन तं द्विरात्रेणेत्यादिवाक्यस्य उक्थ्यादिष्वतिदेशतः प्राप्तिसंभवेऽपि अग्निविधायकत्वं [१]प्रयोजनवशादुक्तम्, अतिदेशतः प्राप्ताव-
10 न्याश्रितानां फलार्थाकृतिविशेषरूपगुणानामनङ्गत्वादप्राप्तेः तत्राप्यग्निविधौ तूपदेशादेव प्राप्तेरिति ॥

अत्रोच्यते—चोदकतः प्रागेव विधेः शीघ्रप्रवृत्तेः, प्रवृत्तस्य तस्य चोदकत एव विवित्सितार्थस्य प्राप्तिसंभवे किमर्थो विधिरिति प्रयोजनाकाङ्क्षायां नियमपरिसंख्ययोरिव अत्रापीदं प्रयोजनमित्यवगम्यते; न तु
15 प्रयोजनवशाद्विधिः कल्प्यते । तथा च स्वाध्यायाध्ययनजनितापातप्रतीत्यैव परमपुरुषार्थतत्साधननिर्णिनीषया विचारकर्तव्यताबुद्धौ सत्यामर्थनिर्णयायार्थसापेक्षया विलम्बितमलब्धाधिकारं च श्रोतव्य इति वाक्यं कुतो विदध्यात् । विधेरभावे कुतः प्रयोजनाकाङ्क्षा, कुतस्तरामाचमनादिप्राप्तिः; यदि विचारदशायामाचमनाद्यनुष्ठानस्य शिष्टैः प्रवर्त्यमानस्य किं
20 निबन्धनमिति प्रश्नः, तदा तदेव तन्निबन्धनमित्युत्तरम्; कथमन्यथा "प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख उपविश्य सूत्राणि प्रणयति स्म" इत्यादिभाष्योपपत्तिः । न हीदं वाक्यं तद्विषयं, तस्मान्नाचमनादिप्राप्त्यर्थो विधिः । अन्यथा "कृषिमन् कृषस्वे"त्यादौ कृष्यादेरप्याचमनादिप्राप्त्यर्थत्वेन विधेयत्वप्रसङ्गात् । किञ्च गुरूपसदनविधाना-
25 देव शौचसिद्धेराचमनादिकं सिद्धम् । किञ्च अशुचिना मनसापि वेदो-

---

१. क—प्रयोगवशादुक्तम्.

च्चारणस्य निषिद्धत्वात् वेदविचारे अशुचेः कथमधिकारः । तस्मात् श्रोतव्य इति नापूर्वविधिरिति सिद्धम् ॥ ३ ॥

केचिदाहुर्माध्वाः—श्रोतव्यो मन्तव्य इति नियमविधिः । श्रवणविधिना शब्दाभासजन्यज्ञानं व्यावर्त्यते । मननविधिना तु न्यायाभासजन्यं ज्ञानं व्यावर्त्यत इति, तदप्ययुक्तम् ॥ 5

शब्दाभासे न्यायाभासे च यद्याभासत्वज्ञानं, तदा विधिवैयर्थ्यम् । यदि न; तदा विधिना निवर्तयितुमशक्यत्वात् विधिवैयर्थ्यम् ॥ ४ ॥

मायिनस्तु केचिदाहुः—यथा किञ्चिद्वस्तु चक्षुषा निरीक्षमाणः स्वागृहीते सूक्ष्मविशेषान्तरे केनचित्कथिते तदवगमाय तस्यैव चक्षुषः सप्रणिधानव्यापारे प्रवर्तते, तथा मनसा गृह्यमाणे आत्मनि वेदान्तैरापाततो 10 निर्विशेषस्वरूपमाकर्ण्य तदवगमाय मननमेव[1] सप्रणिधानं, तत्रात्मनि मनोनिधाने कदाचित् प्रवर्तेतेति वेदान्तश्रवणे प्रवृत्तिः पाक्षिकी स्यादिति मनःप्रणिधाननिवृत्त्यर्थोऽयं नियमविधिरिति ।

तदयुक्तम्—ज्ञानप्रसादेन विशुद्धसत्त्व इति मनःशुद्धेर्ज्ञानाधीनत्वादिदानीं विशुद्धमनसोऽलाभात् न तत्प्रणिधाने प्रवृत्तिसंभवः । किञ्च श्रवण- 15 विध्यभावेऽपि कृतेऽपि मनःप्रणिधाने ज्ञानादर्शनेन[2] तत एव मनःप्रणिधाननिवृत्तिसंभवे विधिवैयर्थ्यम् । न चैवमकृतप्रणिधानस्य प्रणिधानकरणेऽपि ज्ञानदर्शनमजानतः मनःप्रणिधाने[3] प्रवृत्तिः स्यादिति तन्निवृत्त्यर्थोऽयं नियमविधिरिति वाच्यम् । कृतप्रणिधानस्य पुंसः प्रत्यक्षमूलोपदेशादेवाकृतप्रणिधानस्य तत्र प्रवृत्त्यभावोपपत्तेः ॥ ५ ॥ 20

केचित्तु—"जुष्टं यदा पश्यत्यन्यमीश"मिति भिन्नात्मज्ञानस्य मोक्षसाधनत्वप्रतिपादनेन भिन्नात्मविचाररूपशास्त्रान्तरश्रवणेऽपि कदाचित् प्रवर्तेतेति तन्निवारणेन अद्वितीयात्मश्रवणविधिरयम्; ननु भिन्नात्मज्ञानस्य मोक्षसाधनत्वाभावेन न तन्निवृत्त्यर्थोऽयं नियमविधिः । वस्तुतः साधनान्तरनिवृत्तेरेव नियमविधिकार्यत्वात् । यथा व्रीहीनवहन्तीत्यादौ वस्तुतो 25

---

१. मनस एव प्रणि. २. क. ज्ञानदर्शन. ३. प्रणिधौ.

वैतुष्यसाधननखविदलनादेर्व्यावृत्तिर्नियमविधिना क्रियते; अन्यथा असाधनीभूतव्यावृत्तेर्विधिमात्रे संभवेनापूर्वविध्युच्छेदप्रसङ्गादिति चेन्न; तादृशनियमासिद्धेः, यत्र तु विधिं विना[1]पि विधित्सिते पाक्षिक्यप्राप्तं निवारयितुं न शक्यते। [2]अन्यथा [3]तत्रैव नियमविधिः। अत्र श्रवणविध्यभावे भिन्नात्मज्ञानेऽपि प्रवृत्तिप्रसङ्गेनाभिन्नात्मश्रवणाप्रवृत्तिर्नान्येन निवारयितुं शक्यत इति नियमविधिरिति।

[4]तदप्ययुक्तम्—तथाहि। न तावदापातप्रतिपन्नवेदार्थपुरुषं प्रत्ययं नियमविधिः, तस्य भेदाभेदसन्देहेन तत्त्वजिज्ञासैव स्यात् नतु भेदनिर्णयो मे भूयादिति। नच भेदनिर्णयस्य मोक्षसाधनत्वेन ज्ञानात्तन्निर्णयेच्छा स्यादिति वाच्यम्। वेदवाक्यमात्रे आपातप्रतीत्या भेदनिर्णयमोक्षसाधनताप्रतिपादकवाक्येऽपि आपातप्रतीतिसत्त्वेन भेदनिर्णयस्य मोक्षसाधनत्वनिर्णयाभावात्। नच निर्णयाभावेऽपि यदि न स्यादितिन्यायेन प्रवृत्तिः स्यादिति वाच्यम्। लौकिकप्रवृत्तिसंभवेऽपि अलौकिकप्रवृत्तेर्निर्णयं विनाऽनुपपत्तेः; अन्यथा यागादावपि स्वर्गसाधनतासन्देहेऽपि प्रवृत्तिप्रसङ्गेन कर्ममीमांसावैयर्थ्यप्रसङ्गात्। नापि गृहीतभेदतात्पर्यकवेदान्तपुरुषं प्रति अयं नियमविधिः। तेनास्यापि वाक्यस्य भेदतात्पर्यग्रहणेन तं प्रति त्वदुक्तार्थबोधकत्वस्याप्यसिद्धेः। [5]नापि गृहीताभेदतात्पर्यकवेदान्तपुरुषं प्रत्ययं नियमविधिः, [6]अभेदतात्पर्यग्रहणस्य विचारसाध्यत्वेन तस्य निर्वृत्तविचारतया विचारविधिवैयर्थ्यात्। किञ्च वेदान्तवाक्यस्याद्वैतार्थपरत्वं न्यायैरेव ग्राह्यम्। नतु वाक्यात्। अद्वैतं श्रोतव्यमिति वाक्याभावात्। तथाच भेदवाक्येऽपि न्यायैरेवाभेदतात्पर्यग्रहणात् तद्वाक्यमूलभ्रान्तिप्रसङ्गाभावेन भेदप्रतिपादकशास्त्रविचारप्रवृत्त्यनुपपत्तेः। किंच वाक्यार्थभ्रमं निमित्तीकृत्य विधिप्रवृत्तौ श्रवणविधेः संकेतभ्रमेण अर्थान्तरभ्रमे सति [7]श्रुतात्मविचारप्रवृत्तिनिवृत्त्यर्थं विध्यन्तरमपेक्षणीयं स्यात्। एवं तत्रापि विध्यन्तरमिति विध्यनवस्था॥

१. विनापीत्यत्र अपिर्नास्ति कोशान्तरे. २. ख-अन्यथा इति पदं नास्ति. ३. ख-अत्रैव. ४. ख-'तदप्ययुक्तं' इतीदं वाक्यं नास्ति. ५. घ-नच. ६. ख—अभेदतात्पर्यग्रहणात् तद्वाक्यमूलविचार— ७. द्वैता.

किञ्च पुरुषदशाविशेषमवलम्ब्य विधिप्रवृत्तौ वैतुष्यस्यावहननसाध्यत्वात् ज्ञानदशामवलम्ब्य व्रीहीनवहन्तीत्यस्यापि अपूर्वविधित्वप्रसङ्गः । किञ्च आत्मा श्रोतव्य इत्यात्मदर्शनाय नियम्यते । न च प्रकरणात् अद्वैतात्मेति आत्मदर्शनाय भेदविचारप्रवृत्त्यभावेन न तद्व्यावृत्त्यर्थोऽयं नियमविधिः । किञ्च भवतु भ्रमगृहीतसाधनव्यावृत्त्यर्थो नियमः; अथापि नियमेन विना 5 यदि भ्रमनिवृत्तिर्न स्यात्; तदा नियमः कार्यः । इह तु नियमाभावेऽपि न्यायानुगृहीतैः ज्ञानस्य मोक्षसाधनताप्रतिपादकवाक्यैः अद्वैतभानस्यैव मोक्षसाधनताप्रतिपत्त्या भ्रमनिवृत्तेः विधिवैयर्थ्यम् । किञ्च यदि भ्रमगृहीतसाधनव्यावृत्त्यर्थो नियमविधिः स्यात्तदा 'उरु प्रथस्व' इति मन्त्रस्य प्रथनप्रकाशकत्वलिङ्गेन पुरोडाशप्रथने विनियोगे मन्त्रान्तरेऽपि प्रथनप्रकाशक- 10 त्व[1]लिङ्गभ्रमेण तत्रैव विनियोगभ्रमेण एकेनैव मन्त्रेणानुष्ठेयार्थ[2]प्रकाशसिद्धेः मन्त्रद्वयं वैकल्पिकं स्यादिति 'उरु प्रथस्वेति पुरोडाशं प्रथयति' इति मन्त्रान्तरनिवृत्त्यर्थो नियमविधिः स्यात्, नानुवादः; तस्मान्न भ्रमगृहीतसाधनव्यावृत्त्यर्थो नियमविधिः । किन्तु वस्तुतस्तत्साधनव्यावृत्त्यर्थः ॥ ६ ॥

अपरे तु गुरुमुखानधीतस्वतन्त्रव्यावृत्त्यर्थोऽयं नियमविधिरित्याहुः ॥ 15

तदप्ययुक्तम्—गुरोः श्रोतव्य[3]शब्दार्थानन्तर्भावात् गुरूपसदनविधिनैव सिद्धत्वात् । अत्र यदुक्तम्—

एवं सत्यध्ययननियमोऽपि न स्यात् । अष्टवर्षं ब्राह्मणमुपनयीतेति-वाक्यपरिणामेनाष्टवर्षो ब्राह्मण उपगच्छेत् इति विधेरेव लिखितपाठव्यावृत्तिसिद्धेः । ननु अध्ययनविध्यभावे तदङ्गभूतोपगमविधेरेवाभावात् 20 न तेन लिखितपाठव्यावृत्तिसिद्धिरिति चेन्न, श्रवणविध्यभावे तदङ्गगुर्वभिगमनविधिरेव नास्तीति तुल्यत्वात् । ननु गुरूपसदनस्य तद्विज्ञानार्थमिति ज्ञानोद्देशेन स्वतन्त्रविधिरेव न श्रवणाङ्गतयेति चेन्न; तर्हि अष्टवर्षं ब्राह्मणमुपनयीतेत्यत्रापि ज्ञानोद्देशेन स्वतन्त्रोपगमविधिरेव स्यात् । संमाननादिसूत्रेण नयतेः ज्ञानार्थत्व आत्मनेपदश्रवणेन ज्ञानोद्देशसंभवात् । 25 तस्मादुभयत्रापि वाक्यद्वयवैयर्थ्यपरिहाराय एकः प्रधानविधिरपरो-

१. क—शकत्वविषयलिङ्ग. २. ख—अनुष्ठेयार्थसिद्धेः. ३. ख—श्रोतव्यपदार्थानन्त.

ऽङ्गविधिः । फलश्रवणं तु पर्णतादिफलश्रुतिवदर्थवाद इति स्वीकार्यम् । किञ्च विधीयमानगुरूपसदनस्यादृष्टद्वारकत्वे स्वतन्त्रविचारव्यावृत्त्यसंभवात् श्रवणद्वारा ज्ञानसाधनत्वं वाच्यम् । तथाच श्रवणद्वारकं साधनान्तरमेव व्यावर्त्यं स्यात्, न स्वतन्त्रविचार इति तदर्थो नियमविधिर्युज्यते; किञ्च ज्ञानसाधनत्वेन[1] विधावदृष्टमेव द्वारं स्यान्न तु श्रवणं; तस्य प्रागेव ज्ञानसाधनत्वेन क्लृप्तस्य पश्चाद्द्वारत्वेन कल्पने तस्य कुलालपितृवदन्यथासिद्ध्यापादकत्वेन श्रुतसाधनत्वप्रतिकूलत्वादिति ।

अत्रोच्यते—ज्ञानोद्देशेनैव गुरूपसदनं विधीयते न तु श्रवणार्थतया; गुरूपसदनस्य दृष्टलोभादेव श्रवणद्वारकतालाभात्। नचात्मनेपदमहिम्ना अष्टवर्षं ब्राह्मणमुपनयीतेत्यत्रापि ज्ञानार्थं तयोपगमनविधाने दृष्टलोभादध्ययनद्वारकत्वलाभः । संमाननाद्यनेकार्थेषु आत्मनेपदविधानेन ज्ञानार्थत्वनिर्धारणासंभवात् निर्धारितार्थाध्ययनविधेरेव विधायकत्वात्। किंच उपसदनस्य याजनवद्रागप्राप्तस्य विधानासंभवात् प्रयोज्यव्यापारोपगमनविधिः कल्पनीयः । तच्चात्मनेपदस्य आचार्यकरणार्थत्वेऽपि संभवति । ततः कथं ज्ञानार्थत्वविधिलाभः । किञ्च—ज्ञानं धात्वर्थएव । न धात्वर्थफलं । तथैवोदाहृतत्वात् । तथाहि—“नयते चार्वी लोकायते । चार्वी बुद्धिः । तत्संबन्धादाचार्योपि । चार्वी ज्ञानं प्रमेयनिश्चयः । तत्र प्रमेयं निश्चिनोतीत्यर्थ इति वृत्तिकारः । तेषामेव धात्वर्थत्वादिति हरदत्तः । तेषामिति तच्छब्देन उत्सञ्जनज्ञानविगणनव्यया गृह्यन्ते । परिशिष्टानि तु नयत्यर्थस्वभावानीति न्यासकारः । अन्ये तु धात्वर्थाः—इति वृत्तिकारः । तत्रान्यशब्देन उत्सञ्जनज्ञानविगणनव्यया गृह्यन्ते । किञ्च उपनयीतेत्यत्र न ज्ञानोद्देशेनोपगमनविधिसंभवः । तत्र ज्ञानस्य तिङन्तपदार्थबहिर्भावे तद्वाचकपदाभावेन न तदुद्देशेन विधिसंभवः । तदन्तर्भावे तु वषट्कर्तुः प्रथमभक्ष इतिवत् एकपदोपात्तयोर्ज्ञानोपगमयोर्नोद्देशविधिसंभवः । उद्देश्यविधेयभावस्य वाक्यार्थत्वेन पदबोध्यत्वासंभवात् । किञ्च ज्ञानोद्देशेन विधौ कथमध्ययनसिद्धिः । वेदस्य तदर्थस्यान्यस्य वा ज्ञानस्याध्ययननिरपेक्षत्वात् ॥

१. क—घ—ज्ञानसाधकत्वेन.

यच्चोक्तं गुरूपसदनविधिना स्वतन्त्रविचारव्यावृत्तिर्न स्यादिति—तन्न । गुरूपसदनं हि तद्विज्ञानार्थमिति ज्ञानार्थतयैव विधीयते न तु श्रवणार्थतया । तस्य च नियमविधित्वेन गुरूपसदनैकसाध्यज्ञाने साधनान्तरं स्वतन्त्रविचारादिकं व्यावृत्तमेवेति कथं न स्वतन्त्रविचारव्यावृत्तिः । न हि पश्चाद्दृष्टलोभेन कल्प्यमानं श्रवणरूपद्वारं नियमविधिसामर्थ्यं निहन्यात् । 5
अत एव व्रीहिशेषतया विधीयमानमवहननं दृष्टलोभात्तुषविमोकद्वारकतया अपेक्षत इति द्वारभूततुषविमोको न नियमविधित्वमवहन्ति ॥

यच्चोक्तं अदृष्टमेव द्वारं स्यादिति—तन्न । श्रुत्या अन्यपूर्ववर्तित्वग्रहं विनैव साधनतया बोधनात् । अन्यथा साम्ना स्तुवीतेत्यत्रापि गुणाभिधानलक्षणज्ञानविशेषात्मकस्तोत्रसाधनतया सामविधिर्न स्यात् । ऋगक्षराभि- 10
व्यक्तिद्वारत्वे उक्तरीत्या श्रुतसाधनत्वनिरोधापत्तेः । किंच अयं हि नियमविधिः; सच साक्षात्परम्परया वा यथालोकं प्राप्तस्य तथैवाप्राप्तांशपरिपूरणफलक इति न तत्रान्यथासिद्धिर्दोषः । अन्यथा तात्पर्यावधारणानुकूलचेतोवृत्तिविशेषात्मकस्य[1] त्वदभिन्नश्रवणस्यापि(?)क्लृप्तशाब्दज्ञानहेतुताकतात्पर्यावधारणद्वारकत्वे कुलालपितृवत् अन्यथासिद्धेः अदृष्टार्थताप्रसङ्गात् ॥ 15

यत्तु मतान्तरम्—श्रोतव्य इत्यत्र श्रुतैरेव वेदान्तैरात्मा ज्ञातव्य इति श्रुतेतिहासपुराणाद्यनुमिताश्रुतवेदान्तव्यावृत्त्यर्थोऽयं [2]नियमविधिरिति, तदप्यसत्—

श्रोतव्य इत्यत्र श्रुतिवाचकपदाभावात् तत्कल्पनेऽपि श्रुतिशब्देन किं रूढ्यर्थो विवक्षितः योगार्थो वा ? नाद्यः, वेदमात्रस्य श्रुतिशब्दार्थत्वेन 20
इतिहासपुराणानुमितश्रुतिव्यावृत्त्यसिद्धेः । न द्वितीयः, श्रुतिशब्दस्य श्रोत्रजन्यज्ञानविषयपरतया वाक्यमात्रश्रवणस्यैव सिद्ध्या वेदान्तवाक्यश्रवणाप्रसङ्गात् । किञ्च इतिहासपुराणानुमितश्रुतेः अश्रूयमाणत्वेनाबोधकतया आत्मज्ञानाय तत्र प्रवृत्तेरप्रसङ्गात् न तद्व्यावृत्त्यर्थोऽयं नियमविधिः ।

अत एव 'श्रोतव्यः श्रुतिवाक्येभ्यः' इति स्मृत्यनुसारेण श्रुतिवाक्यैरेव 25

---

१. त्मकत्वादभिन्न०. २. क—न्यायविधिरिति.

ज्ञातव्यः नेतिहासपुराणादिवाक्यैरिति तद्व्यावृत्त्यर्थोऽयं नियमविधिरित्यपि मतं निरस्तम् । श्रोतव्य इत्यत्र श्रुतिवाचकपदाभावात् । ननु श्रोतव्यः श्रुतिवाक्येभ्य इति स्मृत्यनुसारेण श्रुतिपदमध्याहर्तव्यम् । अन्यथा पुराणादिव्यावृत्तेरशक्यत्वादिति चेन्न । निदिध्यासनविध्यनुसारेण ध्येयात्मस्वरूपनि-
5 र्णायकप्रमाणाकाङ्क्षायां वेदवाक्यश्रवण एव तन्निर्णयाय प्रवर्तते । साङ्गवेदाध्ययनजन्यात्मस्वरूपापातप्रतीत्या तन्निर्णयाय तत्रैव प्रवृत्तेः प्राथमिकत्वात् तत्परित्यागेनाज्ञातार्थपुराणादिश्रवणे प्रवृत्तेरप्रसङ्गात् । किञ्चात्मस्वरूपनिर्णायकप्रमाणगवेषणायामपौरुषेयनित्यनिर्दुष्टवेदस्यैव निश्चितप्रमाणभावतया वेदान्तवाक्यश्रवण एव प्रवृत्तिः; न तु पौरुषेयसंभावितदोषपुराणादिश्रवणे,
10 तस्यानिश्चितप्रमाणभावतया स्वप्रामाण्यनिर्वाहकमूलश्रुतिसापेक्षतया च तत्र प्रवृत्तेरप्रसङ्गात् । तद्व्यावृत्त्यर्थं विद्यमानश्रुतिपदाध्याहारस्य[1] अन्याय्यत्वात् । वस्तुतस्तु साङ्गवेदाध्ययनजन्यापातप्रतीतिः पूर्वोत्तरभागसाधारणी;[2] श्रोतव्य इत्यादिवाक्यमपि उत्तरभागान्तर्गतम् आपातप्रतिपन्नार्थकं विचारात् प्राक् कथं निर्णायकं स्यात्, निर्णयाभावे कथं तद्विधिमूलकवेदान्त-
15 वाक्यविचारप्रवृत्तिः । तस्मादापातप्रतिपन्नार्थवेदान्तवाक्यविचारे रागत एव तन्निर्णयाय प्रवर्तत इति न विध्यपेक्षा । अन्यथा एतद्वाक्यार्थनिर्णयानन्तरं विचारे प्रवृत्तिः विचारानन्तरमेतद्वाक्यार्थनिर्णय इत्यन्योन्याश्रयः । न ह्यापातप्रतीत्यविशेषेऽपि एकत्र रागमूला अन्यत्र विधिमूला प्रवृत्तिरित्यत्र नियामकमस्ति ॥

20 एतेन रण्डागीतादिव्यावृत्तिफलकोऽयं नियमविधिरित्यपि परास्तम्[3] ॥

इतरे तु मनःप्रमाणव्यावृत्तिफलकोऽयं नियमविधिः वेदान्तैरेव ज्ञातव्य इति; तथाच मनःप्रमाणसद्भावेन ब्रह्मसाक्षात्काराय तत्रैव प्रवृत्तिस्स्यात् न त्वद्वैतवाक्यविचार इति तद्व्यावर्तनेनाद्वैतवाक्यविचारे प्रवृत्तिर्नियम्यत इत्याहुः ॥

25 तदप्ययुक्तम्—श्रोतव्य इति श्रुतिशब्दान्तर्भावस्य निरस्तत्वात् । किञ्च

१ क—हारस्य कथं निर्णायकं स्यात्, निर्णयाभावे वेदाध्ययन. २ क—पूर्वोक्ताङ्गसाधारणी. ३. ख—पास्तम्—निरस्तम्.

द्रष्टव्यः तदर्थं श्रोतव्य इति दर्शनोद्देशेन शाब्दज्ञानविधिरेव प्रतीयते नतु शब्दविधिः । ततश्च न मनोव्यावृत्तिसिद्धिः । किञ्च मनसः परमात्मसाक्षात्कारहेतुत्वासम्भवादेव तत्र प्रवृत्त्यप्रसङ्गेन तन्निवृत्त्यर्थो नियमविधिः । अन्यत्र साक्षात्कारहेतुत्वमात्रेण अत्र प्रसङ्गे अन्यत्र (न) मुख्यदर्शनहेतुत्वेन चक्षुषोऽप्यत्र प्रसङ्गे तन्निवृत्त्यर्थोऽपि नियमविधिः स्यात् ॥११॥ 5

अपरे तु नायमपूर्वविधिः, अपरोक्षवस्तुगोचरप्रमाणत्वावच्छेदेन साक्षात्कारहेतुत्वस्य विचारमात्रस्य विचार्यनिर्णयहेतुत्वस्य च प्राप्तत्वेन विचारितवेदान्तस्य निर्णयरूपब्रह्मसाक्षात्कारहेतुतायाः प्राप्तत्वात् । सहकारिवैकल्यात् कृतश्रवणस्यापि न ब्रह्मसाक्षात्कार इति नान्वयव्यभिचारः । वामदेवादेः जन्मान्तरश्रवणसम्भवात् न व्यतिरेकव्यभिचार इत्याहुः । 10

तदप्यसङ्गतम्; विचारितवेदान्तस्य परोक्षज्ञानहेतुत्वमेव, न त्वपरोक्षज्ञानहेतुत्वम् । शब्दस्य अपरोक्षज्ञानजननायोग्यत्वात् । अयोग्यत्वं च शब्दापरोक्षभङ्गे वक्ष्यामः ॥ १२ ॥

केचित्तु—ब्रह्मज्ञानार्थं वेदान्तश्रवणे प्रवृत्तस्य मध्ये मध्ये व्यापारान्तरसम्भवेन तद्व्यावृत्त्यर्थोऽयं परिसङ्ख्याविधिरिति वदन्ति; तदप्ययुक्तम्, परिसङ्ख्यानिवर्तनीयस्याभावात् । आवश्यकस्य देहयात्रानिमित्तस्य विद्योपयोगिनित्यनैमित्तिकादिव्यापारस्य च अनिवर्तनीयत्वात् । रागद्वेषादिमूलव्यापारस्य शमाद्यङ्गत्वविधानादेव निवृत्तेः । किञ्च—द्विविधो हि परिसङ्ख्याविधिः, एकस्य शेषस्य शेषिद्वयप्राप्तौ एकशेषिनिवृत्तिफलक एकः, यथा—"इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते" इति विधिः । अत्र हि एकस्य मन्त्रस्य अश्वगर्दभरशनयोः प्राप्तौ गर्दभरशनारूपशेष्यन्तरनिवृत्तिः क्रियते । अपरस्तु—एकस्मिन् शेषिणि शेषद्वयप्राप्तौ शेषान्तरनिवृत्तिफलकः–यथा–ग्रहमेधीये पञ्चमे पक्षे प्रकृतितः प्राप्तेषु प्रयाजाज्यभागादिषु प्रयाजादिनिवृत्त्यर्थः आज्यभागौ यजतीति विधिः । इह द्विविधोऽपि न सम्भवति । ब्रह्मदर्शनार्थिनः ब्रह्मणि तदन्यविषये च श्रवणस्य प्राप्त्यभावात्, परमात्मनि श्रवणव्यतिरिक्तस्य प्राप्त्यभावाच्च ।

(Margin line numbers: 15, 20, 25)

किञ्च—दर्शनानुवादेन श्रवणविधौ दर्शनसाधनव्यापारान्तरस्यैव निवृत्तिस्स्यात्, न तु अन्यविषयव्यापारमात्रस्य । अन्यविषयव्यापारो न कार्य इत्यर्थे तु लक्षणा स्यात् । न हि विधौ लक्षणा सम्भवति । अन्यथा उद्भिदा यजेतेत्यादौ मत्वर्थलक्षणया गुणविधिसम्भवेन नामत्वानुपपत्ति-
5 प्रसङ्गात् । श्रोतव्य इत्यस्य अन्यव्यापारनिवृत्तिविधायकतया श्रवणविधित्वाभावप्रसङ्गाच्च ।

न च ब्रह्मदर्शनसाधनतया अन्यव्यापारनिवृत्तिरिति वाच्यम्; अप्रसक्तान्यव्यापारनिवृत्तेरविधेयत्वात् । स्वत एवान्यव्यापाररहितस्य श्रवणादपि ब्रह्मदर्शनासिद्धिप्रसङ्गाच्च । तस्याप्रसक्तान्यव्यापारनिवृत्यसंभवात् । न च
10 व्यापाराभाव एव विधिरिति वाच्यम्; तस्यासाध्यत्वेन अविधेयत्वात् । न च ब्रह्मदर्शनार्थताविशिष्टव्यापारान्तरप्रसक्तिनिमित्तकोऽयं विधिरिति वाच्यम्; "परस्त्रीकामः प्रायश्चित्तं कुर्यात्" इतिवत् विशिष्टनिमित्तकविधित्वप्रसङ्गेन ब्रह्मज्ञानानुपयोगित्वप्रसङ्गात् । तत्र परस्त्रीकामपदवत् व्यापारान्तरप्रसक्तिबोधकपदाभावात् । तस्मात् श्रोतव्यो मन्तव्य इति अनु-
15 वाद एव न विधिरिति सिद्धम् ॥ १३ ॥

तत्फलं च निदिध्यासनम् । माध्वास्तु—श्रवणादीनां चतुर्णामपि मोक्ष एव फलमित्याहुः । तन्न—एकस्यैवाधिकारसंबन्धकल्पनोपपत्तौ सर्वेषां तत् कल्पने मानाभावात् । न च एतावच्छब्देन समुदितानां चतुर्णामपि परामर्शेन दर्शनफलसंबन्धसिद्धिरिति वाच्यम्; अस्य वाक्यस्य
20 फलवाक्यत्वाभावेन अनुवादकतया प्रयोजकत्वेनापि फलसम्बन्धोपपत्तेः । दर्शपूर्णमासवाक्ये तु स्वर्गकाम इति वाक्यस्य फलविधायकतया षण्णामपि यागानां साक्षादेव फलसंबन्धसिद्धिः । किञ्च—अत्र प्रयोजकत्वमेव विवक्षितं न साक्षात्साधकत्वं, "दुन्दुभेस्तु ग्रहणेन" इत्यादिपूर्ववाक्यनिर्दिष्टेन्द्रियनिग्रहस्यापि परामर्शात् ।

25 केचित्तु श्रवणादीनां त्रयाणां दर्शनमेव फलमित्याहुः । तदयुक्तम्—दर्शनस्यैवासम्भवेन तत्फलत्वासिद्धेः, परमात्मदर्शनस्य अशक्यत्वात् ।

अत एव मानससाक्षात्कारफलकत्वपक्षोऽपि निरस्तः । दर्शनशब्दस्य चाक्षुषज्ञानवाचकत्वेन तद्वाचकत्वाभावात् ।

अन्ये तु—पुरुषापराधरूपतात्पर्यभ्रमसंशयनिवृत्तिः फलमित्याहुः ।

तदप्ययुक्तम्; उपबृंहणस्वतन्त्रविचारादीनां भ्रमनिवृत्तौ पश्चात्कृतश्रवणस्य मोक्षाभावप्रसङ्गात् । निवृत्तस्य पुनर्निवृत्त्ययोगात् । किञ्च—दर्शनोद्देशेन हि श्रवणविधिः । तत्र श्रुतदर्शनफलकत्वसम्भवे अर्थप्राप्तपुरुषापराधनिवृत्तिफलकत्वकल्पनमन्याय्यमेव । तात्पर्यनिर्णयफलकत्वस्यापि सम्भवेन अपराधनिवृत्तिफलकत्वकल्पनायोगाच्च । अव्यवधानेन तस्यैव श्रवणसाध्यतया अन्तरङ्गत्वात् । तस्मान्निदिध्यासनमेव श्रवणमननयोः फलम् ॥

**इति श्रीवाधूलसुदर्शनगुरुविरचितायां वेदान्तविजयमङ्गलदीपिकायां श्रवणविधेयत्वभङ्गः ।**

---

## अथ शब्दापरोक्षभङ्गः ।

ब्रह्मापरोक्षहेतुत्वं वेदान्तस्यापि सङ्गतम् ।
प्रत्यक्षार्थप्रमाणानां तद्धेतुत्वप्रकल्पनात् ॥
इत्याहुर्मायिनः प्राप्तमयोग्यं तन्न शोभते ।
साक्षात्कारे च हेतुत्वमिन्द्रियाणां हि निश्चितम् ॥
तदन्येन तु शब्देन साक्षात्कारः कथं भवेत् ।
तथात्वे सर्वशब्देन तत्प्रत्यक्षप्रसङ्गतः ॥

यदाहुः—अपरोक्षवस्तुगोचरप्रमाणत्वावच्छेदेन साक्षात्कारहेतुत्वस्यान्यत्र क्लृप्तत्वेनापरोक्षब्रह्मगोचरवेदान्तस्यापि ब्रह्मसाक्षात्कारहेतुत्वं प्राप्तमेवेति ।

तदनुपपन्नम्; शब्दस्यापरोक्षज्ञानहेतुत्वासिद्धेः, तत्र तस्यायोग्यत्वात्[1] । इन्द्रियाणामेव हि साक्षात्कारहेतुत्वं लोकदृष्टम् । नन्विन्द्रियाणां साक्षात्कारहेतुत्वं नेन्द्रियत्वेन, किंत्वपरोक्षवस्तुगोचरप्रमाणत्वेन, सामान्य-

---

१. ख—ग्यत्वान्न.

तया तस्यैव तदवच्छेदकत्वात् । ब्रह्मस्वरूपं च स्वत एवापरोक्षं "यत्साक्षादपरोक्षाद्ब्रह्मे"ति श्रुतेः । तथाच तद्गोचरवेदान्तस्य तत्साक्षात्कारहेतुत्वं प्राप्तमेव । नच तादृशवह्निविषयकतया अनुमितेरपरोक्षत्वप्रसङ्ग इति वाच्यम्; इष्टापत्तेः, पर्वतं साक्षात्करोमीति अनुभवात् । वह्नेस्तु तदानीमपरोक्षत्वाभावेन न तदंशे तदनुभवः । नचैवमात्मानुमितेरपरोक्षत्वप्रसङ्गः, अपरोक्षार्थविषयकत्वस्येष्टत्वात् । घटादिसाक्षात्कारेऽपि एतदतिरिक्तसाक्षात्कारत्वासिद्धेः । नचैवमात्मानुमित्याप्यविद्यानिवृत्तिप्रसङ्गः; देहातिरिक्तानुमितिगोचरसाक्षिविषयीयज्ञानाभावात्, पूर्णब्रह्मविषयाज्ञानस्य भिन्नविषयानुमित्या निवृत्त्यसंभवात् । नचैवमपि पूर्णब्रह्मविषयानुमित्या तदज्ञाननिवृत्तिप्रसङ्गः; शुद्धे ब्रह्मणि पक्षसाध्यादिवैशिष्ट्यगोचरानुमितेरसंभवात् "तस्य तावदेव चिरं यावन्न विमोक्ष्य" इति श्रवणात् 'वेदान्तविज्ञानसुनिश्चितार्था' इत्यादिवचनाच्च श्रुतिजन्यज्ञानस्यैव मोक्षहेतुत्वप्रतिपादनाच्च । तस्य तावदित्यत्र तच्छब्दस्य निष्पन्नवेदान्तार्थज्ञानपरत्वात् । नचैवं परमात्मानुमितेरपि प्रत्यक्षत्वेन व्यवहारप्रसङ्गः, इन्द्रियजन्यत्वस्यैव तादृशव्यवहारनिमित्तत्वात्, तथाचायं प्रयोगः तत्त्वमस्यादिवाक्यजन्यज्ञानं न परोक्षं अपरोक्षार्थविषयत्वात् चाक्षुषज्ञानवत्[1] । नचेन्द्रियजन्यत्वमुपाधिः, त्वदभिमतेऽजन्यप्रत्यक्षे सुखादिप्रत्यक्षे दशमस्त्वमसीति ज्ञाने च साध्याव्यापकत्वात्, सुखादिप्रत्यक्षस्य साक्षिरूपतया तस्याजन्यत्वात् । नच जन्यत्वावच्छिन्नसाध्यव्यापकोऽयमुपाधिः, ईश्वरप्रत्यक्षे च जन्यत्वाभावात्, सुखादिप्रत्यक्षस्येन्द्रियजन्यत्वात्, दशमस्त्वमसीतिवाक्यजन्यज्ञानस्य प्रत्यक्षत्वाभावात्, न कुत्रापि साध्याव्यापकत्वमिति वाच्यम्; परोक्षत्वे इन्द्रियलिङ्गजन्यत्ववत् अपरोक्षत्वेऽपीन्द्रियजन्यत्वस्य अप्रयोजकत्वात् । तस्मात् परोक्षार्थविषयकत्वं परोक्षत्वप्रयोजकम्[1] । अत एव शब्दाजन्यत्वमपि नोपाधिः नचोक्तहेतोरप्रयोजकत्वं, तत्त्वमस्यादिवाक्यजन्यज्ञान[2]स्यापरोक्षत्वाभावे अविद्यानिवृत्त्यभावे अनिर्मोक्षप्रसङ्गा[3]दिति ।

---

१—ग-घ अपरोक्षार्थविषयकत्वं अपरोक्षत्वे प्रयोजकं । २. ख—तत्त्वमसीत्यादि. ३. ख-प्रसङ्गात्.

मैवम्; एवं सत्यपरोक्षज्ञानस्याविद्यानिवर्तकत्वं न स्यात्; अन्योन्याश्रयात्। तथाहि—घटाद्यर्थगतापरोक्ष्यं हि तदवच्छिन्नचैतन्यस्य प्रमातृचैतन्याभेद एव। तथाच तस्मिन् सति तद्विषयकत्वेन ज्ञानस्यापारोक्ष्यं तस्मिन् सत्यपरोक्षज्ञानेनाविद्यानिवृत्तेरावरणनिवृत्त्या[1] विषयावच्छिन्नचैतन्यस्य प्रमातृचैतन्यस्य अभेदे[2] अर्थापरोक्ष्यमिति। किञ्च घटपटादिषु वृत्त्यवच्छिन्नचैतन्यस्य विषयावच्छिन्नचैतन्यस्य चाभेदो दुर्वचः; निरन्तराङ्गुलिद्वयावच्छिन्नचैतन्ययोरवकुण्ठनघटपटावच्छिन्नचैतन्ययोरिव नैरन्तर्ये सत्यपि अभेदासंभवात्। किञ्च घटप्रत्यक्षतादशायां स्पर्शगोचरशाब्दज्ञानस्यापि प्रत्यक्षत्वप्रसङ्गः, अपरोक्षस्पर्शविषयकत्वात्। अज्ञायमानरसादेः प्रत्यक्षत्वप्रसङ्गश्च, रसाद्यवच्छिन्नचैतन्यस्य प्रमातृचैतन्याभिन्ने[3] चैतन्यसमानदेशतया[4] तदभिन्नत्वात्। नच घटप्रत्यक्षतादशायां आवृतस्य स्पर्शाद्यवच्छिन्नचैतन्यस्यानावृतप्रमातृचैतन्याभेदाभावान्न प्रत्यक्षतेति वाच्यम्, निर्गतान्तःकरणसमानदेशतया रसाद्यवच्छिन्नचैतन्यस्यापि[5] प्रमातृचैतन्याभेदस्यावर्जनीयत्वात्। अन्यथा घटाद्यवच्छिन्नचैतन्यस्यापि[6] तदसंभवेन घटादेरपि अप्रत्यक्षत्वप्रसङ्गात्। किञ्च घटावच्छिन्नचैतन्यस्य स्पर्शाद्यवच्छिन्नचैतन्यात् भेदे गुणगुणिनोस्तादात्म्यभङ्गप्रसङ्गः, भिन्नत्वे सति अभिन्नसत्ताकत्वस्यैव तादात्म्यरूपत्वात्। किञ्च यद्यावृतचैतन्यस्यानावृतचैतन्यात् भेदः तदा ब्रह्मण अपरोक्षत्वं न स्यात्, आवृतब्रह्मणोऽनावृतचैतन्यात् भिन्नत्वात्। प्रकृष्टप्रकाशश्चन्द्र इत्युच्चरानन्तरभाविचन्द्रदर्शनस्यापरोक्षत्वं न स्यात्। एवमनभ्यासदशापन्नजलादिज्ञानस्याप्रत्यक्षत्वप्रसङ्गः, चन्द्राद्यवच्छिन्नचैतन्यस्यावृततया प्रमातृचैतन्यात् भिन्नत्वात्। किञ्च यदि विषयावच्छिन्नचैतन्यस्य प्रमातृचैतन्याभिन्नत्वमर्थापरोक्ष्यम्, अपरोक्षार्थविषयकत्वं च ज्ञानापरोक्ष्यं, तर्हि लौकिकानां मम घटादिकं प्रत्यक्षं पटादिकं प्रत्यक्षं जातमिति व्यवहारोच्छेदप्रसङ्गः, तेषां प्रमातृचैतन्याभिन्न-

---

१. ख—निवृत्तावावरण. २. ख—प्रमातृचैतन्याभेदः अर्थापरोक्ष्यमिति. ३. ख—न्याभिन्नघटचैतन्य. ४. ख—चैतन्यतया. ५. ख—घटाद्यवच्छिन्नचैतन्यस्येव स्पर्शाद्यवच्छिन्नचैतन्यस्यापि. ६. ख—स्यापि तदसंभवेन घटादेरपि. इदं वाक्यं नास्ति.

त्वज्ञानाभावात् प्रमातृचैतन्याभिन्नवस्तुविषयकत्वज्ञानाभावाच्च। प्रत्युत ममेदमिति प्रमातृचैतन्यभिन्नत्वमेव हि ज्ञायते । नच प्रमातृचैतन्याभिन्नत्वं हि तत्तादात्म्यम्, तच्च भिन्नत्वे सत्यभिन्नसत्ताकत्वमिति न भेदज्ञानविरोध इति वाच्यम्; तथाप्यभिन्नसत्ताकत्वस्याज्ञानात् तज्ज्ञाने च घटादि-
5 साधारण्येन[1] प्रमातुः प्रतीतिप्रसङ्गात्। नन्विन्द्रियजन्यज्ञाने तद्विषये च लौकिकानां प्रत्यक्षत्वव्यवहार इति चेत्तथासति लौकिकव्यवहारमूलप्रत्यक्षपदव्युत्पत्त्या ब्रह्मण्यपि तदेव स्यात्। तथाच कथं शब्दजन्यज्ञानस्यापरोक्षत्वम् । ब्रह्मणि प्रकारान्तरेण प्रत्यक्षत्वोपपादने च प्रत्यक्षपदस्य नानार्थत्वप्रसङ्गः। किञ्चैवं धर्मादेरपि अपरोक्षत्वप्रसङ्गः । नच प्रमातृचैतन्याभि-
10 न्नत्वे सति उद्भूतत्वमेव प्रत्यक्षत्वमिति वाच्यम्, तथाच सति धर्मादेरीश्वरं प्रत्यप्रत्यक्षत्वप्रसङ्गात् । नचेश्वरं प्रत्यद्भूतमेव धर्मादिकमिति वाच्यम्, तं प्रत्युद्भूतत्वं हि तं प्रत्यनावृतत्वं वा तत्प्रत्यक्षविषयत्वं वा तद्योग्यतावच्छेदकत्वं वा। नाद्यः, उद्भूतविशेषणवैयर्थ्यात्। धर्मादेरनावृतत्वस्यापि प्रमातृचैतन्याभेदेनावर्जनीयत्वात् । न द्वितीयः, ज्ञानापरोक्ष्यस्यार्थापरोक्ष्या-
15 धीनत्वं अर्थापरोक्ष्यस्य च ज्ञानापरोक्ष्याधीनत्वमित्यन्योन्याश्रयात्, ब्रह्मणः प्रत्यक्षविषयत्वाभावप्रसङ्गाच्च । न तृतीयः; अस्यैव योग्यतावच्छेदकतया आत्माश्रयत्वात्, प्रमातृचैतन्यभेदस्यैव योग्यतावच्छेदकतया धर्मादावपि तत्सत्त्वाच्च । किञ्च अपरोक्षार्थविषयत्वेन ज्ञानस्यापरोक्षत्वे तद्विषयकानुमितेरप्यपरोक्षत्वप्रसङ्गः ॥

20 अत्र यदुक्तं पर्वतं साक्षात्करोमीत्यनुभवेन तादृशानुमितेरप्यापारोक्ष्य[2]मिष्टमेवेति, तन्न; अनुमितिपूर्वकालीनपर्वतप्रत्यक्षस्यैव[3] तादृशानुभवगोचरतया अनुमितेस्तदगोचरत्वात् । अन्यथा भूतले सर्पं घटे तद्व्याप्यं च पश्यतः घटे सर्पानुमितौ सर्पं साक्षात्करोमीत्यनुभवप्रसङ्गो दुर्वारः । किञ्च एकं शङ्खं श्वेतत्वेन शङ्खान्तरं पीतत्वेन श्वैत्यव्याप्यतया[4] च पश्यतः
25 श्वैत्यानुमितौ सत्यां तत्र श्वैत्यं साक्षात्करोमीत्यनुभवप्रसङ्गः । उभयत्रापि

---

१. ख—घटादिसामानाधिकरण्येन. २. ख—त्वनुभवेन अनुमिते. ३. ख—कालीनपर्वतप्रत्यक्ष. ४. क—श्वैत्यव्याप्यव्याप्यवत्तया.

सर्पश्चैत्यावच्छिन्नचैतन्यस्य प्रमातृचैतन्याभेदात् । किञ्चैवमात्मानुमितेरपि अपरोक्षत्वप्रसङ्गः । अत्र यदुक्तं शुद्धात्मनि पक्षसाध्यादिवैशिष्ट्यानुमितिर्न संभवतीति, तन्न; वेदान्ततात्पर्यगोचरं ब्रह्म वेदान्तवाक्यस्थपदशक्यं नेत्यवाच्यत्वानुमानस्य ब्रह्मविषयकत्वोपपादनेन स्ववचनविरोधात् । व्यावहारिकपक्षलिङ्गवैशिष्ट्यज्ञानस्य ब्रह्मस्वरूपभूतावाच्यत्वानुमितेश्च संभवेन 5 शुद्धेऽप्यात्मनि उक्तानुमित्यविरोधाच्च । किञ्च निदिध्यासनस्यापरोक्षब्रह्मविषयकत्वेनापरोक्षत्वप्रसङ्गः; तत्र चेष्टापत्तौ अविद्यानिवर्तकत्वप्रसङ्गः; असंभावनादिप्रतिबन्धकानां निवृत्तत्वात् । नच तस्य ज्ञानत्वाभावात् अनिवर्तकत्वमिति वाच्यम्; ज्ञानत्वाभावेऽप्यपरोक्षत्वस्य निवर्तकतावच्छेदकस्य सत्त्वात्, तत्र च ज्ञानत्वप्रवेशे गौरवात्, तस्य ज्ञानत्व- 10 स्यापि समर्थितत्वाच्च ।

यदुक्तं श्रुतिजन्यज्ञानस्यैवाविद्यानिवर्तकतया न निदिध्यासनादेरविद्यानिवर्तकत्वप्रसङ्ग इति, तन्न; तथा सति श्रवणस्याविद्यानिवर्तकत्वप्रसङ्गात् । किंच ज्ञाननिवर्त्यत्वान्यथानुपपत्त्या मिथ्यात्वकल्पनं न स्यात् । अधिष्ठानसाक्षात्कारनिवर्त्यत्वस्यैव मिथ्यात्वप्रयोजकतया शुक्तिरजतादौ 15 दृष्टत्वात् श्रुतिजन्यज्ञाननिवर्त्यत्वे तदभावात् । नच ज्ञाननिवर्त्यत्वमेव मिथ्यात्वप्रयोजकं, तच्च प्रपञ्चशुक्तिरजतादिसाधारणमिति वाच्यम्; तथा सति पुरुषोत्तमदर्शननिवर्त्यमहापातकादेरपि मिथ्यात्वप्रसङ्गात् । तस्मात् येनकेनचिद्रूपेण ज्ञाननिवर्त्यत्वं मिथ्यात्वप्रयोजकमिति वक्तव्यम् । तद्रूपं चाधिष्ठानसाक्षात्कारत्वमेव, तेन रूपेण ज्ञाननिवर्त्यत्वस्यैव 20 मिथ्यात्वप्रयोजकतया शुक्तिरजतादौ दृष्टत्वात् । तथाच श्रवणादीनामपि परमात्मसाक्षात्काररूपतया तन्निवर्त्यत्वा[1]संभवे सत्यत्वमेव न मिथ्यात्वम् । वस्तुतस्तु श्रवणादीनां चतुर्णामप्यपरोक्षब्रह्मविषयत्वाविशेषेणापरोक्षतया एकेनैव अविद्यानिवृत्तिसंभवे चतुर्णामपि विधानं व्यर्थमेव । नचापरोक्षार्थविषयत्वाविशेषेऽपि किञ्चिज्ज्ञानमपरोक्षं किञ्चिन्नेति नियामकं विना वक्तुं 25 शक्यम्, न वा परोक्षत्वाविशेषेऽपि किञ्चिन्निवर्तकं किञ्चिन्नेत्यपि वक्तुं

१. ख–घ–त्वाभावे सत्यत्वमेव.

शक्यम् । एवंच तस्य तावदेव चिरं वेदान्तविज्ञानसुनिश्चितार्था इत्यपि न विरुद्धम्, चतुर्णामपि श्रवणादीनां वेदान्तमूलकत्वात् । तस्मादपरोक्षार्थविषयकत्वं न ज्ञानापरोक्ष्यं किन्तु इन्द्रियजन्यत्वादिकमन्यदेव । तच्च न तत्त्वमस्यादिवाक्यजन्यज्ञानस्य[1]ेति कथं तदपरोक्षम् ? कथं वा तेनावि-
5 द्यानिवृत्तिः ॥

ननु ब्रह्मापरोक्षनिर्णय एवाविद्यानिवर्तकः । सच श्रवणमनननिदिध्यासनसहकारादेव । तथाच श्रवणादेरपरोक्षत्वेऽपि नाविद्यानिवर्तकत्वम् । किन्तु तत्सहकृतवेदान्तजन्यनिर्णयरूपापरोक्षज्ञानस्यैवेति चेन्न; तथापि श्रवणमनननिदिध्यासनानन्तरभाविपरमात्मस्मरणस्याविद्यानिवर्त-
10 कत्वप्रसङ्गात् । श्रवणमननयोर्निर्णयरूपत्वाभावेऽपि निदिध्यासनस्य तथात्वेन तस्याविद्यानिवर्तकत्वप्रसङ्गाच्च । नच तस्य तावदेव चिरमिति वेदान्तविज्ञानेति च वेदान्तवाक्यजन्यज्ञानस्यैव मोक्षसाधनत्वप्रतिपादनात् कथं तस्याविद्यानिवर्तकत्वमिति वाच्यम्, तस्य वेदान्तवाक्यार्थज्ञानस्य मोक्षोपयोगमात्रपरत्वेन साक्षान्मोक्षसाधनतापरत्वा[2]संभवात् । तत्र [3]तावदेव
15 चिरमिति विलम्बश्रवणेन वेदान्तार्थज्ञानस्य मोक्षोपयोगमात्रम्, अन्यस्यैव कस्यचिन्मोक्षसाधनत्वं हि गम्यते । नच तत्त्वमस्यादि[4]वाक्यार्थज्ञानं मोक्षस्य साधनमिति स्मृत्या वाक्यार्थज्ञानस्यैव मोक्षसाधनत्वं गम्यत इति वाच्यम्; साधनशब्दस्य प्रयोजकमात्रेऽपि लोके प्रयुज्यमानतया तस्य प्रयोजकपरत्वेनाप्युपपत्तेः । [5]तावच्चिरमिति विलम्बश्रुत्यनुरोधेन तत्परत्व-
20 स्यैव युक्तत्वाच्च । अस्तु वा साक्षात्साधनतापरत्वं, [6]तथापि तत्त्वमस्यादिवाक्यार्थज्ञानस्यापरोक्षत्वेनाविद्यानिवर्तकत्वं लोकत एव प्राप्तमिति नियमविधिः स्यात् । तथाच शक्तिविशेषसापेक्षापरोक्षज्ञाननिवर्त्यत्वेन प्रपञ्चस्य मिथ्यात्वाभावप्रसङ्गः । शक्तिविशेषानपेक्षज्ञाननिवर्त्यत्वस्यैव मिथ्यात्वेन लोके दृष्टत्वात् । किंचायमनुवादः न विधिः; प्राप्तत्वात्, अपरोक्ष-
25 ज्ञानस्याविद्यानिवर्तकत्वेन लोके दृष्टत्वात् । नापि नियमविधिः; तव्या-

१. ख—ज्ञानस्यैवेति. २. ख—ग—घ—परत्वाभावात् ३. ख—तावदेव चिर. ४. ख—वाक्योत्थज्ञान. ५. ख—तस्य तावदेव चिरं ६. ख—अथापि.

दिप्रत्ययाभावात् । एवं च परमात्मानुमित्यादिना अविद्यानिवृत्तिर्दुर्वारा । किञ्च यदि ब्रह्मापरोक्षं स्यात् तदा सदादिशब्दप्रवृत्तिनिमित्तबाधायोग्यत्वादिवत् प्रत्यक्षपदप्रवृत्तिनिमित्तं किञ्चित्तावद्वाच्यम्, तच्च दुर्निरूपमेव । किञ्च ब्रह्मणि यदि प्रत्यक्षत्वं स्यात् तदा सत्तादिव न्निष्प्रतियोगिकं स्यात् । सप्रतियोगिकत्वं हि प्रत्यक्षत्वं लोके दृष्टम् । नच तत्प्रमातृचैतन्याभिन्नत्वमापरोक्ष्यमिति न निष्प्रतियोगिकत्वप्रसङ्ग इति वाच्यम्; तथासति सर्वेषामपि ब्रह्म प्रत्यक्षमिति व्यवहारप्रसङ्गात्, ब्रह्मणः सर्वप्रमातृचैतन्याभिन्नत्वात् । घटादौ प्रत्यक्षत्वव्यवहाराभावप्रसङ्गाच्च, तत्र प्रमातृचैतन्याभिन्नत्वाभावात् । प्रत्यक्षे घटः पट इति सर्वेषां व्यवहारदर्शनात् । नच तत्प्रमातृचैतन्याभिन्नचैतन्यतादात्म्यमपरोक्षत्वमिति वाच्यम्, तथासति प्रत्यक्षपदस्य नानार्थत्वप्रसङ्गात् । प्रत्यक्षज्ञानविषयत्वमेव निमित्तीकृत्य प्रत्यक्षपदप्रवृत्तिसंभवे तदयोगात् । नच साक्षादपरोक्षात् ब्रह्मेति ब्रह्मणः प्रत्यक्षत्वप्रतिपादकश्रुतिविरोध इति वाच्यम्, तस्यापरोक्षज्ञानसमानाकारज्ञानविषयतापरत्वात् । अन्यथा आत्मनि खल्वरे दृष्ट इति श्रुत्यनुरोधेन ब्रह्मणि दृष्टत्वप्रसङ्गश्च । तत्र चेष्टापत्तौ दृष्टब्रह्मविषयत्वेन तत्त्वमस्यादिवाक्यजन्यज्ञानस्य चाक्षुषत्वप्रसङ्गो दुष्परिहरः, दृष्टविषयकज्ञानस्यैव चाक्षुषत्वात् । यदि चक्षुर्जन्यज्ञानविषयत्वं दृष्टत्वं ब्रह्मण्यसंभवीति मन्यसे तदेन्द्रियजन्यज्ञानविषयत्वं ब्रह्मण्यसंभवीति कुतो न मन्यसे । किञ्चापरोक्षत्वं किं धर्मः, उत स्वरूपम्, अथ परोक्षव्यावृत्तिः ? । आद्ये ब्रह्मणः सविशेषत्वप्रसङ्गः । द्वितीये स्वरूपमात्रविषयकज्ञानस्य कथमापरोक्ष्यम् ? अतिप्रसङ्गात् । तृतीये च व्यावृत्तेः स्वरूपत्वे तदतिरिक्तत्वे चोक्तदोषप्रसङ्गः । नच परोक्षव्यावृत्तस्वरूपविषयकत्वमेव शाब्दज्ञानापरोक्ष्यप्रयोजकमिति वाच्यम्; परोक्षत्वविशिष्टान्यस्वरूपविषयत्वापेक्षया लाघवेनापरो-

---

४. ख—तावदुवीच्यं. ५. ख-ग—योगिकं हि. १. क—पदमिति. २. ख—भिन्नचेतनतादा. ३. ख—विषयत्वं चाक्षुषत्वं ब्रह्म. ४. ख-ज्ञानविषयत्वं प्रत्यक्षत्वं ब्रह्म. ५. ख—व्यावृत्तिस्वरूप. ६. ख—शब्दज्ञानापरोक्षत्वप्रयोजक. ७. मात्राविषयस्य कथं (शो).

क्षत्वविशिष्टविषयकत्वस्यैव तत्प्रयोजकत्वात् । तस्य ब्रह्मज्ञाने अभावात् कथमापरोक्ष्यम् । किञ्च घटादिज्ञानस्यापरोक्षत्वाभावप्रसङ्गः । घटादेरपरोक्षत्वाभावात् प्रमातृचैतन्यभिन्नत्वात् । नच प्रमातृचैतन्याभिन्नचैतन्यतादात्म्यापन्नार्थविषयकत्वं घटादिज्ञानस्यापरोक्षत्वं, चैतन्याध्यस्तत्वेन घटा-
5 देस्तत्तादात्म्यापन्नत्वादिति वाच्यम्; तथा सति चैतन्यांशे चैतन्यज्ञानस्यापरोक्षत्वाभावापत्तेः । चैतन्यस्य तत्तादात्म्यासंभवेन तद्विषयकत्वाभावात् । नच तत्रापरोक्षार्थविषयकत्वमेवापरोक्षत्वं, घटादिज्ञाने तु तत्तादात्म्यापन्नार्थविषयकत्वमापरोक्ष्यमिति वाच्यम्; तथासत्यननुगमेन ज्ञाने सर्वत्रापरोक्ष्यबुद्धिव्यवहारयोरनुगतयोरभावप्रसङ्गात् । तस्मान्नार्थ-
10 प्रयुक्तं ज्ञानापरोक्ष्यम्, किन्तु ज्ञानप्रयुक्तमेवार्थापरोक्ष्यम् ॥

नन्वेवं सति सामान्यप्रत्यासत्तिजन्यप्रत्यक्षविषयत्वेन परमाण्वादेः काशीस्थपदार्थस्य च प्रत्यक्षत्वव्यवहारप्रसंगः, अन्धस्य शाब्दरूपादिज्ञानमनुभवतः रूपं प्रत्यक्षमिति व्यवहारप्रसङ्गश्च, ज्ञानप्रत्यासत्तिजन्यमानसप्रत्यक्षविषयत्वाद्रूपादेरिति चेन्न; लौकिकप्रत्यासत्तिजन्यप्रत्यक्षवि-
15 षयत्वस्यैव लौकिकानां प्रत्यक्षत्वव्यवहारनिमित्तत्वात् । परीक्षकाणां तूक्तस्थले सर्वत्र प्रत्यक्षव्यवहारो भवत्येव । अथवा प्रत्यक्षज्ञानविषयत्वमेव प्रत्यक्षत्वव्यवहारनिमित्तम् । नच लौकिकानामप्युक्तस्थले व्यवहारप्रसङ्गः; तेषां तदज्ञानादेव तद्यवहाराभावात् । तदज्ञानं चालौकिकप्रत्यासत्त्यपरिज्ञानात्, ज्ञाने वा व्यञ्जकाभावात् व्यवहाराभावः । व्यञ्जकत्वं च लौकिक-
20 प्रत्यासत्तिजन्यत्वमिति न दोषः । नचैवं सति रजतभ्रमे प्रत्यक्षत्वव्यवहाराभावप्रसङ्गः, लौकिकप्रत्यासत्तिजन्यत्वस्य व्यञ्जकत्वस्याभावादिति वाच्यम्; तत्र व्यञ्जकान्तरस्य दोषजन्यत्वादेः संभवात् । नचाननुगमः; प्रत्यक्षप्रमायां लौकिकप्रत्यासत्तिजन्यत्वं भ्रमे तु दोषजन्यत्वमित्यनुगमात् । नचैवं सोऽयं दण्डीति प्रत्यभिज्ञानभ्रमे प्रत्यक्षत्वव्यवहारप्र-
25 सङ्गः; अभेदांशे तद्यवहारस्येष्टत्वात्, दण्डांशे तु दोषजन्यत्वाभावात् ।

१. ख—घटादेस्तादात्म्याप. २. ख—चैतन्यज्ञानस्यापरोक्ष. त्म्यापन्नार्थविषयकत्वमापरोक्ष्यमितिवाच्यं. (शो) १. क—प्रत्यक्षासक्ता?. २. ख—व्यञ्जकरूपं च.

ञ्च यदि प्रत्यक्षज्ञानविषयत्वेऽपि प्रत्यक्षव्यवहाराभावादतिरिक्तमेव प्रत्य-
त्वमर्थगतमङ्गीक्रियते, तदा चाक्षुषत्वमपि तथैव स्यात् । दण्डचयमा-
दिति चक्षुर्जन्यज्ञानविषये दण्डे चाक्षुषत्वव्यवहाराभावात् । एवमनुमेय-
मपि अनुमितिविषयत्वादन्यदेवार्थगतं स्यात् । अनुमितिविषयपर्वतादौ
नुमिनोमीति व्यवहाराभावात् । तस्मात् प्रत्यक्षज्ञानविषयत्वमेवार्थापरोक्ष्यं 5
ानापरोक्ष्यं तु जातिविशेषः अतिशयविशेषो वा नित्यज्ञानसाधारणः ।

अनुमानमप्ययुक्तम् । तत्र न परोक्षमिति साध्ये परोक्षत्वाभावः प्रमातृ-
तन्यभिन्नार्थगोचरत्वाभावो वा प्रमातृचैतन्यतादात्म्यानापन्नार्थगोचर-
ाभावो वा । नाद्यः, घटादिसाक्षात्कारे व्यभिचारात्, घटादेः प्रमातृ-
ातन्यभिन्नत्वात् । न द्वितीयः; ब्रह्मणि भेदगर्भब्रह्मतादात्म्याभावेन तादा- 10
म्यानापन्नब्रह्मगोचरत्वेन तत्त्वमस्यादिवाक्यजन्यज्ञाने बाधापत्तेः । व्याव-
ारिकभेदाङ्गीकारेऽपि तयोर्भिन्नसत्ताकत्वेनाभिन्नसत्ताकत्वरूपतादात्म्या-
ावात् दण्ड्ययमासीदिति ज्ञाने व्यभिचाराच्च ॥

यदुक्तं ब्रह्मणः सर्वप्रमातृजन्याभिन्नत्वेनापरोक्षत्वमिति तदयुक्तम्[1];
ार्वप्रमातॄणामावृतत्वेन तदभिन्नत्वायोगात् । आवृतेनाप्यभेदे घटसाक्षा- 15
त्कारदशायां रसादेरपि प्रत्यक्षत्वापत्तेः । तस्मान्नानुमानेनापि तत्त्वमस्या-
दिवाक्यजन्यज्ञानस्यापरोक्षत्वसिद्धिरित्यलमधिकेन ॥

इतरे तु अपरोक्षार्थविषयकत्वं यदि ज्ञानस्यापरोक्ष्यं तदा स्वरूपज्ञाने
स्वसुखापरोक्षज्ञाने चाव्याप्तिः; स्वप्रकाशसुखापरोक्षरूपचैतन्यस्यापरोक्षार्थ-
चैतन्यविषयकत्वाभावात् । किन्तु स्वव्यवहारानुकूलचैतन्यादिभेदोऽर्था- 20
परोक्ष्यं तत्तदर्थव्यवहारानुकूलचैतन्यस्य तत्तदर्थाभेदो ज्ञानापरोक्ष्यम् ।
इदं च चैतन्यस्यैव धर्मो नान्तःकरणवृत्तेः । इदंच ज्ञानापरोक्ष्यं सुखा-
दिप्रकाशात्मकसाक्षिणि स्वरूपसुखप्रकाशरूपचैतन्ये चास्तीति नोभयत्रा-
व्याप्तिः । नचैवं वृत्तावापरोक्षव्यवहारविरोधः; तस्य तदवच्छिन्नचैत-
न्यविषयत्वात् । ननु उक्तमर्थापरोक्ष्यं ज्ञानापरोक्ष्यं च हृदयादिगोचर- 25

---

१. ख—सर्वप्रमातृचैतन्याभिन्न.

शाब्दज्ञानविषये हृदयादौ तद्गोचरशाब्दज्ञाने चाप्रतिप्रसक्तम् । तत्र दैवाद्वृत्तिविषयसंसर्गसत्त्वेन वृत्त्यवच्छिन्नविषयावच्छिन्नचैतन्ययोरभेदादिति चेन्न; परोक्षवृत्तेरज्ञानानिवर्तकत्वेन हृदयाद्यवच्छिन्नचैतन्यगताज्ञानस्य तद्गोचरशाब्दज्ञानेनानिवृत्त्या आवृतत्वेन तेन वृत्त्यवच्छिन्नचैतन्याभेदासं-
5 भवात् । एवंच यं प्रति यदज्ञानमावारकं तन्निवृत्तावेव तदवच्छिन्नचैतन्याभेदः देवदत्तस्य घटाकारवृत्त्या घटाज्ञाननिवृत्तौ तद्वृत्त्यवच्छिन्नघटावच्छिन्नचैतन्याभेद इति देवदत्तस्य घटज्ञानमपरोक्षम् । एवं यज्ञदत्तस्येति द्रष्टव्यम् ॥

नन्वेवं सति घटापरोक्षज्ञानस्य घटाज्ञाननिवर्तकत्वानुपपत्तिः, वृत्त्यव-
10 च्छिन्नविषयावच्छिन्नचैतन्याभेदलक्षणापरोक्ष्यस्याज्ञाननिवृत्तिप्रयोज्यत्वेन तत्प्रयोजकत्वायोगादिति चेन्न; यज्ज्ञानमुत्पद्यमानं सत् स्वविषयसंसृष्टमेवोत्पद्यते तदेवाज्ञाननिवर्तकं ऐन्द्रियिकज्ञानं च स्वकारणविशेषमहिम्ना स्वविषयसंसृष्टमेवोत्पद्यते । अनुमित्यादिकं तु न तथा; कारणविशेषाभावात्, विशेषस्य च फलबलकल्प्यत्वात् । एवं चापरोक्ष्यस्या-
15 विद्यानिवृत्तिप्रयोज्यत्वेऽपि तदाश्रयज्ञानस्याज्ञाननिवर्तकत्वमविरुद्धम् । एवं तत्त्वमस्यादिवाक्यादुत्पद्यमानं ज्ञानं ब्रह्मसंसृष्टमेवोत्पद्यते । ब्रह्मणः सर्वोपादानत्वेन वृत्त्युपादानतया वृत्तेस्तत्संसृष्टत्वात् । तच्च ब्रह्माज्ञानं निवर्तयति । तन्निवृत्तौ च तदभेदेनापरोक्षं[1] च ॥

नन्वेवं श्रवणस्यापि ब्रह्मसंसृष्टत्वेन ब्रह्माज्ञाननिवर्तकत्वप्रसङ्ग इति
20 चेन्न; चित्तविक्षेपादिप्रतिबन्धेन तदप्रसङ्गात् । तदभावश्च मनननिदिध्यासनाभ्यामेवेति न कश्चिद्दोष इत्याहुः ॥

तदयुक्तम् । उभयथा आपरोक्ष्यस्याप्यसंभवात् । न तावदर्थापरोक्ष्यं, घटादेरपरोक्षत्वाभावप्रसङ्गात्, तस्य तद्व्यवहारानुकूलचैतन्येनाभेदायोगात्, आवृतानावृतयोस्तदसंभवात् । नापि ज्ञानापरोक्ष्यं, मनो न प्रमाणमिति
25 शाब्दज्ञानेऽतिव्याप्तेः । किञ्च यदि तत्तदर्थव्यवहारानुकूलचैतन्भेयादः

१. ख—तदभेदेन परोक्षमपरोक्षं च.

अर्थापरोक्ष्यं तदा सर्वस्य सर्वं सर्वदा अपरोक्षं स्यात्, सर्वव्यवहारानुकूलेन सर्वाधिष्ठानभूतचैतन्येन सर्वस्याप्यभिन्नत्वात्। नच तत्कर्तृकव्यवहारासाधारणानुकूलचैतन्याभेदः तं प्रत्यापरोक्ष्यमिति वाच्यम्; एवमपि स्वाश्रयं प्रति धर्मादेः सदा अपरोक्षत्वप्रसङ्गात्। तदाश्रयप्रमातृचैतन्यासाधारणत्वात्। नच तत्तदर्थमात्रव्यवहारानुकूलत्वं विवक्षितमिति वाच्यम्; 5
तथासति घटादावसंभवापत्तेः। घटादिप्रकाशस्य स्वावच्छेदकवृत्तिव्यवहारहेतुत्वेन घटमात्रव्यवहारहेतुत्वाभावात्। स्वरूपप्रकाशस्याविद्यादिव्यवहारहेतुत्वेन स्वरूपमात्रव्यवहारहेतुत्वाभावात् स्वस्वरूपप्रकाशस्य अपरोक्षत्वाभावप्रसङ्गाच्च। किञ्च घटव्यवहारानुकूलघटाधिष्ठानचैतन्यस्य नानापुरुषवृत्त्यवच्छेदेन नानापुरुषव्यवहारहेतुतया असाधारणहेतुत्वाभावेन घटादाव- 10
परोक्षत्वासंभवः। नच वृत्तिभेदेन तदवच्छिन्नचैतन्यभेद इति वाच्यम्; एकदेशस्थत्वेन तयोर्भेदासंभवात्। अन्यथा घटतद्वृत्त्यवच्छिन्नयोः भेदप्रसङ्गात्। नच तद्व्यवहारानुकूलानावृतचैतन्याभेदः अर्थापरोक्ष्यमिति न सर्वदा सर्वेषामपरोक्षत्वप्रसङ्ग इति वाच्यम्; घटप्रत्यक्षदशायां रसादेरपि अपरोक्षत्वप्रसङ्गात्। घटावच्छिन्नचैतन्यस्य घटज्ञानेन घटाज्ञाननिवृ- 15
त्त्यानावृतत्वात्। नच घटावच्छिन्नचैतन्यस्यानावृतत्वेऽपि रसाद्यवच्छिन्नचैतन्यमावृतमेव तयोर्भेदादिति वाच्यम्; एकदेशस्थत्वेन तयोर्भेदकत्वासंभवात्। यदि च घटावच्छिन्नचैतन्याद्रसावच्छिन्नचैतन्यं भिद्येत, तदा आवरणकल्पना निष्फला स्यात्। घटाकारवृत्त्या घटावच्छिन्नचैतन्यस्य प्रमातृचैतन्याभेदेन तं प्रति घटभानेऽपि रसावच्छिन्नचैतन्यस्य ततो 20
भिन्नत्वेन प्रमातृचैतन्याभेदाभावेन रसाद्यप्रकाशोपपत्तौ आवरणकल्पनावैयर्थ्यात्। ननु घटज्ञानदशायां रसादेर्नापरोक्ष्यम्, आपरोक्ष्यं हि न प्रमातृचैतन्याभेदः, येन रसावच्छिन्नचैतन्यस्य घटावच्छिन्नचैतन्याभेदेन प्रमातृचैतन्याभिन्नतया रसादेरापरोक्ष्यं स्यात्, किन्तु स्वावच्छिन्नावरणशून्यचैतन्याभेदः अर्थापरोक्ष्यम्। एवंच घटसाक्षात्कारेण घटावरणनिवृ- 25
त्तावपि रसाद्यावरणानिवृत्तेः न रसादेरापरोक्ष्यम्। घटरसादेः भिन्नभिन्ना-

ज्ञानविषयतावच्छेदकत्वादिति चेन्न; तथासति ब्रह्मणः सर्वदा आपरोक्ष्य-
प्रसङ्गात्। तस्याज्ञानविषयतया तद्विषयतानवच्छेदकत्वात्। वस्तुतो
ब्रह्मण्यापरोक्ष्यं न स्यात्, तदवच्छिन्नावरणाप्रसिद्धेः। शुक्तिरजते सुखादौ
चापरोक्षत्वाभावप्रसङ्गाच्च। किञ्चावरणशून्यचैतन्याभेद इत्यत्र सर्वपुरु-
5 षापेक्षया आवरणशून्यत्वं विवक्षितम्, यत्किञ्चित्पुरुषापेक्षया वा। नाद्यः;
सर्वपुरुषाणां एकविषयज्ञानाभावेन सर्वावरणशून्यत्वासंभवात्। न द्वितीयः;
देवदत्तस्य [1]घटसाक्षात्कारदशायां रसादिमात्रं जानानं यज्ञदत्तं प्रति घटादेः
प्रत्यक्षत्वप्रसङ्गात्। तं प्रत्यावरणशून्यत्वविवक्षायां ईश्वरं प्रति किमपि
प्रत्यक्षं न स्यात्, तं प्रत्यावरणाप्रसिद्धेः, तं प्रत्यावरणावच्छेदकत्वाभावत्वस्यैव
10 लाघवेन तं प्रत्यपरोक्षत्वरूपत्वसंभवाच्च। किञ्च घटादौ [2]प्रकाशमानचैत-
न्याभेदस्य रसादावपि सत्त्वेन तत्प्रत्यक्षत्वप्रसङ्गवारणाय चैतन्यस्यावरणं
कल्प्यते। तथाच [1]चैतन्यस्यावृतत्वेनाप्रकाशमानतया घटादिप्रकाशोऽपि
न स्यात्। नहि रसादिज्ञाने घटोऽवच्छेदको न भवतीत्येतावन्मात्रेणाप्रका-
शमानचैतन्यस्य [2]प्रकाशो भवतीति तत्र तस्यासामर्थ्यात्। तथाचाधि-
15 ष्ठानचैतन्यस्य प्रकाशे रसादेरपि प्रकाशापत्तिः, अप्रकाशमानत्वे घटस्यापि
अप्रकाशापत्तिः इत्युभयतस्पाशा रज्जुरनिवार्या। किञ्च ईश्वरं प्रति
जीवस्य अपरोक्षत्वाभावप्रसङ्गः, जीवस्यावृततया तदयोगात्। नच यं
प्रत्यज्ञानमावरकं तं प्रत्येवावृतस्य भेदापादकं, [3]ईश्वरं प्रति त्वज्ञानं नावा-
रकमिति न जीवभेदापादकमिति वाच्यम्; तथासति ब्रह्मणो जीवाभि-
20 न्नतया जीवं प्रत्यक्षपरोक्षत्वप्रसङ्गात्। नहि जीवाभेदो ब्रह्मणि न जीवे
ब्रह्माभेद इति वक्तुं शक्यं, बिम्बप्रतिबिम्बयोर्द्वयोर्भेदादर्शनात्॥

ननु तं प्रत्यावृतत्वविशिष्टभेदाभावस्तं प्रत्यापरोक्ष्यं, ईश्वरं प्रति जीव-
स्यावृतत्वाभावेन विशिष्टाभावसत्वात् ईश्वरं प्रति जीवस्यापरोक्ष्यं जीवं प्रति

---

१. क—घटसाक्षात्कारात् न रसादि. २. ख—प्रकाशमाने चैतन्याभेदस्य.
25 १. क—चैतन्यावृतत्वेनाप्र. २. क—प्रकाशमानो. २. क—घ–तदभेदायोगात्.
न च यंप्रत्यक्षज्ञानमावारकं. ३. सर्वत्र कोशेषु—"ईश्वरं प्रत्यतित्वज्ञानं" इत्येवास्ति-
× इतिचेन्न.

त्वीश्वरस्यावृतत्वविशिष्टतया तद्भेदस्यैव सत्त्वान्न जीवं प्रतीश्वरस्यापरोक्ष्य-
मिति चेत् तथासति ईश्वरं प्रति कस्यापि प्रत्यक्षत्वं न स्यात्, ईश्वरं
प्रत्यावृतत्वस्याप्रसिद्धतया तद्विशिष्टभेदाभावासंभवात्, आवृतत्वाभावमा-
त्रस्यैवापरोक्ष्यरूपत्वसंभवाच्च । नच तदपि, जडस्यावरणासंभवेनानावृतत्वस्य
सर्वदा सत्त्वेन सर्वदा अपरोक्षत्वप्रसङ्गात्, अनावृतचैतन्याभेदविवक्षायां 5
अनवधारणज्ञानविषयजडादावव्याप्तेः ॥

यदुक्तं यज्ज्ञानमुत्पद्यमानं स्वविषयसंसृष्टमेवोत्पद्यते तदेवाज्ञाननिवर्तकं
ऐन्द्रियकज्ञानं च तथेति तदज्ञाननिवर्तकम् । एवं शब्दादुत्पद्यमानमपि
ब्रह्मज्ञानं सर्वोपादानभूतब्रह्मसंसृष्टमेवोत्पद्यत इति तदज्ञाननिवर्तकमिति ॥

तदप्ययुक्तम्—संसृष्टपदार्थानिर्वचनात् । कोऽयं संसर्गः विषय- 10
विषयिभावो वा उपादानोपादेयभावो वा अन्यो वा । नाद्यः; अनुमित्यादे-
रपि अज्ञाननिवर्तकत्वप्रसङ्गात् । न द्वितीयः; घटादिज्ञानस्याज्ञाननि-
वर्तकत्वाभावप्रसङ्गात्, घटतज्ज्ञानयोरुपादानोपादेयभावाभावात्, आत्मा-
नुमितेरज्ञाननिवर्तकत्वप्रसङ्गाच्च । शाब्दज्ञानवत्तस्यापि ब्रह्मसंसृष्टत्वात् ।
न तृतीयः; तस्यानिर्वचनात् । नच स्वरूपसंबन्धविशेष एव स इति 15
वाच्यम्; तथासति ज्ञानविशेषस्यैवाज्ञाननिवर्तकत्वसंभवे क्लृप्तसंबन्धा-
तिरिक्तस्वरूपसंबन्धं कल्पयित्वा तत्र विशेषकल्पनावैयर्थ्यात् । ननु उपा-
दानोपादेयभाव एव विवक्षितः । नच घटादिज्ञानस्यानिवर्तकत्वप्रसङ्गः;
तस्य घटावच्छिन्नचैतन्यविषयकत्वेन चैतन्यस्य[1] तदुपादानतया तदप्रसङ्गा-
दितिचेन्न, तथासत्यनुमित्यादेरपि अज्ञाननिवर्तकत्वप्रसङ्गात् । नियाम- 20
काभावेन तस्यापि चैतन्यविषयकत्वात् । किञ्च श्रवणादेरप्यज्ञाननिव-
र्तकत्व प्रसङ्गः ॥

अत्र यदुक्तं चित्तविक्षेपादिना प्रतिबन्धात् निर्विचिकित्सज्ञानेनापि
श्रवणादिना ज्ञाननिवृत्तिरिति तन्न, सत्यपि चित्तविक्षेपे घटादिज्ञानेन घटा-

१. चैतन्यस्य चैतदुपादान.

द्यज्ञाननिवृत्तिदर्शनेन तस्याप्रतिबन्धकत्वात्। निदिध्यासनदशायां चित्तवि-
क्षेपादेरप्यभावेन निदिध्यासनस्याज्ञाननिवर्तकत्वापत्तेर्दुष्परिहरत्वाच्च ॥

परेतु—वृत्त्यवच्छिन्नचैतन्यस्य विषयावच्छिन्नचैतन्याभेदो ज्ञानापरो-
क्ष्यम् । नच स्वकीयधर्माधर्मविषयकशाब्दज्ञानेऽतिव्याप्तिः, धर्मतद्विषय-
5 वृत्त्योरेकदेशस्थत्वेन तदवच्छिन्नचैतन्ययोरभेदादिति वाच्यम्; योग्य-
त्वस्यापि विषयविशेषणत्वात्। पर्वतो वह्निमानित्याद्यनुमितौ पर्वतांशे
वह्न्यंशे च वृत्तिभेदात् पर्वतांशे पर्वततदाकारवृत्त्यवच्छिन्नचैतन्ययोरभे-
दापरोक्ष्यम्, वह्न्यंशे च तदभावान्नापरोक्ष्यम् । अत एव पर्वतं पश्यामि
वह्निमनुमिनोमीत्यनुभवः। विषयापरोक्ष्यं तु प्रमात्रभिन्नत्वं, तच्च प्रमातृ-
10 सत्तातिरिक्तसत्ताकत्वाभावः। नच धर्माधर्मयोः प्रत्यक्षत्वापत्तिः; योग्यत्वेन
विषयविशेषणात्। नच रूपप्रत्यक्षकाले परिमाणप्रत्यक्षापत्तिः; तदाकार-
वृत्त्युपहितत्वस्य प्रमातृविशेषणत्वात्। नचैवं वृत्तावव्याप्तिः; तदाकारवृत्त्य-
नङ्गीकारादिति वाच्यम्, तदाकारशब्देन तद्विषयकत्वस्य विवक्षि-
तत्वात्, वृत्तौ वृत्त्यन्तराभावेऽपि वृत्तेः स्वविषयकत्वान्न तत्र व्याप्तिः।
15 अन्तःकरणतद्धर्मे शुक्तिरजतादौ च वृत्त्यभ्युपगमान्नाव्याप्तिः। नचान्तः-
करणधर्मादेः केवलसाक्षिभास्यत्वाभ्युपगमविरोधः; इन्द्रियादिप्रमाणनै-
रपेक्ष्यस्य केवलशब्दार्थत्वात् । एवंच तद्विषयवृत्त्युपहितप्रमातृसत्ताति-
रिक्तसत्ताशून्यत्वे सति योग्यत्वं विषयापरोक्ष्यम् । तत्तदिन्द्रिययोग्य-
विषयावच्छिन्नचैतन्याभिन्नत्वं ज्ञानापरोक्ष्यमित्याहुः ॥

20 तदप्युक्तम्—ब्रह्मविषयज्ञानस्यापरोक्षत्वाभावप्रसङ्गात्। तत्र विषयाव-
च्छिन्नचैतन्याप्रसिद्धेः। चैतन्यस्य स्वप्रकाशस्य उभयविधापरोक्ष्याभावप्रस-
ङ्गश्च। तत्र वृत्तेः विषयावच्छिन्नचैतन्यस्य चाभावात्। यदुक्तं योग्यत्वं विष-
यविशेषणमिति तदतिमन्दम्। योग्यत्वं हि इन्द्रिययोग्यत्वं, ततश्च ब्रह्मा-
हमर्थसुखादेरज्ञानस्य चापरोक्षत्वाभावप्रसङ्गः। तेषामिन्द्रियायोग्यत्वात्।
25 किञ्च इन्द्रिययोग्यत्वं हि इन्द्रियजन्यज्ञानविषयत्वयोग्यत्वम्। तथा च तदेव
विषयापरोक्ष्यमस्तु किमितरांशेन। नन्विन्द्रियजन्यवृत्त्यभिव्यक्तचैतन्या-
भिन्नत्वं योग्यत्वं, रूपप्रत्यक्षसमये रसापरोक्ष्यवारणाय तदाकारेत्यादि

विशेषणम्, तथाच इन्द्रियजन्यतदाकारवृत्त्यभिव्यक्तचैतन्याभिन्नत्वं पर्यवस्यतीति चेन्न; शुक्तिरजते वृत्तिकृतावरणाभिन्नत्वस्य[1] इन्द्रियजन्यवृत्तेश्चाभावेनाव्याप्तेः, अविद्यावृत्तेरिन्द्रियाजन्यत्वात्। अपरोक्षवृत्तौ चाव्याप्तिः; तत्रेन्द्रियजन्यवृत्तिकृतावरणाभिभवाभावात् । तस्माज्ज्ञानगतमेवापरोक्ष्यं, तत्संबन्धादर्थे तद्व्यवहारः। इममेवार्थं स्पष्टमाह—यत् साक्षादपरोक्षाद्ब्रह्म 5
इति। अस्यार्थः–ब्रह्म साक्षादपरोक्षं साक्षादव्यवधानेन ज्ञानान्तरव्यवधानाभावेन स्वप्रकाशकतया स्वरूपापरोक्षज्ञानविषय इति ॥

अपरे तु–मूलाज्ञानमेव ब्रह्मावरकम्, अवस्थाज्ञानानां तु तत्तदवच्छिन्नचैतन्याश्रितानां तज्जत्वमेव[2] विषयः, एवं च तं प्रत्यनावृतत्वे सति तद्व्यवहारानुकूलसंविदभेदोत्थापरोक्ष्यं[3], घटसाक्षात्कारदशायां तु रसस्यावृतत्वान्ना- 10
परोक्ष्यमिति वदन्ति ॥

तदप्यनुपपन्नम्; तं प्रत्यनावृतत्वस्यैवापरोक्ष्यरूपत्वसंभवे विशेष्यवैयर्थ्यात्। नच तदपि युक्तम्; जलाद्यनवधारणापरोक्षस्थले जलादेरपरोक्षत्वाभावप्रसङ्गात्, अवधारणज्ञानस्यैवावरणनिवर्तकतया तत्रावरणनिवृत्त्यभावेन जलादेरावृतत्वात्। नच जलादेस्तदा आपरोक्ष्यमेव नेति वाच्यम्; 15
तथा सति जलादिज्ञानस्यापरोक्षत्वाभावप्रसङ्गात्, अपरोक्षार्थाभेदाभावात्, तदभेदस्यैव ज्ञाने आपरोक्ष्यरूपत्वात्, तस्यैवेन्द्रियजन्यतावच्छेदकत्वात्, तदभावे इन्द्रियजन्यत्वानुपपत्तेः। किञ्च जलाद्यावरणकल्पनं व्यर्थम्, जडस्य प्रकाशाप्रसङ्गेनाप्रकाशार्थं तत्कल्पनायोगात्। नच चैतन्यसंबन्धादेव जडस्य प्रकाशप्रसक्तौ तन्निवृत्त्यर्थमावरणकल्पनमिति वाच्यम्; कः प्रकाशः किं 20
चैतन्यसंबन्ध एव चैतन्यविषयत्वं वा। नाद्यः; सत्यप्यावरणे चैतन्यसंबन्धस्यावर्जनीयत्वात्। न द्वितीयः; चैतन्यसंबन्धस्य चैतन्यविषयतायामप्रयोजकत्वात्। असत्यप्यनुमित्याद्यवच्छिन्नचैतन्यसंबन्धे वह्न्यादेरनुमित्याद्यवच्छिन्नचैतन्यविषयत्वात्। किञ्चावरणस्याविषयत्वप्रयोजकत्वे वह्न्यादेरनुमित्यादिविषयत्वानुपपत्तिः। नच संबद्धचैतन्याविषयत्वमावरणप्रयोज्यमिति 25

---

१ ख. कृतावरणभङ्गस्य। २ ख. तत्तज्जडमेव। ३ घ. संविदभेदोऽर्थापरोक्ष्यम्।

वाच्यम्; तथा सति धर्माधर्मयोः शाब्दज्ञानविषयत्वानुपपत्तेः, धर्माधर्मयोः शाब्दवृत्तेश्च एकदेशस्थत्वात्।

एकेतु—तिष्ठन्त्वेताः पण्डितंमन्यानामपूर्वकुसृष्टयः। इदन्तु स्यात्, 'तरति शोकमात्मवित्' इत्यादिना आत्मज्ञानस्य मोक्षहेतुत्वमवगतम्; आत्मज्ञानं चापरोक्षरूपमेव वाच्यम्; अन्यथा कर्तृत्वाद्यध्यासादिनिवृत्त्ययोगात्। ब्रह्मणि च मानान्तराप्रवृत्त्या शब्द एवापरोक्षज्ञानं जनयति। शब्दस्य चान्यत्रापरोक्षज्ञानाजनकत्वेऽपि श्रवणादिप्रत्ययजन्यसंस्कारप्रचयकृतचित्तैकाग्र्यसहकारेण ब्रह्मापरोक्षज्ञानजनकत्वं कल्पनीयम्। अपरोक्षज्ञानविषयत्वमेवार्थापरोक्ष्यमित्याहुः॥

तदप्यसङ्गतम्, शब्दस्यान्यत्रापरिदृष्टापरोक्षज्ञानजनकत्वकल्पनातः अद्वैतश्रुतिजन्यज्ञानस्यैवाध्यासनिवर्तकत्वकल्पनस्य युक्तत्वात्। नचाधिष्ठानसाक्षात्काराभावे अध्यासनिवृत्त्यनुपपत्तिः; रज्जुसर्पभ्रमवतः नायं सर्प इत्याप्तवमेनोपदिष्टे अध्यासनिवृत्तेरनुभवसिद्धत्वात्। 'तरति शोकमात्मवित्, य एवं विद्वानमृत इह भवति, ब्रह्मविदाप्नोति परम्' इत्यादिना ब्रह्मज्ञानस्यैव मोक्षहेतुत्वप्रतिपादनेन श्रवणमननादिसहकृतपरोक्षरूपस्य ब्रह्मज्ञानस्यैव मोक्षहेतुत्वे विरोधाभावाच्च। किंच प्रत्यक्षत्वेन इन्द्रियजन्यत्वमन्यत्र क्लृप्तं, तद्भङ्गेन शब्दस्यापरोक्षज्ञानजनकत्वं कल्पनीयम्, ततो वरं परोक्षज्ञानस्यैव सहकारिविशेषलाभेनाध्यासनिवर्तकत्वकल्पनम्; दृष्टं[1] चैतल्लोक इति नादृष्टार्थपरिकल्पनमपि। शब्दस्य अन्यत्रादृष्टमेवापरोक्षज्ञानजनकत्वं कल्पनीयमिति वैषम्यम्॥

**केचित्तु**[2] पथिकपरिभावितप्रियतमकामिनीसाक्षात्कारस्थले मनसः करणत्वं क्लृप्तम्। तत्र च भावनाप्रचयसहकृतज्ञानकरणत्वावच्छेदेनापरोक्षज्ञानहेतुत्वकल्पनात् शब्दस्यापि तादृशस्यापरोक्षज्ञानहेतुत्वमविरुद्धम्, दृष्टानुरोधादित्याहुः[3], तदप्यबोधात्; जन्यप्रत्यक्षमात्रे चक्षुरादीन्द्रियसन्निकर्षहेतुतायाः सकलजनसिद्धत्वेन कामिन्यां ब्रह्मणि वा नापरोक्षज्ञानसंभवः; इन्द्रियसन्निकर्षाभावात्, कामिनीध्यानस्थलेऽपि निरन्तरस्मृतिसन्ततौ

१ दृष्टं च तल्लोक इति। २ घ. किञ्चित्तु। ३ त्याहुः।

वैशद्यविशेषेण चाक्षुषत्वारोप एव । अन्यथा मनसश्चाक्षुषज्ञानहेतुत्वे विरोधात् । किञ्च यदि भावनाप्रचयसहकृतज्ञानकरणतावच्छेदेनापरोक्षज्ञानहेतुत्वं तदा अनुमानादेरपि तथात्वप्रसङ्गे सर्वमपि प्रमाणमपरोक्षहेतुः स्यादिति कृतं विस्तरेण ॥

इति श्रीवाधूलसुदर्शनगुरुविरचितायां वेदान्तविजयमङ्गलदीपिकायां शब्दापरोक्षभङ्गः ॥ 5

---

ओम्

## अथ अध्ययनविधेरर्थज्ञानपर्यन्तत्वभङ्गः ।

**अर्थावबोधपर्यन्ता[1] स्वाध्यायाध्ययनेन[2] हि । 10**
**प्राप्तं श्रवणमित्येतन्न युक्तं तद्विधेर्यतः ॥**
**स्वाध्यायार्थत्वमेव स्यात्स्वाध्यायाध्ययनस्य हि ।**
**तव्यप्रत्यययोगेन नार्थबोधः प्रतीयते ॥**

यदाहुः—स्वाध्यायोऽध्येतव्य इति अर्थज्ञानपर्यन्ताध्ययनविधानादेव श्रवणं प्राप्तमिति, तदप्यनुपपन्नम्; अध्ययनस्यार्थावबोधार्थतायाः वाक्या- 15 दप्रतीतेः । तव्यप्रत्ययान्तेन स्वाध्यायपदसहितेनाध्ययनस्य स्वाध्यायार्थताया एव स्वरसतः प्रतीतेः । संभवति हि स्वाध्यायप्राप्तेरुद्देश्यतया अध्ययनफलत्वम् । नच स्वाध्यायप्राप्तेरपुरुषार्थतया अर्थज्ञानार्थत्वमेव तस्येति वाच्यम्; अर्थज्ञानस्याप्यपुरुषार्थत्वात् । मोक्षोपयोगितया पुरुषार्थत्वं स्वाध्यायप्राप्तावपि तुल्यम् । नचाध्ययनविधेरर्थज्ञानपर्यन्तत्वाभावे वेदस्यार्थपरत्वे माना- 20 भावः; स्वाध्यायं श्रोतॄणां व्युत्पन्नानां व्युत्पत्तिबलेन तत्तत्पदेन तत्तदर्थावगमे वाक्यार्थज्ञानस्यानुभवसिद्धत्वेन वेदस्यार्थपरत्वाविरोधात् । अन्यथा अर्थपरत्वस्याध्ययनविध्यधीनाध्ययनविधिपरवाक्यार्थपरत्वे विध्यन्तरमपेक्षितं स्यात्, तस्यापि विध्यन्तरमित्यनवस्था । तस्मात् स्वाध्यायस्य स्वतः प्राप्तमर्थपरत्वं न विध्यधीनम् । यदि स्वर्गार्थमध्ययनं विधेयं स्यात्तदा 25

---

१ ख. पर्यन्ते । २ ख. ध्ययनेन वा ।

अर्थकर्मत्वेन सिद्धप्रयोजनतया अविवक्षितार्थत्वशङ्का स्यात्, न चैवं तथा। तव्यप्रत्ययेनाध्ययनस्य गुणकर्मतया प्रयोजनपर्यवसानायाध्ययनगृहीतस्वाध्यायेनैव [1]जीवः क्रत्वनुष्ठानादिकं कुर्यादित्यर्थः पर्यवस्यतीति नाविवक्षितार्थत्वशङ्काऽपि। एतेन लौकिकवाक्यानामर्थपरत्वे वक्तृविवक्षैव प्रयोजकतया दृष्टा, अत एव करणापाटवप्रयुक्तविवक्षितार्थान्यार्थकवाक्यस्य तदर्थपरत्वाभावः, श्वेतो धावतीत्यादिवाक्यस्याश्वविषयतया प्रयुक्तस्य श्वेतत्वादिपरत्वाभावः; एवं च वेदे विवक्षाभावेनार्थज्ञानोद्देशेनाध्ययनविधिरेवार्थपरत्वे प्रयोजक इति निरस्तम्; अध्ययनविधिवाक्य[2]वदेवार्थपरतोपपत्तेः। अस्मिन्मते ईश्वरसत्त्वेन विवक्षासंभवाच्च। अत एव 'श्रुतिस्मृती ममैवाज्ञा' इति तेनैवोक्तम्। तस्माद्वेदेऽप्यर्थपरत्वमव्याहतम्। अर्थविशेषपरत्वं तु न्यायादेवावगम्यते ॥

ननु वाक्यस्यैकमेव प्रयोजनं, क्वचित् श्लेषादौ विवक्षावशेनानेकप्रयोजनकल्पनम्, तथाच स्वाध्यायस्य जपविनियोजकवाक्यानुसारेण जपरूपप्रयोजने विनियुक्तस्य विधिं विना कथमर्थपरत्वम्? नचैवं जपविनियोजकवाक्यस्यापि जपे विनियुक्तस्य कथमर्थपरत्वमिति वाच्यम्; एतद्वाक्यार्थज्ञानात् प्राक् जपविनियोगाप्रसक्त्या अर्थपरत्वाविरोधात्, अनन्तरं च स्वव्याघातादेरेव नार्थपरत्वक्षतिरिति चेन्न; अध्ययनविधिवाक्यवदेवोपपत्तेरिति दत्तोत्तरत्वात्। वाक्यस्य हि एकार्थपरत्व[3]मेवौत्सर्गिकम्, न त्वेकप्रयोजनकत्वम्। किञ्च यंयं क्रतुमधीते तेनतेनेष्टं भवतीति वाक्येन तत्तत्क्रतुफलं त[4]त्तत्प्रतिपादकभागाध्ययनेन सिध्यतीति प्रतीतेः वेदस्य विवक्षितार्थत्वमवगम्यते ॥

किञ्च व्याकरणादीनां वेदाङ्गत्वं वेदार्थज्ञानद्वारेणैव [5]नादृष्टद्वारेति वेदस्यार्थपरत्वमवर्जनीयम्। किञ्चाध्ययनस्यार्थज्ञानकामाधिकारित्वे अन्योन्याश्रयः। यागादेः स्वर्गसाधनत्वे सिद्धे हि तदुपयोग्यर्थज्ञानकामना, ततस्त-

---

१ जपक्रत्वनु। २ ग-घ. विध्यधीनत्वे अध्ययनविधिवाक्यस्य अर्थपरत्वे। ३ ख. परत्वमौत्सर्गिकम्। ४ ख. तत्तत्क्रतुभागाध्ययनेन। ५ ख. नादृष्टद्वारेणेति।

त्कामनानुवादेना[1]ध्ययनविधिः अध्ययनविधौ च यागादेः स्वर्गसाधनत्व-सिद्धिरिति ।

किञ्च हितैषिभिरनुष्ठापितं बालाध्ययनं निष्फलं स्यात् । बालस्यार्थज्ञा-नकामनाविरहेणानधिकारिणा कृतत्वात् । कस्तस्याध्ययनाधिकार इति चेत् जीवनमेवेति ब्रूमः । नित्यकर्मणां जीवनाधिकारकत्वात् तदुपयुक्तार्थज्ञान- 5 हेत्वध्ययनस्यापि तदधिकारकत्वात् । नच सर्वदा तदनुष्ठानप्रसङ्गः; अध्य-यनस्य संस्कारकर्मत्वात् तत्सिद्ध्या तन्निवृत्तेः आधानवत् । अपि चाध्यय-नस्यार्थज्ञानकामाधिकारकत्वे अध्ययनं काम्यमेव स्यात् न नित्यमिति अध्य-यनमात्रमशास्त्रीयं स्यात् । नचाध्ययनस्य नित्यत्वे उत्तरत्रोपयोगो न स्या-दिति वाच्यम्; स्वाध्यायस्याध्ययनविधिना अध्ययनसंस्कार्यत्वसिद्धौ सं- 10 स्कृतस्य तस्य उत्तरत्रोपयोगाकाङ्क्षायां यथासंभवमर्थावबोधजपादावुपयोगे विरोधाभावात् । नन्वध्ययनस्य दृष्टार्थत्वात् अदृष्टमर्थज्ञानमेव फलमिति चेन्न; अध्ययनमात्रसाधारण्येन जपादेरेवाध्ययनफलकत्वकल्पनेनार्थज्ञानफ-लत्वकल्पनानवकाशात् । ननु स्वाध्यायस्योद्देश्यत्वे स्वत्वमविवक्षितं स्यात्, ततश्च कृत्स्नशाखाध्ययनविधिप्रसङ्ग इति चेन्न; तत्प्रसङ्गादेव स्वत्वविवक्षायां 15 आवश्यकत्वादन्यथा अशक्यविधानप्रसङ्गात् । ननु उपयोक्ष्यमाणस्वाध्याय-स्यैव संस्कारविधानात् न सर्वशाखाध्ययनप्रसङ्ग इति स्वत्वमविवक्षितमिति चेन्न, सर्वासामपि शाखानामुप[3]योग्यत्वात् । अभ्युदयहेतुवेदपारायणोपयो-गसंभवात् ॥

ननु अध्ययनानन्तरमधीत्य स्नायादिति स्नानविधानान्न तत्काले मीमांसा- 20 वकाशः; क्रमबाधप्रसङ्गात् । नापि स्नानानन्तरं; दारग्रहणस्यैव कर्तव्यत्वात्, नापि तदनन्तरम्; अग्निहोत्राद्युपरोधप्रसङ्गात्, तस्मादर्थज्ञानपर्यन्तमेवाध्य-यनं विधीयत इति चेत्, न; यदि सर्वथाऽनवकाशः तदा क्रतुविधिप्रसङ्गा-दिलभ्योऽवकाशोऽस्तु । अग्निहोत्रादिकर्मानुष्ठानस्य तत्प्रतिपादकवेदार्थज्ञा-नसाध्यतया ततः पूर्वमेव विचारावकाशात् । क्रमस्य पदार्थधर्मत्वात्तद्बाधेन 25

१ ख. कर्तव्याध्ययना । २ ख. योक्ष्यमाणाध्ययनस्यैव । ३ मुपयोगयोग्यत्वात् । ४ ख. सर्वदानावकाशः । ५ ग-घ. प्रसङ्गादिलभ्योवकाशोस्तु ।

स्नानात् प्रागेव विचारावकाशः । वस्तुवस्तु नात्र क्रमो विवक्षितः, येन तद्बाधः स्यात् । क्रमो ह्यत्र न[1] विवक्षार्हः क्रमस्यैकप्रयोगान्तर्गतपदार्थधर्मत्वात् । एकप्रयोगश्चाङ्गाङ्गिभावापन्नानामेककर्माङ्गानां वा । नचात्र तथासंभवः । तस्मादानन्तर्यमेवात्र विवक्षितम् । न त्वव्यवहितानन्तर्यं, पूर्वकाल-
5 मन्त्रे क्त्वाप्रत्ययविधानात्, स्नात्वा भुञ्जीतेत्यादिवत् । ततश्च स्नानात्पूर्वमेव श्रवणावकाशः । गार्हस्थ्येऽपि नावकाशासंभवः; वक्तुरिव श्रोतुरप्यवकाशासंभवात् । अन्यथा विधेरर्थज्ञानपर्यन्तत्वेऽपि क्रमबाधप्रसङ्गो दुष्परिहरः ॥

नह्यर्थज्ञानावच्छिन्नः गुरुमुखोच्चारणानूच्चारणात्मकक्रियासमवायोऽध्य-
10 यनशब्दार्थः । येन क्रमबोधो न स्यात् । किन्तु यागादेः स्वर्गादिवत् साङ्गाध्ययन[2]फलमर्थज्ञानम् । तथाच क्रमबाधोऽवर्जनीयः ॥

नन्वध्ययनविधिरेव स्वफलार्थज्ञानसिद्धये तदनुकूलविचारं प्रयुङ्क्ते इति चेन्न; न ह्यनुष्ठापकत्वं करौ प्रगृह्य कारयितृत्वम्, किन्तु चिकीर्षाप्रयोजकेच्छाविषयत्वम्, तच्च साध्यस्यैव साधनं प्रति स्यात् । आरादुपकारकस्यापि
15 परमापूर्वमेव तत्साध्यत्वात् अनुष्ठापकम् । अतोऽर्थज्ञानस्यैव विचारप्रयोजकत्वम्; न त्वध्ययनस्य तद्विधेर्वा ॥

ननु गुणकर्मणो यत्फलं तदसिद्धौ न तद्विध्यर्थनिष्पत्तिः । अतस्तत्फलेऽपि विधेस्तात्पर्यमस्त्येव । अत एवावहननविधेः फलीभूतवैतुष्यनिर्वर्तकावहननावृत्त्यनुष्ठापकत्वमिष्यते । एवञ्च अध्ययनविधेः स्वारसिकगुण-
20 कर्मत्वानुसारेणैव अर्थज्ञानकामः अध्ययनेनैव स्वाध्यायं प्राप्नुयादित्यर्थाङ्गीकारात् गुणकर्मा[3]ध्ययनफलभूतार्थज्ञाननिवर्तकविचारानुष्ठापकत्वमध्ययनविधेर्युज्यत एवेति चेन्न, कर्मणां व्रीहीणां साध्यत्वोपयोगिवैतुष्यनिवर्तकत्वावहननावृत्तौ तात्पर्यं व्रीहिविधेर्युज्यते । अर्थज्ञानं तु न कर्मणः; स्वाध्यायस्य साध्यत्वोपयोगिस्वाध्यायप्राप्त्यैव तत्सिद्धेः । अपिच अयं प्राप्तिगोचरः
25 नियमविधित्वात्, अतो न प्रयोजकः, अप्राप्तांशपरिपूरणफलत्वेऽपि

१ ख. क्रमो ह्यत्र न विवक्षितः । २ ख. मात्रस्य क्त्वा । ३ क. ध्ययनविधि••• मर्थे ।

क्वचिदेव प्रयोजकता स्यात् । सम्यङ्निरूपणे तदपि नास्ति । अप्राप्तांशपरिपूरणेन क्रत्वाद्यर्थमपेक्षितार्थज्ञानमात्रे अध्ययनस्य साधनत्वावगमात् नियमाद्दृष्टसाध्यत्वावगमाच्च अन्यक्रत्वाद्यपेक्षितार्थज्ञानसाधनताबुद्धिनिवृत्तेः । अध्ययनस्य लोकसिद्धसाधनताग्रहाणादेव प्रवृत्तिसंभवात् अध्ययनस्यापि नाध्ययनविधिरनुष्ठापकः विचारानुष्ठापकत्वं तु दूरत एव ॥ 5

एवं च नियमविध्यधीनव्याप्तिग्रहादेवेतरेषां साधनत्वबुद्धिनिवृत्त्या लोकसिद्धसाधनताग्रहादेव सर्वत्र प्रवृत्तिरित्यध्ययनविधेः कथञ्चिदप्यध्ययनप्रयोजकत्वाभिप्रायेणाध्ययनस्य स्वविधिप्रयुक्तत्वमनुगृहीतं भगवता भाष्यकारेण—लिङ्गादपि श्रुतेः शीघ्रोपस्थितिकतया, तत एव तादर्थ्यावगमात् लिङ्गमनुवाद इत्यभिप्रायेण वा । तेनार्थकर्मत्वेऽपि प्रयोजनाभावात् तव्यप्रत्ययस्वारस्य (भङ्गेनार्थकर्मत्वाङ्गीकारोऽपि निरस्तः । नहि सक्तुवद्विनियोगाभावो वा, तुलाभारादिहिरण्यानां भरणपदशक्तिर्वास्ति, येन सक्तून् जुहोति हिरण्यं भार्यमितिवत् स्वारस्य) भङ्गेनार्थकर्मता स्यात् । अस्ति हि स्वाध्यायस्य जपार्थज्ञानयोरुपयोगः शक्यं च स्वाध्यायाध्ययनम् ॥ 10

तदयं निर्गलितार्थः—ब्रह्मचर्याद्याश्रमविहितकर्मानुष्ठानहेतुभूतार्थावबोधार्थतया अध्ययनं पक्षतः प्राप्तमिति स्वाध्यायोऽध्येतव्य इत्ययं नियमविधिरेव ॥ 15

नन्वर्थावबोधार्थतयाऽध्ययनस्य पक्षतः प्राप्तावपि स्वाध्यायधारणफलकाध्ययनस्याप्राप्तेः, अर्थज्ञानकामनारहितानां बालानां सर्वथा अप्राप्तेश्च, अपूर्वविधिरेवायमस्त्विति चेत् , नैवं; वेदमेव जपेन्नित्यम् इत्यादिना जपविनियोजकवाक्येन स्वाध्यायधारणार्थाध्ययनस्यापि प्राप्तत्वात् । नचाधीत्य स्नायादिति वाक्येनाध्ययननियमसिद्धेरेतद्विधिवैयर्थ्यमिति वाच्यम् , तस्य स्नानेध्ययनानन्तर्यविधिपरत्वात् , अन्यथार्थद्वयविधाने वाक्यभेदप्रसङ्गात् ॥ 20

नचाध्ययनस्याध्यापनविधिनैव प्राप्तत्वात् विधिवैयर्थ्यमिति वाच्यम्; तथापि कृत्स्नोपनीतानां अध्ययनासिद्धिप्रसङ्गात् । एकोपनीताध्यापनेनापि 25

---

१ दृष्टस्याध्ययन, (मंत्र) । २ ख. अन्यत्र काक्वाद्यपेक्षि । ३ लोकसिद्धसाधनताग्रहादेव । (मंत्र)

अध्यापनस्य तदनुष्ठानसिद्धेः । कृत्स्नोपनीताध्ययनसिद्धावपि स्वाध्यायसाधारणफलकाध्ययनस्य ज्ञानर्थफलकाध्ययनस्य वा तेन[1] विनासिद्धेः तदुभयार्थत्वेनाध्ययनस्य विहितत्वेनाध्ययनेनैव तदुभयं संपादनीयमिति नियमासिद्धेश्च । तस्मान्नियमविधिरेवायमिति ॥

5 इति श्रीवेदान्तविजयमङ्गलदीपिकायां अध्ययनविधेरर्थज्ञानपर्यन्तत्वभङ्गः ।

---

श्रीः

## अथ साधनचतुष्टयपूर्ववृत्तत्वभङ्गः ॥

अङ्गाध्ययनयुक्तेन स्वाध्यायाध्ययनेन हि ।
10 स्थिरानन्तफलापातधीः पूर्वोत्तरभागयोः ॥
ततः क्रमानुरोधेन पूर्वभागे[2] प्रवर्तते ।
ततः कर्मफलाल्पत्वनिर्णयादुत्तरत्र हि (च) ॥
वेदान्तभागे पुरुषस्तदर्थे निर्णिनीषया ।
एवं वेदविचारस्य हेतुरध्ययनं मतम् ॥
15 कर्मभागविचारो हि हेतुर्वेदान्तचिन्तने ।
असिद्धं कारणं तत्र न साधनचतुष्टयम् ॥

एवं नियमविधिना साङ्गवेदाध्ययने ततोऽनन्तस्थिरफलापातप्रतीतिः पूर्वोत्तरभागसाधारणी जायते । ततस्तदर्थनिर्णिनीषया प्रवर्तमानः पुरुषः पाठक्रमानुरोधेन प्रथमं पूर्वभागविचारे प्रवर्तते । ततस्तद्यथेह कर्मचितो 20 लोकः क्षीयत इत्यादि वाक्यनिर्णयेन कर्मफलानामनित्यत्वनिर्णये ततस्तन्निर्णयसहितोत्तरभागविषयानन्तस्थिरफलापातप्रतीत्या वेदान्तार्थविचारे प्रवर्तते ॥

एवं न साङ्गवेदाध्ययनस्य वेदविचारपूर्ववृत्तत्वं कर्मविचारस्य ब्रह्मविचारपूर्ववृत्तत्वं च सिद्धम् । नतु साधनचतुष्टयस्य ब्रह्मविचारं प्रति पूर्व-

---

25 १ तेन विधिना असिद्धेः । (मंत्र) २ क-ख. पूर्वभागे । (मंत्र)

वृत्तत्वम् , तस्य वेदान्तविचारात् प्रागसिद्धत्वात् । तथाहि इदं हि साधनचतुष्टयं नित्यानित्यवस्तुविवेकः इहामुत्रफलभोगविरागः शमदमादिसंपत्तिः मुमुक्षुत्वं चेति । इदं हि न वेदान्तार्थविचारात्पूर्वं संभवति । नित्यानित्यवस्तुविवेकस्य भागद्वयविचाराधीनत्वेन ततः पूर्वमसत्त्वात् । तदभावे चेहामुत्रफलभोगविरागस्याप्यसंभवात् । तदभावे शमदमादेरपि 5 अभावादनन्तस्थिरफलनिर्णयाभावे मुमुक्षासंभवाच्च ॥

अत्राह नवीनः—न तावन्नित्यानित्यवस्तुविवेकासंभवः । सर्वं कार्यमनित्यं कार्यत्वात् घटवदित्यनुमानेन, तद्यथेह कर्मचितो लोकः क्षीयत इति स्पष्टार्थश्रुत्या च अनित्यत्वनिर्णयात् । आत्मनश्च नित्यत्वं मोक्षार्थप्रवृत्त्यनुपपत्त्या सिद्धम् । आत्मनश्चानन्दरूपत्वम् "आनन्दाद्ध्येव खल्विमानि 10 भूतानि जायन्ते" "एषोऽस्य परम आनन्द" इत्यादिश्रुत्यापि सिद्धम् । एष परमात्मा अस्य जीवस्यानन्द इत्यर्थः ॥

नचैवं विचारस्यानारम्भप्रसङ्गः, तेन विनैवान्यस्यापि[1] निश्चेतुं शक्यत्वादिति वाच्यम्; योऽर्थो मानान्तरविरोधेन निर्णेतुमशक्यः[2] तस्य विचारैकसाध्यत्वात् । अद्वैतसमन्वय(स्य) मानान्तरविरुद्धत्वेन वाक्यश्रवणमात्रेण 15 निर्णेतुमशक्यत्वात्तत्र विचारापेक्षा । आत्मनो नित्यानन्दरूपत्वं च प्रमाणान्तराविरुद्धतया वाक्यश्रवणमात्रेण निर्णेतुं शक्यत एव । नच सुखस्यानित्यतया न[3] नित्यात्माभेदसंभव इति वाच्यम्; अनुकूलतर्काभावेन सुखमात्रे अनित्यत्वावधारणासंभवात् सौषुप्तिकसुखपरामर्शसंभवेन सुखस्य नित्यतया तद्विनाशबुद्धेरन्यविषयत्वात् ॥ 20

किञ्च येद्येवं(कं)[4] एकन्यायेन निश्चितं तेनेतरदपि न्यायेन निश्चेतव्यमिति न नियमः । पुरुषाणां विचित्रबुद्धित्वात् न्यायानां चालौकिकविषयतयाऽतिसूक्ष्मत्वात् । अन्यथा धूमाग्न्योर्व्याप्तिः सर्वैरपि[5] गृहीतेति सर्वापि व्याप्तिरेवमेव ग्राह्येति वैशेषिकग्रन्थारम्भो व्यर्थ एव स्यात् । तस्मादेतादृश एव

१ ख. विनैवास्यापि । २ ग-घ. निर्णेतुं शक्यः । ३ घ. न नित्यात्मेत्यारभ्य "तद्वि- 25 नाश" इत्यन्तं गलितम् । ४ क-ख. यद्येवं न्यायेन निश्चेयं तेन इतरदपि न्यायेन । ५ क-ख. सर्वैर्गृहीतैवेति वैशेषिक ।

पुरुषः अस्मिन् शास्त्रे अधिकारी । यो नित्यानित्यवस्तुविवेकादौ समर्थः अर्थान्तराणि विचारेण विना निर्णेतुमशक्तः । तदुक्तम्—

नात्यन्तमज्ञो नोत[1] ज्ञः सोऽस्मिन् शास्त्रेऽधिकारवान् । इति ।

एवं च ब्रह्मसुखजीवसुखयोः नित्यत्वं तदितरभोगानां चानित्यत्वं
5 सुनिरूपम् । तेन चेहामुत्रफलभोगविरागः सिध्यति । तेन च[2] बाह्यान्तरेन्द्रिय[3]-योरुपशमरूपौ शमदमौ सिध्यतः । प्रयोजनाभावेन तयोर्व्यापारासंभवात् । ताभ्यां तितिक्षादिः । ततश्चाविक्षिप्तचित्ततया निरतिशयानन्दमात्मानं निरस्तनिखिलभेदं वेदान्तवाक्येभ्योऽवगम्य मुमुक्षुर्भवति ॥

एवं सिद्धे साधनचतुष्टये ब्रह्मविदाप्नोति परम् । तरति शोकमात्मवित्
10 इत्यादिश्रुतिभिः ब्रह्मज्ञानस्य मोक्षसाधनतां निश्चित्य तदर्थं ब्रह्मविचारे प्रवर्तत इति ॥

अत्र ब्रूमः—यदि न्यायोपबृंहितवाक्येन नित्यानित्यवस्तुविवेकः तदा ज्ञातव्यांशाभावेन विचारविधेरेवोच्छेदः स्यात् । तथाहि मुमुक्षासिद्धये हि नित्यानित्यवस्तुविवेकादेः पूर्ववृत्तित्वमिष्यते । तत्र यद्यद्वैतनिश्चया-
15 भावेऽपि मुमुक्षा जायेत तर्हि आनन्दत्वनित्यत्वयोर्निर्धारणं किमर्थम् , नित्यपुरुषार्थनिर्धारणाभावे अनित्यसुखवैराग्यानुदयेन मुमुक्षाभावात् तदपेक्षेति चेत्तथा सति प्राप्तियोग्यत्वज्ञानाभावे कथं मु[4]मुक्षा प्राप्तियोग्यत्वज्ञानं चाद्वितीयत्वज्ञानं विना न संभवतीत्यपि पश्यतु भवान् । किञ्च यद्यद्वैतनिश्चयो विचारात् प्राङ्नास्तीत्यभिमतं, तदा ब्रह्मणि परमप्रेमास्पदत्वेनानन्दरूपताज्ञानं
20 कथं स्यात् ॥

ननु जीव एव तद्ज्ञानमस्त्विति चेत् किं तस्य प्रयोजनम् । तत्स्वरूपस्य पुरुषार्थताबुद्धिरिति चेत् , तर्हि तत्स्वरूपस्य सिद्धत्वादेवासाध्यतया तदर्थतया ब्रह्मविचारप्रवृत्तेरसंभवात् ॥

किञ्च ब्रह्मविदाप्नोति परम् इति ज्ञानस्य मोक्षसाधनत्वज्ञानमा[5]नन्दरू-

25 १ न, उत, ज्ञः. इति पदविभागः. नो तज्ज्ञः इति पाठान्तरं. २ **क-ख.** व्यापाराभावात् । ३ बाह्यान्तरेन्द्रिययोः व्यापारोपरमरूपौ । (मंत्र) बाह्यान्तरेन्द्रिययोरुपशमरूपौ ४ **क-ख.** मुमुक्षाप्राप्तिः योग्यत्वज्ञानं वा नसंभवति । ५ **ग-घ.** आनन्दरूपत्वज्ञानं चोप ।

पज्ञानत्वं चोपपादयता परब्रह्मण एव प्राप्यत्वमुपपादितं स्यात् । ततश्च स्वस्य परब्रह्माभेदज्ञानं विना स्वस्वरूपस्यानन्दरूपत्वज्ञानस्य कथमुपयोगः । यदुक्तं सूक्ष्मत्वादनिर्धारणमिति तदनुपपन्नम् । अहं सुखी स्यामित्येवं सुखे प्रेमदर्शनेन प्रेमास्पदतामात्रस्य सुखात्मकतासाधकत्वं कस्यापि बुद्ध्यनारूढं कार्यं सर्वमनित्यमिति बुद्धौ सत्यामपि नित्यसुख्यसाध्यत्वं सुखविनाशप्रत्यक्ष- 5 स्यान्यविषयत्वं कृत्स्नसुखस्याप्येकत्वं जगत्कारणे प्रकृतिपुरुषसन्देहे सत्यपि आनन्दरूपत्वं चात्यन्तसूक्ष्मन्यायैरेव निर्णेतव्यम् । एतन्न्यायापेक्षया सूक्ष्मन्यायमभेदसाधकं जलचन्द्र[1]घटाकाशादौ परिदृश्यमानं कमपि न पश्यामः । यद्यभेदसाधकमानस्य भेद[2]साधकमानविरोधेनानिर्णायकत्वं, तदा सुखनित्यत्वसाधकन्यायेऽपि तुल्यम् । तस्माद्योऽर्थो निर्धारित इत्युक्तस्तन्निर्धारणम- 10 वर्जनीयम् । योऽर्थोऽनिर्धारित इत्युक्तः स एव सन्दिग्धः ॥

तथाहि—आनन्दत्वं तावज्जगत्कारणे सन्दिग्धं, कारणत्वस्यापि प्रधानचेतनगतत्वसन्देहेन आनन्दपदस्यापि मुख्यगौणार्थसन्देहस्यावर्जनीयत्वात् । अशरीरं वा वसन्तं न प्रियाप्रिये स्पृशत इति मोक्षदशायामानन्दाभावप्रतीतेः मुक्तिकाले प्राप्यत्वेनाभिमतस्य तस्या[3]नन्दरूपत्वासंभवाच्च आनन्दा- 15 द्ध्येवेति वाक्यार्थनिर्णयः असंभावितः । परमप्रेमास्पदत्वेनानन्दरूपता निर्धारणमप्यसम्भवि । अहन्त्वस्यैवाहमर्थप्रेम्णि प्रयोजकत्वात् सुखत्वस्य प्रेमप्रयोजकत्वं अहमर्थे स्वसमवायान्तर्भावेनैव अहं सुखी स्या[4]मित्यपेक्षादर्शनात् परसमवेततया ज्ञाते इच्छायाः निरुपाधिकायाः अदर्शनात् शत्रुगततयो ज्ञाते द्वेषदर्शनात् । तस्मात् अहन्त्वमपि प्रेमप्रयोजकम् ॥ 20

अथवा अहं सुखी स्या[5]मिति प्रेमदर्शनात् सुखविशिष्टात्मन्येव प्रेमता नात्ममात्रे सुखमात्रे वा । अहं स्यामिति प्रेम चन्दनादाविव सुखसाधनताप्रयुक्तम् ॥

एवं नित्यत्वमपि सन्दिग्धमेव । नात्माश्रुतेः इत्यादिना तस्यापि विचार-

---

१ ख. जलमठाकाशादौ । २ ख. जडसाधक । ३ तस्यापि (मंत्र) प्रकरणस्य । 25
४ ख-घ. स्यामित्येवेच्छादर्शनात् । ५ ख-घ. सुखीत्यादि प्रेमदर्शनात् ।

विषयत्वात् । विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यती-
त्यादिना विनाशप्रतीत्या विचाराभावे तन्निर्णयासंभवाच्च ॥

नच कर्मविचारदशायामेवात्मनः स्थायित्वनिर्णयात् नित्यत्वं निश्चितमे-
वेति वाच्यम् ; चिर[1]कालस्थायित्वनिश्चयेऽपि प्र[2]कृतिप्राकृतविषयकालावस्था-
5 यित्वस्यानिश्चयात् । यदुक्तमात्मा च नित्य इत्यवगम्यते, अन्यथा कस्यापि
मोक्षार्थप्रवृत्त्यनुपपत्तेरिति, तन्न; तत्र नित्यत्वं किं [3]स्वप्रकाशकं शास्त्रगम्यं वा ।
आद्यं त्वसंभावितत्वादेव निरस्तम् । द्वितीये तु शास्त्रेण तत्त्वहितपुरुषा-
र्थान्निश्चित्य स्वहिते प्रवर्तत इति शास्त्रश्रवणात् प्राक् नित्यत्वज्ञानासिद्धेः ।
किञ्च मोक्षार्थप्रवृत्त्यनुपपत्त्या जीवस्य नित्यत्वेऽपि ब्रह्मणः कथं नित्यता
10 स्यात् । आत्मत्वहेतुना तत्रापि नित्यत्वावगमे ईक्षत्याद्यधिकरणजातं दत्त-
जलाञ्जलि स्यात् ॥

एवं नित्यानन्दनिर्धारणाभावात् तन्मूलवैराग्यमप्यसंभवि । तथैव प्र-
तिरुद्धत्वात् । सौषुप्तिकपरामर्शानुसारेण जीवसुखस्यापि नित्यत्वं हि भव-
दभिमतम् । विनाशबु[4]द्धेरवच्छेदकविषयत्वोपपादनेन सर्वस्यापि सुखस्य
15 नित्यतया इहामुत्रफलभोगविरागोऽप्यसंभावितः । [5]अवच्छेदकानित्यत्व-
ज्ञानस्य सुखवैराग्याप्रयोजकत्वात् । अवच्छेदकवैराग्यविवक्षायां तत्र भोग्य-
ताबुद्धिविरहेण नित्यसिद्धवैराग्यस्यानित्यत्वज्ञाननैरपेक्ष्यात् । तत्र भोग्यता-
बुद्धौ च अनित्यत्वज्ञानेनापि न तत्र वैराग्यसंभवः । बहुकालं राज्य-
मनुभवतोऽपि सार्वभौमस्य कन्दुकक्रीडादौ भोग्यताबुद्धिदर्शनात् । तत्र
20 नित्यसुखविरोधित्वे हि वैराग्यम् । नचात्र तद्विरोधः । नित्यसुखावच्छे-
दकत्वोपपादनेन तयोः समानकालीनत्वेन अविरोधत्वात् ॥

किञ्च स्वरूपानन्दापेक्षया वैषयिकसुखानामल्पानामप्युत्कर्षस्य च नित्या-
नन्दाविरोधस्य ज्ञायमानत्वात् न वैराग्यसंभवः ।

नन्विदानीमानन्दस्वरूपमावृत्तं विषयसंबन्धाधीनवृत्तितारतम्येन [6]आवरण-

25 १ ख. चिरकालत्वेपि (घ) विचारकालस्थायित्वनिश्चयेपि । २ क-ख. प्राकृतविषय-
कालावस्थायित्वस्यानिश्चयात् । ३ ख. नित्यत्वस्य । ४ क-ख. विनाशबुद्धेरन्यविषय
५ ख. अवच्छेदानि । ६ ग-घ. आवरणतारतम्येन-इदं न ।

निवृत्तितारतम्येन प्रकाशतारतम्यं, मोक्षेऽत्यन्तावरणनिवृत्त्यानवच्छिन्नानन्दप्रकाश इति बुद्धिः संभवतीति चेन्न; स्वरूपस्यैव प्रकाशरूपतया तत्र[1] तरतमभावनिश्चयाभावात् । नह्यावरणतरतमभावः सन्नपि स्वरूपतारतम्यप्रयोजकः । किञ्चावरणनिवृत्तितारतम्यस्य स्वप्रकाशतारतम्यस्य प्रयोजकत्वे सुखवृत्त्यभावदशायां स्वरूपसुखप्रकाशो न स्यात् । ततश्च परमप्रेमास्पदत्वं न स्यात् । निरवयवके निर्धर्मके स्वरूपसुखे ईषदावृतमीषदनावृतमिति न वक्तुं शक्यम् ॥

किञ्च आवरणनिवृत्तितारतम्यमप्यनुपपन्नम्; [2]तारतम्यं हि [3]सावयवत्वेन धर्मवत्त्वेन वा स्यात्, नच तदुभयमप्यत्र संभवति ॥ किञ्च नास्ति न प्रकाश इति व्यवहारयोग्यता [4]आवरणं तन्निवृत्तौ च को वा तरतमभावः ॥

नचोत्कृष्टसुखगोचरं आवरणं नास्तीति व्यवहारयोग्यताप्रयोजकत्वमावरणनिवृत्तेरुत्कर्ष इति वाच्यम् । सुखतदावरणनिवृत्त्युत्कर्षयोः परस्परनिरूपितत्वेनान्योन्याश्रयात् । आवरणनिवृत्तितारतम्यस्य सुखतारतम्याधीनत्वात्, सुखतारतम्यस्यावरणनिवृत्तितारतम्याधीनत्वाच्च । आवरणनिवृत्तितारतम्यस्यैव सुखतारतम्यरूपत्वे आत्माश्रयः ॥

किञ्च [5]शमादेः कथं मुमुक्षाहेतुता । नच शमादौ सति चित्तविक्षेपाभावेन वेदान्तवाक्येनात्मावगमे मुमुक्षा सिध्यतीति शमादेर्मुमुक्षोपयोग इति वाच्यम्; तथा सति वेदान्तश्रवणात् प्रागेवात्मावगमप्रसिद्धौ वेदान्तश्रवणे प्रवृत्त्यनुपपत्तेः । नचापातप्रतीतिरेव मुमुक्षाहेतुरिति [6]न वेदान्तश्रवणे प्रवृत्त्यनुपपत्तिरिति वाच्यम्; तथा सति साङ्गवेदाध्ययनेनैवापातप्रतीत्या तत एव मुमुक्षया श्रवणे प्रवृत्त्युपपत्तौ शमदमादीनामनुपयोगप्रसङ्गात् । अत एव शमदमाद्यभावेऽपि वेदान्तविचारे प्रवर्तमानः दुरीश्वरद्वारबहिर्वितर्दिकादुरासिकाविक्षिप्तचित्ता निरन्तररसिकविलासिनीचर्वितसारगद्गदकण्ठा [7]अपि ह्यद्वैतं निर्धार्य तत्रैव प्रगल्भवाचः त्रिचतुरान्धवराटिकालिप्सया चातुर्वर्ण्य

---

१ **क-ख.** तदभावनिश्चयात् । २ **ख.** साहि सावयव । ३ **घ.** सावयवत्वे सधर्मत्वे वा । ४ **ख.** आवरणमेतन्निर्वृत्तौ च ५ **क-ख-घ.** समाधेः । ६ **घ.** न श्रवणप्रवृत्त्यनु । ७ **ख.** अपि ह्यद्वैतं (घ) अपिचैतन्निर्धार्य ।

बहिष्कृतपञ्चषपल्लीपालकदुरीश्वरनामाङ्कितग्रन्थानपि विरचयन्तः परश्शतं मिथ्यावादिन उपलभ्यन्ते, तस्मादद्वैतनिर्धारणेऽपि न शमदमाद्यपेक्षा किं पुनरापातप्रतीतौ ॥

किञ्च शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं 5 पश्येत् इति श्रुत्या शमदमादेः श्रवणाद्यनन्तरभाविनिदिध्यासनाङ्गत्वमेव ह्यवगम्यते। तथाच शमादेः कथं ब्रह्मविचारपूर्ववृत्तत्वम्। नच प्रशान्तचित्ताय शमान्विताय प्रोवाचतामिति[1] शमादेः श्रवणाङ्गत्वमेवेति वाच्यम्; तस्य लोकसिद्धश्रवणोपयोगिचित्तावधानानुवादतया इन्द्रियमनोनिग्रहरूपशमदमाद्यङ्गताबोधकत्वाभावात्।

10 किञ्च शमदमाद्युपेतः स्यादिति वेदान्तविचार एव शमदमाद्यङ्गत्वनिरूपणस्य क्रियमाणतया ततः पूर्वं शमदमादेरसंभवात् कथं तस्य विचारहेतुता ॥

किञ्च नित्यानित्यवस्तुविवेकादेः साध्यसाधनभावो विपरीत एव। तथाहि—न तावन्नित्यानित्यवस्तुविवेकः वैषयिकसुखवैराग्यहेतुः; तदनि-15 त्यताज्ञानेऽपि प्रेमातिशयस्य लोके बहुशो दर्शनात्। इहासुत्रफलभोगविरागोऽपि न शमदमादिहेतुः। शमादिश्च न मुमुक्षाहेतुः, शमादेर्मुमुक्षासाध्यत्वात्। मुमुक्षया हि मोक्षोपायं कामयते। तत्कामश्च तदङ्गभूतशमदमादिकं कामयते। मुमुक्षा च पूर्वं न संभवति; निरतिशयापरिच्छिन्नानन्दपुरुषार्थनिश्चयादेव हि विहितपुरुषार्थक्षुद्रताबुद्ध्या मुमुक्षा स्यात्। तन्निश्चयश्च 20 वेदान्तविचारसाध्य इति कथं विचारात् प्राक् मुमुक्षा स्यात् ॥

किञ्च ब्रह्मस्वरूपानन्दस्य नित्यमनुभूयमानतया कथं मुमुक्षा स्यात् ॥

ननु ब्रह्मस्वरूपानन्दस्य प्राप्तत्वेऽपि औपाधिकभेदभ्रमेण प्राप्तत्वभ्रमात् तत्कामनया मुमुक्षा संभवतीति चेन्न; स्वाभाविको भेदः स्वस्मिन्नवगतो वा न वा। नाद्यः; अभिन्नत्वेन ज्ञाते अप्राप्तत्वभ्रमासंभवेन कामनादिविरहेण 25 मुमुक्षाविरहात्। न द्वितीयः; प्राप्तियोग्यत्वज्ञानासंभवेन मुमुक्षासंभवात् ॥

[1] घ. प्रोवाचेति।

नहि भिन्नस्याभेदरूपप्राप्तियोग्यतास्ति, कण्ठचामीकरन्यायस्तु विषमः । तत्र प्राप्तत्वबुद्ध्यनन्तरं कामनाविरहात्ततः पूर्वमेवाप्राप्तत्वभ्रमेण तत्कामनासंभवात् ॥

किञ्च ब्रह्मविचारे ब्रह्मजिज्ञासुरेवाधिकारी, यथा कर्मविचारे कर्मजिज्ञासुः । जिज्ञासाहेतुश्च पूर्वोत्तरभागसाधारणसाङ्गाध्ययनजन्यापातप्रतीतिरेवेति कुतः साधनचतुष्टयापेक्षा । अनन्तस्थिरफलनिर्णिनीषया हि विचारे प्रवृत्तिः, अतः कथं नित्यानित्यवस्तुविवेकादीनामुपयोगः । तेषां विचारैकसाध्यत्वेन विचारपूर्ववृत्तत्वमसंभवदुक्तिकम् । नच तेषामन्वयव्यतिरेकाभ्यां विचारपूर्ववृत्तत्वम्; उभयतो व्यभिचारेण[1] तदयोगादिति सिद्धं कर्मविचारस्यैव पूर्ववृत्तत्वं[2] संभवदुक्तिकमिति ॥

इति वेदान्तविजयमङ्गलदीपिकायां साधनचतुष्टयपूर्ववृत्तत्वभङ्गश्चतुर्थः ॥

---

श्रीः

## अथ शास्त्रभेदभङ्गः प्रारभ्यते ॥

पूर्वं कर्मविचारस्य वृत्तत्वात्तदनन्तरम् ।
वृत्ते ब्रह्मविचारस्य सिद्धं मीमांसयोर्द्वयोः ॥
ऐक्यं तज्ज्ञोपदेशाच्च वृत्तजिज्ञासयोरपि ।
युक्तीनां लक्षणस्यापि साम्याच्छब्दबलस्य च ॥

तदुक्तं महाचार्यैः—

जिज्ञासायुक्तिवृत्तीनामैक्यमक्षरलक्ष्मणोः ।
साम्यात् तद्ज्ञोपदेशाच्च तदुक्त्याद्यविरोधतः ॥ इति ।

कर्मब्रह्ममीमांसयोः अथातो ब्रह्मजिज्ञासेति सूत्रेण कर्मविचारस्य वृत्तत्वा[3]नुवादेन ब्रह्मविचारस्य तदनन्तरकर्तव्यताप्रतिज्ञानात् सिद्धमैकग्रन्थ्यम् ।

---

१ ख. परिचयायोगादिति । २ घ. पूर्ववृत्तत्वमिति । ३ घ. वृत्तत्वानुवादेन ।

अन्यथा ब्रह्मजिज्ञासेत्येवं[1] सूत्रशैली स्यात् । किञ्च जिज्ञासाविशेषादपि सिद्धमैकग्रन्थ्यम् ॥

तथाहि—अधीतसाङ्गसशिरस्कवेदोऽपि पुरुषः साङ्गवेदाध्ययनेन परिनिष्पन्नानन्तस्थिरफलकर्मब्रह्मावबोधः सन् निष्पन्नज्ञानस्यापातप्रतीतिरूपतया[2] सन्दिहानः कृत्स्नमपि वेदार्थं जिज्ञासते । तदर्थतया प्रवर्तमानो ग्रन्थः कथं भिद्येत । क्रमसङ्गत्योः सद्भावात्, एकव्याख्यानरूपत्वाच्च । नच पूर्वोत्तरमीमांसयोः कर्तृभेदेन भेदः शङ्कनीयः; आचार्यान्तेवासिनोः व्यासजैमिन्योरनुग्रहप्रवणतया अन्योन्यसमयेनैकैकभागकरणात् । अन्यथा[3] एकैकभागकरणे निमित्ताभावात् । न तावत्तदर्थापरिज्ञानं; उभयोर्ब्रह्मविदग्रेसरत्वेन तदयोगात् । नाप्यनुग्रहाभावः; एकैकमीमांसाया अपि अकरणप्रसङ्गात् ॥

नचोभयोरेकैकभागकरणे नियामकाभावः; प्रमेयगौरवस्यैव नियामकत्वात् । आचार्यो हि व्यासः अभ्यर्हितब्रह्मविचारं कर्तुमर्हतीति जैमिनेस्तदकरणात् । आचार्यस्य तु पूर्वभागाकरणं शिष्यस्य जैमिनेरनुग्रहशीलताप्रदर्शनार्थं स्वस्य तस्मिन् स्नेहातिशयज्ञापनार्थं चेति न विरोधः । वृत्तं च पूर्वोत्तरभागयोः समानम् । अथातो धर्मजिज्ञासेत्यत्रानन्तर्यप्रतियोगिवेदाध्ययनलक्षणपूर्ववृत्तत्वस्य भागद्वयसाधरणत्वात् । युक्तिश्च समाना । अध्ययनविधेरक्षरग्रहणपर्यन्तत्वेनार्थज्ञानपर्यन्तत्वाभावात् । स्वाध्यायस्याविवक्षितार्थत्वेन मीमांसानारम्भणीयेति पूर्वपक्षयुक्तेः अर्थपरत्वस्य स्वतः प्राप्तस्य बाधकाभावेन अध्ययनविधिवाक्यवद्विवक्षितार्थत्वात् मीमांसारम्भणीयेति सिद्धान्तयुक्तेश्च समानत्वात्[4] । परमते चाध्ययनविधेः स्वर्गार्थत्वात् स्वाध्यायस्याविवक्षितार्थत्वमिति पूर्वपक्षयुक्तेरध्येतव्य इत्यर्थज्ञानार्थमध्ययनेनैवाक्षरराशिग्रहणं कार्यमिति नियमविधानात् विवक्षितार्थत्वमिति सिद्धान्तयुक्तेश्च समानत्वात् । अक्षराणि च समानानि । अथातो धर्मजिज्ञासेत्यत्र अक्षरसमूहात्मकधर्मपदस्योपासनेऽपि वृत्तेः । यदि साक्षात्फलसाधनं धर्मः तदा उपासनसाध्यमपूर्वमेव धर्मोऽस्तु । यद्युत्तरभागविचारोऽपि धर्मविचारः

१ घ. जिज्ञासेत्येव । २ क-ख. ज्ञानव्यापारप्रतीति । ३ क-ख. वेदैकभागाधिकरणे । ४ क-ख. समत्वात् ।

स्यात् तदा ब्रह्मप्राधान्यभङ्ग इति चेन्न; परमात्मप्रसादस्य तद्धेतुव्यापारस्य वा धर्मशब्दार्थत्वेन उपचारेण ब्रह्मविचारत्वाविरोधात् भृत्योपचारेण राज्ञ इव ॥

किञ्च प्राप्यत्वमेव हि ब्रह्मणः प्राधान्यं फलप्रदत्वं वा, उभयमपि न तावता हीयते ॥ 5

नन्वैकशास्त्र्ये भागद्वयसाधारणप्रतिज्ञा स्यात्, यदि धर्मजिज्ञासासूत्रमेव सा तदा ब्रह्मविचारोऽपि जैमिनिना क्रियेतेति चेन्न; नहि अथ-शब्दानुशासनमित्यादाविव स्वकर्तव्यत्वप्रतिज्ञापरोऽयमथशब्दः, किन्तु साङ्गवेदाध्ययनानन्तरं भागद्वयविचारकर्तव्यताप्रधानपरः । यद्यपि वेद-विचारकर्तव्यत्वसाधनस्य स्वकृतिवैयर्थ्यपरिहारार्थत्वादुत्तरभागेऽपि स्व- 10 कृतिः प्राप्नोति, तथापि स्वाचार्यान्तेवासिनोः कृतसंकेततया स्वस्याचा-र्यकृतिवैयर्थ्यपरिहारार्थं विचारकर्तव्यत्वसमर्थनमिति न विरोधः । अत एव कर्मदेवताकाण्डयोराद्यन्तसूत्राणि वेदाचार्येणैव प्रणीतानि । तन्नियमनेन जैमिनिना मध्यमसूत्राणि प्रणीतानि इतिं तत्सम्प्रदायवेदिनो वदन्ति । लक्षणमपि समानम् । 'चोदनालक्षणोऽर्थो धर्म' इति चोदनालक्षणत्वरूप- 15 धर्मलक्षणस्य परमात्मोपासनसाधारणत्वात् । अन्यथा लक्षणस्य तत्राति-व्याप्तिप्रसङ्गात् । तस्मात् एतदनुरोधेनैव प्रतिज्ञासूत्रस्य कृत्स्नवेदार्थविष-यत्वसिद्धिः । तज्ज्ञोपदेशाच्च शास्त्रैक्यसिद्धिः, तज्ज्ञस्य भगवतो बोधायन-स्योपदेशो हि दृश्यते "संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धि"रिति । तत्र संहितमिति सङ्गत्यभिधानात् सङ्गतेश्चैकग्रन्थ्य- 20 प्रयोजनत्वात् शास्त्रैक्यसिद्धिः । अनेकैरप्येकग्रन्थकरणस्य समस्यापूरणादौ दृष्टत्वात् ऋत्विक्संहितयजमानकर्तृकत्वस्यैककर्मणि यागादौ दृष्टत्वाच्च कर्तृभेदो नैक्यविरोधी । एकस्य वा नैकस्य वा कर्तुः संकल्पाधीनत्वादै-क्यस्य ॥

नन्वेवमुपासनस्यैव धर्मशब्दार्थत्वेन उपासनविचारप्रतिज्ञैव स्यात् न 25 ब्रह्मविचारप्रतिज्ञेति चेन्न; ब्रह्मणोऽप्युपासनविषयतया तत्फलतया तत्प्र-

दातृतया च अपेक्षितस्य ब्रह्मणः 'अथातश्शेषलक्षण'मित्यादिना शेषत्वादे-
रिव प्रतिज्ञाया विरोधाभावात् तदुपासनप्रतिज्ञाया अपि तत्रान्तर्भावात् ।
नन्वेवं वेदान्तभागस्यापि उपासनरूपकार्यपरतया सिद्धे व्युत्पत्त्यभावप्रयुक्त
आरम्भाक्षेपोऽनुपपन्न इति चेन्न; उपासनविधिविधुरसद्विद्यादेः सिद्धब्रह्म-
5 परत्वेन सिद्धे व्युत्पत्त्यभावप्रयुक्ताविवक्षितार्थत्वसिद्धौ अप्रामाणिकब्रह्मोपा-
सनपरवाक्यानां सर्वेषामप्यविवक्षितार्थत्वाक्षेपेण कृत्स्नवेदान्तभागविचारस्या-
रम्भाक्षेपसंभवात् । प्रमाणलक्षणे गुरुमते एकदेशमुखेन सर्वाक्षेपन्यायात् ॥

अथवा धर्मशब्दस्य वेदार्थपरतया ब्रह्मणोऽपि वेदार्थत्वेन तद्विचारप्र-
तिज्ञा न विरुद्धा । तस्य अथातो वेदार्थजिज्ञासेत्येव प्रतिज्ञा स्यादिति चेत्
10 न, वेदार्थविचारप्रवृत्तेः रागमूलत्वज्ञापनार्थत्वात् धर्मशब्दस्यालौकिकश्रेय-
स्साधनपरत्वात् । नचैवं ब्रह्मविचारासाधारणप्रतिज्ञावत् कर्मविचारासाधा-
रणप्रतिज्ञा स्यादिति वाच्यम्; तत्र ब्रह्मविचारस्याकर्तव्यत्वशङ्कोत्थानसंभवेन
तत्परिहारार्थत्वात् प्रतिज्ञायाः । अत एव च उत्तरसूत्रत्रयमपि तत्कर्तव्य-
त्वसमर्थनार्थमेव । तदुक्तम्—

15 व्युत्पत्त्यभावः प्रतिपत्तिदौस्स्थ्य-
मन्येन सिद्धत्वमथाफलत्वम् ।
एतानि वै सूत्रचतुष्टयेना-
नारम्भमूलानि निराकृतानि ॥ इति ॥

चतुस्सूत्र्या आरम्भार्थत्वं च पूर्वसूत्रप्रतिज्ञातकर्तव्यत्वपरतायाः पञ्चम्यन्त-
20 पदेनोत्तरसूत्रद्वयस्य स्वरसतः प्रतीतेः; द्वितीयसूत्रे च पूर्वकाण्डद्वितीयसूत्रे
धर्मशब्दस्येव ब्रह्मशब्दस्याभावेन लक्षणपरत्वासम्भवात् पूर्वसूत्रशेषत्वस्यैव
स्वरसतः प्रतीतेश्चावगम्यते । पूर्वकाण्डविचारे च अकर्तव्यत्वहेत्वभावेन
पूर्वपक्षानुत्थानात् असाधारणप्रतिज्ञाया न किञ्चित् प्रयोजनमिति तदकरणम् ।
तदुक्तग्रहणाच्च शास्त्रैक्यसिद्धिः—दृश्यते हि तदुक्तग्रहणं, "संज्ञातश्चेत्
25 तदुक्तमस्ति तु तदपि, अक्षरधियां त्ववरोधः, सामान्यतद्भावाभ्यामौ-
पसद्वत् तदुक्तं, प्रदानवदेव हि तदुक्तमि"ति सूत्रेषु । अत्र कर्तृ-

निर्देशस्य वा अधिकरणनिर्देशस्य वा अभावे तदुक्तमित्युक्तिः एकस्मिन्नेव ग्रन्थे पूर्वोत्तरतां स्वरसमवगमयति 'अल्पश्रुतेरिति चेत्तदुक्त'मित्यादिवत् । अत एव जैमिनिसूत्रानन्तर्गतार्थविषये 'परं जैमिनिर्मुख्यत्वात्' इति जैमिनिग्रहणं कृतम् ॥

"संज्ञातश्चेत्तदुक्तम्" इत्यादिसूत्राणामयमर्थः— 5

छन्दोगानां वाजसनेयिनां चोद्गीथविद्याया ऐक्यं पूर्वपक्षीकृत्य निरस्य संज्ञात ऐक्यमाशङ्क्योक्तं 'संज्ञातश्चेत्तदुक्तं अस्ति तु तदपि' इति । संज्ञैक्येऽपि भेद उक्तः यथा 'प्रकरणान्तरे प्रयोजनान्यत्व'मित्यत्र नैयमिकमासाग्निहोत्रयोरिति प्रथमसूत्रार्थः ॥

"यत्तदद्रेश्य"मित्याद्युक्तास्थूलत्वादिविषयाणामक्षरधियां सर्वत्रावरोधः, 10 सर्वत्र ब्रह्मण एकत्वात् तैर्विना इतरव्यावृत्तब्रह्मानुसन्धानानुपपत्तेश्च । अतः प्रधानब्रह्मानुसन्धाने तद्गुणानामप्यविरोधः औपसदवत् जामदग्न्यचतूरात्रपुरोडाश्युपसद्गुणभूतस्य मन्त्रस्योपसदनुवर्तित्वेनोपांशुगुणकत्वमुक्तम् 'गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोग' इत्यत्रेति द्वितीयसूत्रार्थः ॥

दहरविद्यायामपहतपाप्मत्वादिगुणविशिष्टोपासने तत्तद्गुणविशिष्टस्वरूप- 15 भेदात् प्रतिगुणं गुण्यावृत्तिः, यथा इन्द्राय राज्ञ इत्यादिषु विशिष्टस्वरूपभेदात् प्रकारावृत्तिः, तदुक्तं संकर्षणे 'नाना वा देवता पृथक्त्वा'दिति ॥

इन्द्राय राज्ञे पुरोडाशमेकादशकपालं, इन्द्रायाधिराजाय, इन्द्राय स्वराज्ञे, इति विहितायां त्रिपुरोडाशिन्यामिष्टौ हविर्भेदात् भेदेनावदानप्राप्तौ 'वचनात् सर्वेषां सहावदीयेरन्नि'ति सूत्रेण सर्वेषामभिगमयन्नवद्यतीति वचनात् 20 सहावदाने स्थापिते ततोऽवदानसाहित्यात् प्रदानसाहित्यं 'तेषां सहप्रदानमवदानैकत्वा'दिति सूत्रेण पूर्वपक्षीकृत्य 'नाना वा देवता पृथक्त्वा'दिति अत्र राजत्वादिविशिष्टदेवताभेदात् प्रदानं नानैवेत्युक्तमिति तृतीयसूत्रार्थः ॥

आदिग्रहणं च शास्त्रैक्यसाधकम्; दृश्यते च तत् "सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्" "श्रुत्यादिबलीयस्त्वाच्च न बाध" इति । अत्र आदि- 25 शब्द अस्मिन्नेव ग्रन्थे पूर्वोक्तानामन्यत्र गणपठितानां वा श्रुत्युक्तानां वा

बोधकः स्यात्, इह चोत्तरयोर्द्वयोरप्यभावेन एकग्रन्थोक्तानां संयोगादीनां चोदनादीत्यादिशब्देन ग्रहणं श्रुत्यादीत्यादिशब्देन पूर्वोक्तानां लिङ्गादीनां ग्रहणं च स्यात्। तथा चैकग्रन्थ्यसिद्धिः ॥

किञ्च सर्ववेदान्तप्रत्ययमित्यत्र साध्यानुपादानात् शाखान्तराधिकरणसा-
5 ध्यमेवात्राप्यन्वीयत इति ऐक्यसिद्धिः।

पूर्वोत्तरभागयोः विरुद्धार्थप्रतिपादनाभावादपि न शास्त्रभेदः। तथाहि—

एवं हि तयोर्विरोधः प्रतीयते। पूर्वभागे 'आम्नायस्य क्रियार्थत्वा'दिति पूर्वपक्षं कृत्वा "विधिना त्वेकवाक्यत्वात्" इति क्रियार्थत्वेनैव वेदस्य प्रामाण्यमुक्तम्। इह त्वारम्भसूत्रे सिद्धपराणामपि प्रामाण्यमुच्यत इति वि-
10 रोधः ॥ १ ॥

एवमष्टमे 'गुणत्वेन देवताश्रुति'रित्यत्र देवतायाः फलप्रदातृत्वेन प्राधान्यमाशङ्क्य कर्मण एवापूर्वद्वारा फलहेतुतया प्राधान्यम्, देवतायास्तु गुणतया अप्राधान्यमुक्तम्। इह तु "फलमत उपपत्ते"रित्यधिकरणे फलप्रदतया देवताया एव प्राधान्यमुच्यत इति विरोधः ॥ २ ॥

15 एवं नवमे "देवता वा प्रयोजयेदतिथिवत् भोजनस्य तदर्थत्वात्" इत्यादिसूत्रैः किं देवतायाः फलमुत कर्मण इति संशय्य, देवतापूजात्मक(तया)यागस्य स्वर्गे जननीये देवताप्रीतिरेव द्वारम्[1]। न तु कल्प्यमपूर्वम्, तस्मात् देवतैव फलप्रदात्रीति पूर्वपक्षं कृत्वा, विधिप्रत्ययेन प्रतीयमाना भावना पुरुषार्थमपेक्षमाणैकपदप्रतिपन्नमपि यागमपुरुषार्थतयोपेक्ष्य वाक्य-
20 प्रतिपन्नमपि स्वर्गं पुरुषार्थतया गृहीत्वा तत्साधनमाकाङ्क्षन्ती यागमेव करणतया स्वीकरोति। तत्कथंभावकाङ्क्षायां द्रव्यदेवते तादर्थ्येन यागनिर्वर्तकतया गृह्णातीति द्रव्यदेवतयोः यागार्थत्वमेव नतु प्राधान्यमिति सिद्धान्तितम्। इह तु देवताधिकरणे देवताया विग्रहादिमत्त्वं प्रतिपाद्यत इति विरोधः ॥ ३ ॥

25 नवम एव 'असंयोगात्तदर्थेषु तद्विशिष्टं प्रतीयेते'त्यधिकरणे देवतानिरासः प्रतीयते। तथाहि—

---

१ क-देवताप्रतीतिरेव।

ज्योतिष्टोमे देवताप्रकाशनार्थः सुब्रह्मण्यानिगदः "इन्द्र आगच्छ हरिव आगच्छे"त्यादिः सोऽग्निष्टुत्यतिदिष्टः । तत्राग्नेयी सुब्रह्मण्येति वचनात् इन्द्रपदस्थाने अग्निपदं प्रक्षिप्यते । हरिवआदिपदेषु किमूहितव्या न वेति संशयः । तदर्थं च किं समवेतवचना-नवेति । तत्र इन्द्र हरिव इत्यादिभिरिन्द्रे एते गुणाः सन्तीति गम्यते । ततश्च स्वगुणद्वारेणेन्द्रं प्रकाशयितुममीषामुच्चारणं दृष्टार्थत्वात्, तेनाग्निरपि तथा प्रकाश्यत इति हरिवआदिपदस्थाने रोहितादिशब्दोहः कार्य इति पूर्वपक्षः । सिद्धान्ते वाक्यशेषाणां स्तुतिमात्रपरत्वात् इन्द्रे नैते गुणास्सन्तीति किञ्चित् प्रमाणमस्ति । तस्मादसमवेतार्थत्वादविद्यमानैरेव गुणैरदृष्टार्थमिन्द्रः प्रकाश्यत इति तथैवाग्निरपि प्रकाश्यत इत्यनूह इति । तदपि शारीरकदेवताधिकरणविरुद्धम् ॥ ४ ॥ 10

तथा दशमे 'विधिशब्दस्य मन्त्रत्वे भावः स्यात् तेन चोदने'त्यनेन आग्नेययागे यदाग्नेयोऽष्टाकपालो भवतीति विहिते हविस्त्यागवेलायामग्निशब्दसमानार्थेन शुच्यादिशब्देनापि देवतोद्देशे प्राप्ते विधिगतशब्देनाग्निशब्देनैव हविषः संबन्धचोदना । तस्मात्तस्यैव मन्त्रत्वेनोपादानमित्युक्तम् ॥ ५ ॥

तथा 'तथोत्तरस्यां ततौ तत्प्रकृतित्वात्' इत्यत्र सौर्यचरावतिदेशप्राप्तेषु 15 अग्नेरहमुज्जितिमनूज्जेषमित्यादिमन्त्रेष्वप्यविशेषात् सूर्यसवित्रादिष्वन्यतम ऊहितव्य इति प्राप्ते सूर्यशब्दस्य देवतात्वेन तस्यैवोह इति परिहृतम् ॥६॥

एवमाधाने "अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेत् अग्नये पावकाय अग्नयेशुचय" इति विहितपवमानेष्टौ "अविकारो वार्थशब्दानपायात्स्याद्द्रव्यव"दिति सूत्रेण आग्नेययागादतिदेशप्राप्तेषु मन्त्रेषु अविकारो नि- 20 र्गुणो विधानं स्यात् विधिशब्दस्य तदर्थदेवतायाश्च तथाप्यनपायात् । यथा "सा वा एषा सर्वदेवत्या यदजा वशा, वायव्यामालभते"ति अजावशाचोदितमपि द्रव्यं विकृतौ 'छागस्य वपाया मेदस' इत्यविकृतेनैव मन्त्रेणाभिधीयते, अर्थशब्दयोरनपायात् इति पूर्वपक्षं कृत्वा, शब्दस्वरूपमेव क्रतुसमन्वयि नार्थ इति "आरम्भासमवायाद्वा चोदितेनाभिधानं स्यात्" इत्यादिसूत्रे- 25 णोक्तम् । आरम्भेण स्वरूपेणासमवायाद्देवताया इत्यर्थः । एतत्सर्वं शारीरकदेवताधिकरणविरुद्धम् ॥ ७ ॥

किञ्च ऐकशास्त्र्ये सर्ववेदान्तप्रत्ययन्यायेन अधिकाशङ्कापरिहारार्थमावश्यकेन सर्वशाखाप्रत्ययन्यायस्य पौनरुक्त्यप्रसङ्गः ॥ ८ ॥

काण्डद्वयस्थयोः अपशूद्राधिकरणयोश्च पौनरुक्त्यप्रसङ्गश्च ॥ ९ ॥

अतः कथमैकशास्त्र्यमिति । अत्रोच्यते—

5 न तावदर्थवादाधिकरणारम्भाधिकरणयोर्विरोधः; उत्सर्गापवादरूपत्वात् तयोः । नचापवादत्वे तत्सामीप्यप्रसङ्गः; पाणिनीये द्वितीयस्य लुकः षाष्ठिकालुका अपवाददर्शनात् । यद्वा—अनुष्ठानापर्यवसाने प्रयोजनाभावेनाविवक्षितार्थत्वशङ्कायां विध्येकवाक्यत्वेनार्थवादस्य प्रामाण्यमुक्तम् । आरम्भसूत्रे तु उपासनाविधिविधुरसिद्धपरवाक्यानां विध्येकवाक्यत्वाभावेऽपि प्रत्यक्षादेरिव 10 पुरुषार्थोपस्थापकतया तत्र कामनोत्पादनमुखेन तत्साधनप्रवर्तकतयानुष्ठानपर्यवसायित्वमुपपाद्यत इति । अष्टमे "गुणत्वेन देवता श्रुति"रिति सूत्रस्यायमर्थः—यद्यप्यार्थप्राधान्यशालिनी देवता, तथाप्यनुष्ठेयपरे विधिवाक्ये द्रव्यदेवते द्वे अपि गुणत्वेन श्रूयेते, अतो न द्रव्यापेक्षया देवताया विशेषः ॥

15 किञ्च ऐन्द्राग्नमित्यत्र द्रव्यं विशेष्यत्वेन प्रधानं देवता तु विशेषणत्वेन गुणभूता । यद्यप्यार्थप्राधान्यं देवतायास्तथापि ऐन्द्राग्नमेकादशकपालमिति शाब्दप्रतीतिदशायामार्थप्राधान्याप्रतीतेः प्रतीतशब्दप्राधान्यानुरोधेन अतिदेशस्य कर्तव्यत्वात् आग्नेयादिविध्यन्तनियमः सिध्यति । अतो न विरोधः ॥

20 नवमे "देवता वा प्रयोजयेदतिथिवत् भोजनस्य तदर्थत्वात्, आर्थपत्याच्च ततश्च तेन संबन्ध" इति पूर्वपक्षसूत्राणामयमर्थः—क्रियाप्रधानवाक्ये अप्रधानभूताऽपि देवता आर्थप्राधान्यात् स्वाराधनार्थं द्रव्यं प्रयोजयेदतिथिवत् तस्याश्चाराध्यत्वं विभूतिमत्त्वाद्युक्तम् । सा च निरपेक्षापि परिचरणप्रसन्ना भवतीति । "अपिवा शब्दपूर्वत्वात् यज्ञकर्म प्रधानं स्यात् गुणत्वे देवताश्रुतिः 25 अतिथौ तत्प्रधानत्वमभावः कर्मणि स्यात् तस्य प्रीतिविधानत्वात्" इति चतुर्णां सिद्धान्तसूत्राणामयमर्थः—यद्यप्यार्थप्राधान्यमस्ति तथापि कर्तव्योपदेशवाक्ये

फलकामप्रवर्तिका शाब्दप्रधानभूता पूर्वं कर्तव्यत्वेन बुद्ध्यारूढा क्रियैव स्वसिद्ध्यर्थं द्रव्यदेवतादीन् प्रयुङ्क्ते । अतो गुणत्वेन श्रुता देवता अप्रयोजिका । अतिथेस्तु प्रयोजकत्वमेव । अन्यथा अतिथिनिमित्तकत्वेन विधीयमानस्य ( आतिथ्य ) कर्मणः अभावप्रसङ्गः । नह्यन्यप्रयुक्तातिथ्यकर्मनिर्वर्तनायातिथिरानीयत इति अत्र न कञ्चिद्विरोधं पश्यामः ॥ 5

नवम एव "असंयोगात् तदर्थेषु तद्विशिष्टं प्रतीयेत" इत्यत्रापि सुब्रह्मण्यायामिन्द्रपदं कर्मसमवेतदेवताप्रकाशकत्वान्न स्तुत्युपयोगी । हरिव-आदिपदं तु तेषां गुणानां कर्मासमवायात् देवतास्तुत्यर्थत्वेनोपयुज्यते । स्तुतिश्च सता असता च भवतीति अविद्यमानेनेन्द्र इवाविद्यमानेन अ-ग्नावपि न विरुध्यते। उत्कृष्टदेवतागुणेन अपकृष्टदेवतास्तुतिः प्रीत्यतिशय- 10 करी, सेनापतौ राजगुणैः स्तुतिवत् । अग्निप्रकाशनार्थं अग्निवदूहे न्या-यसिद्धेऽपि आग्नेयीति वचनं विशेषणे ऊहपरिसंख्यार्थमेव । वस्तुतस्तु आग्नेयीति वचनमेव देवतां साधयति, देवतासत्त्वे हि गुणानामूहप्रसङ्गेन परिसंख्यात्वसिद्धेः । नचेयं परिसंख्या न भवतीति वाच्यम्; तथा सत्याग्नेयीति वचनवैयर्थ्यप्रसङ्गात् । ततश्चेन्द्रगुणप्रकाशकैरेव पदैरग्निगुण- 15 प्रकाशनं द्रष्टव्यम् ॥

दशमे "विधिशब्दस्य मन्त्रत्वे भावः स्या"दिति सूत्रस्याप्ययमर्थः । विधि-वाक्यगतशब्द एव मन्त्रे प्रयोक्तव्यः, तेनैव शब्देनाग्नेर्हविस्संबन्धबो-धनायाः सत्त्वात् । येन शब्देन देवताया द्रव्यसंबन्धः ( यष्टुश्च यष्टव्यभूतस्वसंबन्धः) तेन ( पशुश्च यद्द्रव्यभूतः संबन्धस्तेन ) शब्देना- 20 भिधाने प्रीत्यतिरेकात् तस्य शब्दस्य प्रकृतत्वाच्च देवतोद्देशाय शब्दा-पेक्षायां स एव गृह्यते । दृश्यते च लोके स्वसंबन्धद्योतक(तया) मातुलादिशब्देनाभिधाने प्रीत्यतिशयः । शब्दान्तरोच्चारणे कोपश्च । युक्तं चैतत् । अन्यथा अनियतशब्दोपादाने विकल्पप्रसङ्गात् । चोदनो-पस्थितस्यैकस्यैव ग्रहणौचित्यात् द्रव्यदेवतासंबन्धहेतु(व्यापारानुष्ठाने) तद्वि- 25 धायकवाक्यगतशब्दः सन्निहित इति तस्योपादानं युक्तम् । सौर्यचरौ त्विति-

देशप्राप्तोज्झित्यादिमन्त्राणां सौर्यवाक्यविहितत्वाभावेनासन्निहितत्वाविशेषात् यस्यकस्याप्युपादानं स्यादिति शङ्कानिरासार्थं "तथोत्तरस्या"मिति सूत्रे प्रकृतावुज्झित्यादिनिगदेषु विधिगतशब्दस्य दर्शनात् तथैव विकृतावपि युक्तमिति सूत्राक्षरयोजना। "आरम्भासमसमवायाद्वा चोदितेनाभिधानं स्यात्"
5 द्रव्येष्वारम्भगामित्वादर्थे विकारः सामर्थ्या"दिति सूत्रद्वयस्याप्ययमर्थः। देवतायाः स्वरूपेण यागानिर्वर्तकत्वात् शब्देनोद्दिश्यमानतया निर्वर्तकत्वात् शब्दापेक्षायां विनिगमकाभावेन शब्दद्वयोपादानं युक्तम्, अन्यथा विधावपि पदद्वयमनर्थकं स्यात्। द्रव्यस्य तु स्वरूपेण निर्वर्तकत्वात् अनपेक्षितशब्दो न शास्त्रार्थ इति न तद्वशेनाजाशब्दोहः, अविकारेण मन्त्रस्य
10 द्रव्याभिधानसामर्थ्यात्। किञ्च—

पावकः पवमानश्च शुचिरग्निश्च ते स्मृताः।
निर्मन्थ्यः पवमानस्तु वैद्युतः पावकः स्मृतः।
शुचिः शोचिस्तु विज्ञेयः स्वाहा(पुत्रा)स्तु ते त्रयः॥

इति लैङ्गाद्युक्तरीत्या देवतानां भिन्नत्वात् तदसाधारण्यार्थमग्नये पावकायेति
15 निर्देशो युक्तः। इदानीमितरव्यावृत्तस्वरूपेणायमारम्भशब्दः, अतो न तत्रापि विरोधः॥

ननु यदि जैमिनिबादरायणयोरैककण्ठ्यं तदा "मध्वादिष्वसंभवादनधिकारं जैमिनिः, धर्मं जैमिनिरत एव, शेषत्वात् पुरुषार्थवादो यथान्येष्विति जैमिनिः, परामर्शं जैमिनिरचोदनाच्चापवदति हि, परं जैमिनिर्मु-
20 ख्यत्वात्, ब्राह्मेण जैमिनिरुपन्यासादिभ्यः, भावं जैमिनिः विकल्पामननात्"। इत्यादिषु जैमिनिमतनिरासः कथमिति चेत्, उच्यते—हयशिरोपाख्यानादिषु जैमिनेर्बादरायणोपदिष्टब्रह्मविद्यात्वावगमात् श्रवणवेलायां जैमिनिकृतानि चोद्यानि शिष्यानुग्रहेण शिष्यस्य जैमिनेः बुद्ध्यतिशयज्ञापनाय तदुक्ततयाऽनूद्य तन्निरासः कृतः॥

25 अन्यथा "साक्षादप्यविरोधं जैमिनिः" "संपत्तेरिति जैमिनिः तथाहि दर्शयति" "अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्याम"पि चैवमेके

"तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः" इत्यादिभिः स्वाभिमतार्थस्य जैमिनिमतत्वेनोपन्यासविरोधप्रसङ्गः ॥

नचापशूद्राधिकरणयोः पौनरुक्त्यम्; शूद्रेत्यामन्त्रणनिमित्ताधिका(र)-(शङ्का)निराकरणार्थत्वात् शारीरकापशूद्राधिकारणस्य ॥

नापि सर्ववेदान्तप्रत्ययेन पौनरुक्त्यशङ्का । नहि तत्र सर्ववेदान्तप्रत्ययं 5 एकं अनेकं वेति संशयः, न वाऽनेकमिति पूर्वः पक्षः, एकमिति वा राद्धान्तः; किन्तु सर्वशाखाप्रत्ययन्यायोऽत्र प्रवर्तते न वेति सन्देहे न प्रवर्तत इति पूर्वः पक्षः, प्रवर्तत इति राद्धान्तः । कुतोऽयमर्थः समधिगत इति चेत्, साध्यानिर्देशादिति ब्रूमः । तदनिर्देशश्च तत्प्रवृत्तिप्रतिपादनपरे अस्मिन् सूत्रे तदेकत्वस्य साध्यस्यैवान्वयात् । एवं च शाखान्तराधिकरण- 10 सिद्धान्तहेतूनामैक्यसाधकानां संयोगचोदनाख्या विशेषाणां सत्त्वेऽपि अक्षरविद्यायां 'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्' इति आथर्वणिकासाधारणशिरोव्रतस्य मुण्डके अक्षरविद्याङ्गत्वदर्शनेन वाजसनेयकाक्षरविद्यातो भेदावश्यम्भावात् सारस्वतसत्रलिङ्गदर्शनवत् तस्य सामान्यतो वेदान्तविहितविद्यासु शाखान्तराधिकरणन्यायप्रवृत्तौ लिङ्गदर्श- 15 नत्वात् तन्निमित्ताशङ्कानिरा(स)करणार्थत्वान्न पौनरुक्त्यम् ॥

सारस्वतसत्रे हि श्रूयते—"ये पुरोडाशिनस्त उपवसन्ति ये सान्नायिनस्ते वत्सं धारयन्ती"ति । सान्नायिन इष्टप्रथमयज्ञाः सोमयाजिनः, सोमयाजिन एव सान्नाय्यविधानात् । अन्ये पुरोडाशिनः, 'पुरोडाशाभ्यामेव सोमयाजिनं याजयेत्' इति श्रुतेः । तत्र ताण्डकशाखायां एष वाव प्रथमो यज्ञो यज्ञानां 20 यज्ज्योतिष्टोमः' इति क्रत्वन्तराणां ज्योतिष्टोमपूर्वकत्वावगमात् सारस्वतसत्रे पुरोडाशदर्शनं सर्वशाखागतसारस्वतसत्राभेदे नोपपद्यते । भेदे तु ताण्डकशाखागतस्यैव सारस्वतसत्रस्य ज्योतिष्टोमपूर्वकत्वं शाखान्तरे तदननुवृत्तेः । तद्विहितसारस्वतसत्रे पुरोडाशदर्शनमुपपन्नम् । अतो नानाशाखागतानां सारस्वतसत्राणां मिथो भेद इति सारस्वतसत्रमात्रे लिङ्गदर्शनं सामान्यत 25 उक्तम् । निरुक्ताक्षेपपरिहारार्थमिदं सूत्रम् 'स्वाध्यायस्य तथात्वे हि समाचारेऽधिकाराच्च सववच्च तन्नियमः' इति ॥

अयमर्थः—तथात्वं सप्रकारत्वं साङ्गत्वमिति यावत् । स्वाध्यायाध्ययनस्य साङ्गत्वसिद्ध्यर्थं शिरोव्रतनियम इत्यर्थः । कुत एतत्? 'नैतदचीर्णव्रतोऽधीते' इति तस्याध्ययनसंयोगात् समाचारेऽधिकाराच्च समाचाराख्यग्रन्थे इदमपि वेदव्रतेन व्याख्यातमित्यतिदेशात् । तस्याय-
5 मर्थः—इदमपि प्रस्तुतं वेदव्रतान्तरं परामृश्यते । वेदव्रतेन शिरोव्रते पुष्कलोपदेशं कृत्वा व्रतान्तरे (प्रस्तुत्य)शिरोव्रतक्रममतिदिशत् वाक्यं शिरोव्रतं वेदव्रतशब्देन निर्दिशेत्, सववच्च तन्नियमः—यथाहि सवहोमाः सप्तसूर्यादयः शतौदनपर्यन्ता आथर्वणिका एकाग्निसंबन्धिनस्तत्रैव भवन्ति न त्रेताग्निषु । तेषामेवैतामित्यस्यायमर्थः—शिरोव्रतव-
10 तामेव एतामक्षरविद्यां वदेत उपदिशेदिति । उपदेशश्चोपस्थितोपनिषद्वाक्येनैवेति लभ्यते, सन्निहितपरित्यागे नियामकाभावात्, 'नैतदचीर्णव्रतोऽधीते, इत्युत्तरवाक्यानुगुण्याच्च । शिरोव्रतं नाम शिरसि अङ्गारपात्रधारणप्रधानः कश्चित् व्रतविशेषः ॥

यत्तु कश्चिदाह—तत्र शिरोव्रतं नामाथर्वशिरस्युपदिष्टं भस्मधारणमेव
15 शिरश्शब्देनाथर्वशिरसोऽभिधानात् तदेवात्र सर्वविद्याङ्गतया विधीयत इति ॥

तदयुक्तम्—शिरोव्रतशब्दस्य पूर्वोक्तव्रतपरत्व एव समुदायावयवयोः स्वारस्यात् समुदायोऽपि तत्र सुप्रसिद्धः । शिरश्शब्दो हि शरीरावयवविशेषे प्रसिद्धः । न ह्यथर्वोपपदरहितः शिरश्शब्दः ग्रन्थविशेषोपस्थापनसमर्थः । तस्माच्छास्त्रैक्यमविरुद्धम् ॥

20 यद्यप्यारम्भासमवायादिसूत्रे शब्दस्वरूपमेव क्रतुसमवायी नार्थ इत्युक्त्वा देवतानिराकरणं प्रतीयते एवमन्यत्रापि, तथापि न तत्र तात्पर्यम् । उक्तरीत्याऽन्यपरत्वात् तत्परत्वे वाऽभ्युपगमवादः । तत्प्रयोजनं चाश्रुतवेदान्तानां कर्मण्यश्रद्धावारणं, श्रुतवेदान्तानां हि सर्वदेवतान्तरात्मनः परमात्मन एवाराध्यतया तदाराधनरूपकर्मस्वश्रद्धा न स्यात् ।

25 येऽप्यन्यदेवता भक्ता यजन्ते श्रद्धयाऽन्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥

म्यते ॥ किञ्च वेदान्तभागे यज्ञादित्वकल्पनं तत्र तत्र क्रियते तदपि पूर्वभागोक्तयज्ञादिनिरूपणसापेक्षम् ॥

किञ्च कर्मणामल्पास्थिरफलत्वनिर्णयस्य वेदान्तभागाधिकारिविशेषणतया तत्संपादकतया पूर्वभागस्योपयोगः स्पष्ट एव । एतदभिप्रायेणैव 5 भगवता बादरायणेन पूर्वोत्तरग्रन्थयोरुपजीव्योपजीवनभावरूपसंगत्यभिप्रायेण वृत्तवर्तिष्यमाणप्रदर्शनपूर्वकमवसरप्राप्तो ब्रह्मविचारः 'अथातो ब्रह्मजिज्ञासा' इत्यनेन सूत्रेण स्वकर्तव्यत्वेन प्रतिज्ञातः । कर्मविचारानन्तरं तत एव हेतोः ब्रह्मविचारः कर्तव्य इति सूत्रार्थः । एवमेतत्सूत्रस्वारस्यात् जिज्ञासाद्यविशेषात् विरुद्धार्थप्रतिपादनाभावात् पौनरुक्त्याभावात् कृत्स्नस्य पूर्वभागस्य 10 वेदान्तभागोपयुक्तत्वाच्च सिद्धमैकशास्त्र्यमिति कृतं विस्तरेण ॥

इति वेदान्तविजयमङ्गलदीपिकायां
शास्त्रभेदभङ्गः पञ्चमः ॥

---

श्रीः

## अथावेद्यत्वभङ्गः प्रारभ्यते ।



15 **श्रवणादिविधानेन वेद्यत्वं परमात्मनः ।**
**सिध्यत्येवान्यथा तेषां वैयर्थ्यं सर्वथा भवेत् ॥**
**तेषां च वृत्तिरूपत्वे चितो मोक्षार्थता कुतः ।**
**नहि वृत्तिश्च वित्तिः स्याच्चैतन्यं च तदा भवेत् ॥**

आत्मावाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति परमात्मनः 20 श्रवणादीनां विधानात् तद्विषयतया ब्रह्मणो वेद्यत्वं तावत्सिद्धमेव, अन्यथा तेषां विधानवैयर्थ्यात् । नच तेषां वृत्तिरूपतया तद्विषयत्वं ब्रह्मणो न सिद्धमिति वाच्यम्, तथा सति "ब्रह्म वेद ब्रह्मैव भवति" "ब्रह्मविदाप्नोति परम्" "तमेवं विद्वानमृत इह भवति" इत्यादिश्रुतिविहितब्रह्मवेदनस्य मोक्षहेतुताभङ्गप्रसङ्गात्। वृत्तेश्च वेदनरूपत्वाभावात्, तथात्वे च चैतन्यत्वस्यापि 25 दुर्वारत्वात् ॥

नचैवं ब्रह्मणो वेद्यत्वे मिथ्यात्वप्रसङ्गः । तस्य मिथ्यात्वभङ्गे वक्ष्यमाण-त्वात् । यच्च दृश्यत्वे जडत्वप्रदर्शनं स्वप्रकाशस्य प्रदीपवत् प्रकाशान्तरनिर-पेक्षत्वादिति, तन्न । एकप्रमाणावगते प्रमाणान्तरजन्यज्ञानविषयत्वस्य बहुशो दर्शनात् । स्वप्रकाशसिद्धस्यापि ब्रह्मणः ज्ञानान्तरविषयत्वे विरोधाभावात् । नहि वयं स्वयंप्रकाशेन स्वव्यवहारे प्रकाशान्तरसापेक्षत्वं ब्रूमः, किन्तु 5 संभावितप्रकाशान्तरविषयत्वे विरोधाभावमेव । किञ्च अवेद्यत्वे ब्रह्मणः शाब्दापरोक्षविषयताऽपि न स्यात् । नन्वपरोक्षवृत्तिविषयत्वं ब्रह्मणो न विरुद्धम्, चैतन्यविषयत्वस्यैवानङ्गीकारादिति चेन्न; अवेद्यत्वसाधकत्वे-नाभिमतया "अप्राप्य मनसा सह" इति श्रुत्या अन्तःकरणरूपमनोवृत्तेरपि निषिद्धतया वृत्तिविषयत्वस्यापि असंभवात् ॥ 10

किञ्च वृत्तिः किं ज्ञानमुत न । आद्ये वेद्यत्वमनिवार्यम् । द्वितीये वृत्ते-रहं जानामीत्यनुभवविषयतोक्तिविरोधः ॥

ननु वृत्तिशबलितचैतन्यमेव ज्ञानम्, अतो न विरोध इति चेन्न; ज्ञान-त्वस्य व्यासज्यवृत्तित्वविरोधात् केवलचैतन्ये ज्ञानत्वाभावप्रसङ्गात् ज्ञान-त्वस्य प्रत्येकपरिसमाप्यवृत्तित्वे वृत्तिविषयस्य ब्रह्मणो वेद्यत्वं दुर्वारम् । 15 ज्ञानादिपदानामक्षादि(पद)वन्नानार्थत्वप्रसङ्गश्च ॥

एतेन वृत्त्युपहितचैतन्यं ज्ञानमिति पक्षोऽपि निरस्तः; उपाधेरज्ञान-त्वेन जानामीत्यनुभवविषयतोक्तिविरोधादेव ॥

ननु विषयत्वेन भासमानायां वृत्तौ चैतन्याभेदाध्यासात् ज्ञानत्वप्रतीतिरु-पपद्यत एव । नचैवं वृत्तिचैतन्ययोरभेदप्रतीतौ चैतन्यस्यापि विषयत्वप्रसङ्ग 20 इति वाच्यम्; नहि विषयतया प्रतीयमानवृत्त्यभेदेन चैतन्येऽपि तद्विषय-त्वमिति चेन्न; तत्र किं ज्ञानत्वेन भासमानचैतन्याभेदाध्यासात् वृत्तौ ज्ञान-त्वप्रतीतिः स्वरूपेण भासमानचैतन्याभेदाध्यासाद्वा । नाद्यः; चैतन्यस्य ज्ञानत्वप्रतीतेरसिद्धेः, तस्य स्वरूपेण भासमानत्वाभ्युपगमात् । न द्वितीयः; गमनेऽपि जानामीति प्रतीतिप्रसङ्गात्, तत्रापि चैतन्याभेदाध्यासात् । किञ्च 25 "तमात्मानमेवावेत्, ब्रह्मवेद ब्रह्मैव भवति, ब्रह्मविदाप्नोति परम्" इत्यादिश्रुतीनां ब्रह्मणो वेद्यत्वाभावे कथं जीवनं स्यात् ॥

नन्वेवमवेद्यत्वाभावे "यत्तदद्रेश्यमग्राह्यं" "यस्यामतं तस्य मतं मतं यस्य न वेद सः" "अविज्ञातं विजानतां विज्ञातमविजानतां" "विज्ञातारमरे केन विजानीयात्" "येनेदं विजानाति तं केन विजानीयात्" "अगृह्यो न गृह्यते" इत्यादिश्रुतीनां का गतिरिति चेत् । वेद्यत्वश्रुत्य-
5 नुरोध एवेति ब्रूमः । नच वैपरीत्यं वक्तुं शक्यम् । वेद्यत्वश्रुतीनां वृत्तिपरत्वे लक्षणा स्यात् । तन्निषेधश्रुतीनां तु ज्ञानविशेषनिषेधपरत्वे संकोचमात्रम् , नतु लक्षणविशेषलक्षणायामपि, श्रुतार्थापरित्यागात् संकोच एव ज्यायान् अन्तरङ्गत्वलक्षणत्वात् । किञ्च 'भूयसां स्यात्सधर्मकत्व'मिति न्यायेन वेद्यत्वश्रुतीनां बहुत्वात् प्राबल्यमिति तदनुरोधेनैव तन्निषेधश्रुतीनामर्थो वर्णनीयः ॥

10 किञ्च यत्तदद्रेश्यमित्यत्रैव 'यद्भूतयोनिं परिपश्यन्ति धीराः' इति श्रूयते । तत्रैकस्यैव दृशिधातोरेकत्र ज्ञानपरत्वमितरत्र वृत्तिपरत्वमिति न वक्तुं शक्यम्, वैरूप्यप्रसङ्गात् ।

किञ्च धीरपदेन निषेधस्याधीरविषयत्वं गम्यते । धीरशब्दस्य धीमतामग्रेसरपरत्वात् । उणादौ दशपाद्यां 'सुसूधागृधिभ्यः क्रन्'[1] इति सूत्रेण क्रन्प्रत्ययः ।
15 तद्वृत्तौ च दधाति चित्तमिति धीर इति व्युत्पादितम् । किञ्च यस्यामतं तस्य मतमिति ब्रह्मणो मतत्वमेवोच्यते । अत्र परेषामेवं योजना—यस्य ब्रह्म अमतमिति मतं तस्य मतमेव मतम् तदेव समीचीनं मतं, यस्य ब्रह्म मतमिति मतं स ब्रह्म न वेदेति । अत्र सामीचीन्यपरमतपदाध्याहारदोषः । किञ्च यस्यामतं मतं यस्येत्यत्रामतमतपदयोः ब्रह्मपरत्वेन सन्दंशन्यायेन
20 तन्मध्यस्थमतपदस्यापि ब्रह्मपरत्वमेव युक्तम् । अपि च उत्तरवाक्ये ब्रह्मण्यधिकारिविशेषवेदनविषयत्वस्य निषेधात् पूर्वत्रापि अधिकारिविशेषनिर्देशात् तदधिकारिवेदनविषयत्वविधिरेव स्वरसतोऽवगम्यते ॥

ननु यस्यामतं मतं यस्येत्युभयत्रापि व्याघात इत्याशङ्क्य विवृणोति—अविज्ञातमिति । विशब्देन कार्त्स्न्यलक्षणसामीचीन्यरूपो विशेषो विवक्षितः ।
25 ब्रह्म सम्यग्जानामीति मन्यमानानां ब्रह्म अविज्ञातं याथार्थ्येन ज्ञातं न भवति

---

१ उणादि अध्याय १ पाद २ सूत्र. १७.

ब्रह्मासम्यक् जानामीति मन्यमानानां ब्रह्म सम्यक् ज्ञातं याथार्थ्येन ज्ञातमित्यर्थः । एवं यतो वाचो निवर्तन्ते अप्राप्य मनसा सह इति श्रुत्यनुसारात् परिच्छिन्नतया ज्ञानमेव निषिध्यते । प्रकरणबलात् 'सैषाऽऽनन्दस्य मीमांसा भवति' इत्युपक्रम्य शतगुणितोत्तरक्रमेणोत्कर्षमभिधाय "यतो वाचो निवर्तन्त" इत्यभिधानात् । 5

किञ्च पूर्वोत्तरवाक्ययोः ब्रह्मणो वेद्यत्वस्यैव बहुशः प्रतिपादनान्नात्र वेद्यत्वनिषेधसंभवः । तथाहि—"न तत्र चक्षुर्गच्छती"त्यादिना लौकिकप्रमाणागोचरत्वमुपपाद्य तथा सत्यप्रामाणिकत्वशङ्कायामुच्यते—"अन्यदेव तद्विदितादथो अविदितादधी"ति ॥

अस्यार्थः—विदितात् लौकिकप्रमाणगम्यात् तद्ब्रह्मान्यत् अलौकिक- 10 प्रमाणगम्यमिति । अनन्तरं च "यद्वाचानभ्युदित"मित्यादिभिः पञ्चभिर्मन्त्रैः तदेव ब्रह्म त्वं विद्धि इति वेद्यत्वं ब्रह्मणः पञ्चकृत्वोऽभ्यस्तम् । मनःप्राणचक्षुरादिप्रेरकत्वस्य ब्रह्मण्युपदिष्टतया तावन्मात्रेण कृत्स्नशः ब्रह्मणो ज्ञातत्वभ्रमनिराकरणाय ब्रह्मस्वरूपं त्वया मीमांसितव्यमिति गुरुणोक्ते मीमांसित्वा शिष्य आह मन्ये विदितम् इति । विदितत्वे हेतुमाह— 15 "नाहं मन्ये सुवेदेति नो न वेद" इति । अस्यार्थः—अहं सुवेदेति न मन्ये न वेदेति च नो मन्य इति । अनेन मम सुवेदत्वभ्रमः अवेद्यत्वभ्रमश्च नास्तीत्यर्थः । किं तर्हि सन्देह इत्यत्राह—"वेद च" इति । उपदिष्टाकारेण ब्रह्मावधारयामीत्यर्थः । यद्वा नो वेदेति वेद चेत्येकं वाक्यं, ततश्च न वेदेति नो वेदेत्यर्थः, एवं च मन्य इति नानुषङ्गः । यथोक्तज्ञान- 20 वानेव ब्रह्मविदित्याह—यो नस्तद्वेद तद्वेद नो न वेदेति वेद चेति । नः अस्माकं मध्ये यः तद् ब्रह्मणः सुष्ठु वेदनाशक्यत्वं वेद स एव तद्वेद ब्रह्मविदित्यर्थः । यश्च न वेदेति नो वेद च स एव च तद्वेदेत्यनुषङ्गः । यद्वा यश्च न वेदेति नेति वेद च स एव तद्ब्रह्म वेदेत्यर्थः । यद्यपि तद्वेदेत्यत्रैव सुष्ठुवेदनाशक्यत्ववेद्यत्वयोरन्तर्भावसंभवः, तथापि वेद्यत्वस्य प्राधान्येना- 25 भिधाय पृथक्कथनमिति मन्तव्यम् ।

एवं पूर्वत्र वेद्यत्वं बहुशोऽभ्यस्तम् । उत्तरत्रापि 'इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टि'रिति ब्रह्मवेदनात् परमपुरुषार्थतदवेदनान्महानर्थप्राप्तिं वदति । एवं ब्रह्मणो दुर्विज्ञानत्वादि तदुत्तरखण्डे "ब्रह्म ह देवेभ्यो विजिग्य" इति प्रतिपाद्य चतुर्थखण्डे ततो हैव विदाञ्चकार ब्रह्मेती-
5 न्द्रस्य ब्रह्मवेदनमुक्त्वा इन्द्र इवेतरयोः ब्रह्मवेदनमभिप्रेत्य इन्द्रवाय्वग्नीनामन्यदेवताभ्यः प्रथमं ब्रह्मज्ञानेनोत्कर्षमभिधाय तेषामपि मध्ये इन्द्रस्य प्रथमं ब्रह्मवेदनेनाग्निवायुभ्यामप्युत्कृष्टत्वमुक्तम् ॥

येनेदं सर्वमित्यादिश्रुतेरयमर्थः—

येन परमात्मना इदं परिदृश्यमानं सर्वं विजानाति "मत्तः स्मृतिर्ज्ञानम-
10 पोहनं" चेति वचनात्, तं परमात्मानं अस्मादृते केन कारणेन विजानीयादिति । अत्र हि कारणान्तरप्रतिक्षेपेण स्वाधीनज्ञानविषयत्वं हि प्रतिपाद्यते । तस्माद्वेद्यत्वस्य बहुश्रुतिप्रतिपन्नत्वादवेद्यत्वे श्रुतिर्न प्रमाणम् । वेद्यत्वश्रुतिबाधितत्वाच्चात्र नानुमानमपि प्रमाणम् ॥

अत्राह नवीनः—

15 अनभूतिरवेद्या अनुभूतित्वात् व्यतिरेकेण घटवत् इत्यनुमानम् मानं, अवेद्यत्वं च चैतन्याविषयत्वम्, अतो न वृत्तिविषयमादाय बाधप्रसङ्ग इति । अत्रोच्यते—देवदत्तचैतन्यस्य देवदत्तव्यवहारहेतुभूतयज्ञदत्तीयानुमितिरूपवृत्त्यवच्छिन्नचैतन्यविषयत्वात् एवं यज्ञदत्तस्यापि देवदत्तीयानुमितिरूपवृत्त्यवच्छिन्नचैतन्यविषयत्वाच्च बाधापत्तेः । देवदत्तयज्ञदत्तयो-
20 र्भेदेन विषयविषयिभावाविरोधात् भेदमात्रस्यैव तत्प्रयोजकत्वात् । एवं ब्रह्मणोऽपि वृत्तिप्रतिफलितचैतन्यविषयत्वात् बाधः । नच तत्र वृत्तिरेव व्यवहारहेतुः, तस्या व्यवहारहेतुत्वानभ्युपगमात् । वास्तवाभेदसत्त्वेन विषयविषयिभावानङ्गीकारे तत एवाज्ञत्वसर्वज्ञत्वसुखित्वदुःखित्वादिव्यवस्थाभङ्गप्रसङ्गात् स्ववचनविरोधाच्च ।

25 सर्वं जानीयामिति जिज्ञासाया विषयत्वविषयित्वप्रयोजकधर्मभेदेन कल्पितभेदसत्त्वात् स्वविषयत्वमिति हि स्वेनैवोक्तम् ।

ननु समानसत्ताकचिद्विषयत्वाभावः साध्यः इति चेन्न; तथा सति

वृत्तिविषयत्वेन बाधवारणाय चिद्घटितसाध्यकरणायोगात्, वृत्तेर्भिन्नसत्ताकत्वेऽपि तदवच्छिन्नचैतन्यस्य समानसत्ताकत्वेन तद्विषयतया बाधस्य दुष्परिहरत्वाच्च, भिन्नसत्ताकत्वाविशेषेऽपि कारणत्वसत्यत्वानन्दत्वादिधर्माणां ब्रह्मणि सद्भावमङ्गीकृत्य वेद्यत्वनिषेधे कारणाभावाच्च ॥

नच स्वप्रकाशत्वसिद्ध्यर्थं वेद्यत्वनिषेध इति वाच्यम्; वेद्यत्वेऽपि स्व- 5 व्यवहारहेतुप्रकाशत्वरूपस्वप्रकाशत्वस्याविरोधात् । नच वेद्यत्वं स्वव्यवहारहेतुप्रकाशत्वाभावप्रयोजकतया घटादौ दृष्टमिति वाच्यम्; तत्र तदभावस्याचित्त्वप्रयुक्ततया वेद्यत्वप्रयुक्तत्वाभावात् । अतो न वेद्यत्वनिषेधस्य स्वप्रकाशत्वे कथञ्चिदप्युपयोगः ॥

किञ्च किमिदमवेद्यत्वं शुद्धचैतन्याविषयत्वं वा वृत्त्यवच्छिन्नचैतन्या- 10 विषयत्वं वा वृत्त्यविषयत्वं वा व्यवहारायोग्यत्वं वा स्वप्रकाशत्वाभावो वा अन्यद्वा; नाद्यः; घटादेरप्यवेद्यत्वप्रसङ्गात् स्वप्रकाशतया ब्रह्मण्यसंभवाच्च । न द्वितीयः; अपरोक्षवृत्त्यवच्छिन्नचैतन्यविषयतया ब्रह्मण्यसंभवात् । अन्यथा ब्रह्मप्रकाशाभावेनानिर्मोक्षप्रसङ्गात् । जडरूपवृत्तेस्तदप्रकाशत्वात् । प्रकाशकत्वे च घटादेरपि तयैव प्रकाशसंभवे तदवच्छिन्नचैतन्यविषयत्वे 15 मानाभावेनावेद्यत्वप्रसङ्गात् ॥ नापि तृतीयः; ब्रह्मण्यसंभवादेव । नापि चतुर्थः; ब्रह्मणः अवेद्यत्वनिर्विशेषत्वादिना व्यवहाराभावप्रसङ्गात् । नापि पञ्चमः; अपसिद्धान्तात् ब्रह्मणः स्वप्रकाशत्वस्य भवदभिमतत्वात् अप्रामाणिकत्वप्रसङ्गात् घटादेरप्यवेद्यत्वप्रसङ्गाच्च । नान्त्यः; तदनिर्वचनात् । नचस्वभिन्नज्ञानाविषयत्वं तदिति वाच्यम्; स्वभिन्नज्ञानाप्रसिद्ध्या तदवि- 20 षयत्वस्य दुर्ग्रहत्वात् । ज्ञानपदस्य वृत्तिपरत्वे च बाधात् ॥

नच स्वविषयकज्ञाने स्वभिन्नत्वाभाव एव स्वभिन्नज्ञानाविषयत्वमिति वाच्यम्; स्वविषयकज्ञानस्यापि त्वन्मते अप्रसिद्धेः, स्वस्य स्वविषयत्वानभ्युपगमात्, अभ्युपगमे च वेद्यत्वप्रसङ्गात् । तस्मादवेद्यत्वस्य निर्वक्तुमशक्यत्वात् उक्तानुमाने साध्यबाधः । प्रत्यनुमानं च—अनुभूतिरवेद्या न 25 भवति अनुभूतिर्वेद्येति वा साध्यं, वस्तुत्वात् व्यवहारविषयत्वात् घटादिवत् । नचाप्रयोजकत्वम्; स्वविषयप्रकाशाभावे स्वव्यवहाराभावप्रसङ्गात् मो-

क्षदशायामानन्दप्रकाशाभावेनापुरुषार्थत्वप्रसङ्गाच्च; प्रत्युत त्वदुक्तानुमानस्यै-वाप्रयोजकत्वम्, विपक्षे बाधकाभावात् ॥

नच स्वस्य स्वविषयत्वासंभव एव विपक्षे बाधक इति वाच्यम्; स्वस्य स्वविषयत्वे विरोधाभावात् स्वरूपसंबन्धस्याभेदेऽप्यविरोधात् । शब्दशब्दस्य
5 स्ववाचकत्वस्य सर्वैरभ्युपेतत्वात् सर्वपदादिवृत्तेः स्वविषयत्वाच्च । यत्तु वेद्यत्वे जडत्वप्रसङ्ग इति; तन्न, अप्रयोजकत्वात् । विषयविषयिभावस्य भेदाधीनत्वनिर्बन्धोऽपि निर्निबन्धनः । एतत्कालवर्तिशब्दज्ञानवान् त्व-मिति शाब्दज्ञानस्य स्वविषयकत्वात्, तत्काले शाब्दज्ञानान्तराभावात्, वृत्तिरनित्या जडेत्यादिवृत्तेः स्वविषयत्वाच्च । स्वविषयत्वाभावे ज्ञानव्यवहारो
10 न स्यात्, तस्य व्यवहर्तव्यप्रकाशसाध्यत्वात् ॥

ननु व्यवहारमात्रे प्रकाशो हेतुः नतु व्यवहर्तव्यप्रकाशः; गौरवात्, अनात्मव्यवहारे व्यवहर्तव्यप्रकाशो विशेषहेतुः, आत्मव्यवहारे आत्माभि-न्नप्रकाशो विशेषहेतुः, यत्सामान्ये यत्सामान्यस्य हेतुत्वं तद्विशेषे तद्विशेषस्य हेतुत्वादिति चेन्न; किमनात्मगोचरप्रकाशत्वेनानात्मगोचरव्यवहारहेतुत्वेन
15 हेतुहेतुमद्भावोऽविवक्षितः, अनात्मगोचरतद्विषयकप्रकाशत्वेन, अनात्मगोच-रतद्विषयकव्यवहारत्वेन वा । नाद्यः; तथा कल्पनस्याप्रामाणिकत्वात् । तथा सति अघटप्रकाशत्वादिना विकल्पनाप्रसङ्गात् । न द्वितीयः; अनात्मगोचरप-दवैयर्थ्यात् गौरवाच्च । अस्तु वा उभयविधकार्यकारणभावः, तथापि तद्वि-षयव्यवहारे तद्विषयकप्रकाशहेतुत्वं को वारयेत् ॥

20 वस्तुतस्तु यत्सामान्य इति न्यायः व्यक्तावेव प्रवर्तते, न त्वनन्ततद्ध-र्मावच्छिन्ने, यथा विशेषणज्ञानस्य विशिष्टज्ञानकारणत्वे तद्विशेषणज्ञानस्य तद्विशिष्टज्ञानहेतुता, यथा वा विषयेन्द्रियसन्निकर्षस्य प्रत्यक्षहेतुत्वे तद्विष-येन्द्रियसन्निकर्षस्य तत्प्रत्यक्षहेतुता, एवं प्रकृतेऽपि व्यवहारमात्रे प्रकाशस्य हेतुत्वे तद्विषयव्यवहारे तद्विषयप्रकाशस्य हेतुता सिध्यति न त्ववान्तर-
25 कार्यकारणभावः । किञ्च सामान्यकारणतायामेव समानविषयकत्वविशेष-णादतिप्रसङ्गपरिहारे आत्मानात्मव्यवहारयोः तदभिन्नप्रकाशत्वतद्विषयप्रका-

शत्वाभ्यां विशेषकारणत्वकल्पनं गौरवपराहतम् । तथाचात्मव्यवहारेऽपि आत्मप्रकाश एव हेतुरस्तु ॥

यदुक्तं संविदन्तराभावाद्ब्रह्मणो न वेद्यत्वमिति, तदप्यनुपपन्नम्; कथं? संविदन्तराभावः संविदभावेऽपि सर्वव्यवहारोपपत्तेर्वा, संविदन्तरे प्रमाणाभावाद्वा, ब्रह्मरूपसंविदैव सर्वव्यवहारोपपत्तेर्वा । नाद्यः; सर्वेषां सर्वदा सर्वव्यवहारप्रसङ्गात् अव्यवहारप्रसङ्गाद्वा । न द्वितीयः; अहं जानामि मम ज्ञानमुत्पन्नं ब्रह्म जानामि इत्याद्यनुभवस्यैव मानत्वात् । न तृतीयः; ब्रह्मणो घटादिविषयत्वासिद्धेः सर्वेषां सर्वदा सर्वव्यवहारप्रसङ्गाच्च । तस्मात् प्रतिप्रमातृप्रमाणं संविद्भेदोऽङ्गीकरणीयः । उत्पत्तिविनाशप्रतीत्या च संविद्भेदसिद्धिः । न चोत्पत्तिविनाशप्रतीतेरुपाधिनिष्ठोत्पत्तिविनाशविषयत्वम्; विद्यमानायां संविदि तादृशोपाध्युत्पत्तिविनाशयोरदर्शनात् ॥

ननु प्रकाशस्य व्यवहारकारणत्वात् ब्रह्मरूपप्रकाशेनैव व्यवहारोपपत्तावतिरिक्तप्रकाशकल्पने गौरवमिति चेन्न; सर्वदा सर्वेषां सर्वव्यवहारापत्त्या दत्तोत्तरत्वात् । नच तत्परिहारायानेकवृत्तिकल्पनमिति वाच्यम्; तथा सति अत्यन्तगौरवात् । अन्तःकरणस्यानेकवृत्तिकल्पनं वृत्तीनां च सविषयकत्वकल्पनं तदवच्छिन्नचैतन्यस्य प्रकाशकत्वकल्पनम्, एतदपेक्षया सविषयकत्वेन प्रतिपन्नेषु ज्ञानत्वकल्पने चातिलाघवम् । नच संविदन्तराङ्गीकारे अद्वैतक्षतिः; घटादिवन्मिथ्यात्वाङ्गीकारे तदभावात् ॥

ननु वृत्तिरूपसंविदङ्गीकारेऽपि तदवच्छिन्ना नित्या संविदवश्याभ्युपेया । तथाहि—अस्ति तावद्घटादिज्ञानधारानुसन्धानम्, एतावन्तं कालं घटमहमद्राक्षं एतावन्तं कालमिन्दिरारमणमध्यासिषमिति, तच्चानुसन्धानं तत्तज्ज्ञानानां तत्तत्कालीनात्मनश्च पूर्वानुभवाभावे न संभवति, पूर्वानुभवश्च नित्यसंविदेव, तथाच तयैव घटादिसर्वप्रकाशोपपत्तौ घटादिवृत्तीनां तदवच्छेदकत्वमात्रमेव कल्पयितुं युक्तम्, न ज्ञानत्वमपि, गौरवात् ।

नच घटादिज्ञानधारास्थले इन्दिरारमणध्यानस्थले च मध्ये मध्ये तत्तज्ज्ञानानुव्यवसायेन धारानुसन्धानसंभवे किं नित्यसंविदेति वाच्यम्;

तथासति मध्ये मध्ये विच्छेदेन धाराध्यानत्वानुपपत्तिप्रसङ्गात्, बहुकालं जिज्ञासितश्रीवेङ्कटेशलीलाकमनीयविग्रहदर्शनधारानुसन्धानस्य तथाप्यनुपपत्तेश्च। श्रीवेङ्कटेशदर्शनकाले बुभुत्साघटितसामग्रीप्राबल्येन तत्र तत्तज्ज्ञानानुव्यवसायासंभवात्॥

5 किञ्च नैरन्तर्येण द्वादशनामादि शृण्वतः द्वादशनामान्यश्रौषमित्यनुसन्धानानुपपत्तिः मध्ये अनुव्यवसायकल्पने अनुव्यवसायकालोत्पन्ननाम्नः अनुभवाभावेन द्वादशत्वप्रतिसन्धानानुपपत्तिः॥

किञ्च सुखजनकेष्टज्ञानस्यानुसन्धानानुपपत्तिः। इष्टज्ञानस्य चरमकारणत्वेनाव्यवहितकाले सुखस्यैवोत्पत्तेः सुखोत्पत्तेः प्रागनुव्यवसायकल्पने 10 तेनैवेष्टज्ञानविनाशेन सुखस्यानुत्पत्तिप्रसङ्गः। सुखोत्पत्त्यनन्तरमनुव्यवसायश्च न संभवति। स हि सुखस्थितिकाले अनन्तरकाले वा। नाद्यः; सुखस्य ज्ञानव्याप्तत्वेन सुखानुभवस्यावश्यकतया तदनुभवकाले तज्जनकज्ञानानुभवासंभवात्॥

यद्यपि सुखतज्जनकज्ञानयोः समूहालम्बनं संभवति तथापि सुखोत्पत्ति- 15 तृतीयक्षण एव सुखानुभवस्य वाच्यतया तदा तज्जनकज्ञानस्य विनाशेन तदनुभवासंभवेन समूहालम्बनासिद्धेः। सिद्धौ वा सुखतज्जनकज्ञानयोः पौर्वापर्याग्रहेण कार्यकारणभावग्रहानुपपत्तिः॥

नन्वनुव्यवसायाभावेऽपि ज्ञानानां स्वप्रकाशतया उक्तस्थले सर्वत्रानुसन्धानं संभवतीति चेन्न; जानामीति प्रतीयमानस्य घटादिवद्विषयत्वावश्यं- 20 भावेन स्वप्रकाशत्वानुपपत्तिः, चिदविषयत्वस्यैव स्वप्रकाशत्वरूपत्वात्॥

किञ्च एकविषयज्ञानधारानन्तरं एतावन्तं कालं नेतः परमद्राक्षमिति इतरज्ञानाभावानुसन्धानं नित्यज्ञानं विना सर्वथा अनुपपन्नमेव। नचेदमनुसन्धानमनुमितिरूपमेव न स्मृतिरूपम्, येनानुभवापेक्षा स्यादिति वाच्यम्; इतरज्ञानाभावव्याप्यलिङ्गाभावात् इतरज्ञानाभावव्याप्यलिङ्गाप्रतिसन्धानेऽपि 25 इतरज्ञानाभावानुसन्धानदर्शनाच्च॥

एवं स्वप्नसाक्षितयाऽपि नित्यसंवित्सिद्धिः। नच स्वप्नज्ञानं स्मृतिः; प्रत्यक्षत्वेनानुभवात्। नापि चक्षुरादिजन्यं; चक्षुरादिव्यापारस्य तदानीमुपरमात्।

नापि मानसम्; मनसो बहिरस्वातन्त्र्यात् । तस्मान्नित्यसंविदनङ्गीकारे अनुसन्धानानुपपत्तिः, तदङ्गीकारे तु सर्वमुपपन्नम् ॥

एवमस्वाप्समिति सुप्तोत्थितस्यात्मपरामर्शादपि नित्यानुभवसिद्धिः । सुषुप्तिकाले आत्मानुभवाभावे तत्परामर्शासंभवात् । आत्मानुभवश्च साक्षिरूपा संविदेव । एवं सुप्तोत्थितस्यैतावन्तं कालं न किञ्चिदवेदिषमिति 5 परामर्शोऽपि तत्र प्रमाणम् । सुषुप्तिकाले अज्ञानानुभवाभावे तत्परामर्शासंभवात् । यत्तु अयं नाज्ञानपरामर्शः किन्त्वनुमानमेवेति, तन्न; अनुमानासंभवात् । न तावदहं ज्ञानाभाववान् अवस्थाविशेषवत्त्वात् मूर्च्छादिकालीनाहमर्थवदित्यनुमानं संभवति, अहमर्थमात्रपक्षत्वे जाग्रत्कालीनाहमर्थे अंशतो बाधापत्तेः, सुषुप्तिकालीनाहमर्थपक्षत्वे आश्रयासिद्धिः, निखिल- 10 ज्ञानाभावरूपायाः सुषुप्तेरनुमानात् प्रागसिद्धत्वेन विशेषणासिद्धेः । साध्ये च यत्किञ्चिज्ज्ञानाभावविवक्षायां न किञ्चिदहमवेदिषमित्यनुभवासंभवः, सकलज्ञानाभावविवक्षायां व्याप्तिग्रहस्थानासंभवः, मूर्च्छामरणकाले स्वस्य ज्ञानाभावेन व्याप्तिग्रहासंभवात् । हेतौ चावस्थाविशेषपदेन सुषुप्तिविवक्षायां साध्याविशेषः; निखिलज्ञानाभावरूपत्वात् सुषुप्तेः, जाग्रत्स्वप्नातिरिक्तकालवि- 15 वक्षायां निखिलज्ञानाभावसिद्धेः प्राक् तदतिरिक्तत्वस्य दुर्ज्ञानत्वात् । एतेन सामग्र्यभावेन ज्ञानाभावोऽनुमीयत इति प्रत्युक्तम्; तत्रापि पक्षसाध्ययोरुक्तविकल्पे उक्तदूषणग्रासात् । सामग्र्यभावोऽपि न हेतुः; तस्य कार्याभावोन्नेयतया कार्याभावस्य तदुन्नेयतया चान्योन्याश्रयात् ॥

नचेन्द्रियप्रसादेन तदुपरमानुमानात् सामग्र्यभावसिद्धिरिति नान्यो- 20 न्याश्रय इति वाच्यम्; स्वप्ने बाह्येन्द्रियोपरमेऽपि सामग्रीसत्त्वेन ज्ञानदर्शनात् । नच बाह्याभ्यन्तरेन्द्रियव्यापारोपरमस्य ज्ञानाभावानुमापकत्वमिति वाच्यम्; बाह्येन्द्रियप्रसादस्य तदुपरमानुमापकत्वेऽपि मनःप्रसादस्य तदुपरमानुमापकत्वासंभवात् शोभनस्वप्नप्रदर्शनादपि मनःप्रसाददर्शनेनान्यथासिद्धेः । नच स्मर्तुं योग्यस्य स्मरणाभावेन ज्ञानाभावानुमानं; निरन्तरानुभूते 25 उदासीनतृणादौ ज्ञानाभावाभावेन व्यभिचारादिति ॥

अत्रोच्यते—न तावत् धारानुसन्धानानुपपत्तिः; धाराज्ञानानां स्वप्र-

काशत्वेनानुपपत्त्यभावात् । यदुक्तं जानामीति प्रतीयमानस्य ज्ञानस्य घटादिवद्विषयत्वावश्यम्भावात् स्वप्रकाशत्वानुपपत्तिरिति तन्न; तत्र प्रतीयमानत्वं किं विषयतया प्रयोजकं, जानामीति प्रतीयमानत्वं वा । नाद्यः; ब्रह्मणोऽपि प्रतीयमानतया विषयत्वप्रसङ्गात् स्वप्रकाशत्वाभावप्रसङ्गाच्च । 5 न द्वितीयः; प्रयोजनाभावेन व्यर्थविशेषणत्वात् ॥

नन्वस्तु तर्हि प्रतीयमानत्वमेव विषयतया प्रयोजकम् । नच ब्रह्मणोऽपि विषयत्वप्रसङ्गः तस्यापि प्रतीयमानत्वादिति चेन्न; किं तत्प्रतीयमानत्वं प्रतीतिजन्यव्यवहारभाक्त्वं वा प्रतीतिविषयत्वमेव वा । नाद्यः; ब्रह्मणोऽप्रतीयमानतया प्रतीयमानत्वासिद्धेः । न द्वितीयः; साध्याविशे- 10 षात् । एवं द्वादशनामान्यश्रौषमिति निर्व्यूढम् । तत्तन्नामग्रहणानां स्वप्रकाशतया द्वादशनामग्रहणानुसन्धानाविरोधात् । एवमिष्टज्ञानसुखयोरपि कार्यकारणभावग्रहणं सुलभम् । उभयोरपि स्वप्रकाशत्वेन स्मृतयोस्तयोः कार्यकारणभावग्रहणाविरोधात् ॥

वस्तुतस्तु इष्टज्ञानस्यैव सुखरूपत्वेन न कार्यकारणभावः । ज्ञानानामस्व- 15 प्रकाशतया अनुव्यवसायगम्यत्वपक्षेऽपि न दोषः । धाराध्यानमध्ये अनुव्यवसायसंभवेन तदनुसन्धानाविरोधात् ॥

नच धाराध्यानयोः विजातीयज्ञानव्यवधानेन विच्छेद इति वाच्यम्; सजातीयानधिकरणकालाव्यवधानस्यैव अविच्छेदशब्दार्थत्वात् तस्य च अत्रापि सत्त्वात् । तथाहि—आद्यज्ञानानन्तरं ज्ञाननिर्विकल्पकं, ततः 20 आद्यज्ञानानुव्यवसायः, ततो द्वितीयज्ञानं, ततः प्रथमज्ञानानुव्यवसायात्मकज्ञानत्वरूपविशेषणज्ञानात् द्वितीयज्ञानानुव्यवसायः, ततस्तृतीयज्ञानं, ततो द्वितीयज्ञानानुव्यवसायात्मकविशेषणज्ञानात् तृतीयज्ञानानुव्यवसायः, ततश्चतुर्थज्ञानम्—इत्येवं द्वितीयज्ञानप्रभृति सजातीयज्ञानानधिकरणकालाव्यवधानेन ज्ञानधारोपपद्यते ॥

25 यद्वा पटादिविजातीयज्ञानानुव्यवसायानन्तरं यत्र घटादिज्ञानं, तत्राद्यज्ञानप्रभृत्येव ज्ञानधारा संभवति । एतादृशानुव्यवसायव्यवहितज्ञानधारायां धारानन्तरभावितदनुसन्धानमेव कल्पकमिति न कल्पकानवकाशः ॥

नन्वेवमपि श्रीवेङ्कटेशविग्रहानुभवसामग्रीप्राबल्यात् तदनुव्यवसायासं-
भवात् कथं विग्रहानुभवानुसन्धानम् । अनुव्यवसायसामग्रीप्राबल्येना-
नुव्यवसायसंभवे अनुव्यवसायधाराप्रसङ्गेन विग्रहानुभवधारानुपपत्तिरिति
चेदुच्यते—जिज्ञासिताभीष्टानुभवसामग्री तद्भिन्नबाह्यविषयानुभवसामग्रीतो
बलवतीति तदपेक्षया तदनुव्यवसायसामग्री बलवती ॥ 5

नचात्र कल्पकाभावः; श्रीवेङ्कटेशविग्रहानुभवकाले विषयान्तरानुभ-
वाभावेन जिज्ञासाघटितबाह्यानुभवसामग्र्याः तदघटितबाह्यानुभवसामग्रीतो
बलवत्त्वकल्पनात् निरन्तरश्रीवेङ्कटेशविग्रहानुभवानन्तरमेतावन्तं कालं स-
म्यक् तादृशविग्रहमद्राक्षमिति निरन्तरश्रीवेङ्कटेशविग्रहानुभवानुसन्धानद-
र्शनेन जिज्ञासाघटितश्रीवेङ्कटेशविग्रहानुभवसामग्रीतोऽपि तदनुव्यवसाय- 10
सामग्र्याः प्राबल्यकल्पनाच्च ॥

नचैवमनुव्यवसायधाराप्रसङ्गेन निरन्तरश्रीवेङ्कटेशविग्रहानुभवोपरमप्रसङ्ग
इति वाच्यम्; एतद्बलादेवाननुव्यवसितज्ञानानुव्यवसायसामग्र्या एव प्रा-
बल्यकल्पनात् । तथाचैकैकानुभवानन्तरं एकैकानुव्यवसाय एवेति न निर-
न्तरानुभवविरोधः ॥ 15

एवं द्वादशनामान्यश्रौषमित्यत्रापि नानुव्यवसायानुपपत्तिः । मध्येमध्ये
तत्संभवात् । नच नैरन्तर्यानुपपत्तिः, अनुव्यवसायेन व्यवधानादिति वा-
च्यम्; प्रथमवर्णोच्चारणानन्तरं द्वितीयवर्णज्ञानतदुच्चारणानुकूलकृतिव्यापारै-
र्व्यवधानस्यावर्जनीयत्वात् । एवमुत्तरोत्तरोच्चारणेऽपीति तादृशव्यवधानसहि-
ष्णोर्द्वादशनामश्रवणस्य एकैकानुव्यवसायव्यवधानं न नैरन्तर्यविघातकम् ॥ 20

एवमिष्टज्ञानसुखयोरपि न कार्यकारणाभावग्रहानुपपत्तिः; उभयोः
समूहालम्बनसंभवात् । नच पौर्वापर्याग्रहात् तदनुपपत्तिः; अनुभूयमानेष्ट
ज्ञानस्यैव कारणान्तरानुपपत्त्या सुखकारणत्वकल्पनात् ॥

किं च संविद्धारानुसन्धानार्थं नित्यसंवित्तिसिद्धावपि सा यथा धारां नो-
त्सादयति तथा संवित्त्वमपि नोत्सादयेत् प्रत्युत धारामिव संवित्त्वमपि 25
साधयत्येव ॥

ननु आवश्यकसंविदैव सर्वव्यवहारोपपत्तौ बहूनां संवित्त्वकल्पने गौरवम् । नच, संवित्त्वानुसन्धानविरोधः; संविदभेदाध्यासेन तदुपपत्तेरिति चेन्न; कादाचित्कप्रकाशार्थं अनन्तानामावरणानां तद्धेत्वज्ञानादीनां च कल्पनापेक्षया विषयसंबन्धितया क्लृप्तेष्वेकज्ञानत्वकल्पने लाघवात्, ज्ञान-
5 त्वानुभवानामनन्तानामप्रमाण्यप्रसङ्गाच्च ॥

किञ्च क्लृप्तसंविदां कल्प्यसंविदमनपेक्ष्य स्वविषयव्यवहारहेतुत्वं संभवति । संविदस्तु क्लृप्तज्ञानमनपेक्ष्य व्यवहारहेतुत्वासंभवात् क्लृप्तानामेव व्यवहारहेतुत्वकल्पनात् ज्ञानत्वमप्यनिवार्यम् ॥

किञ्च ज्ञानधारानुसन्धानेन धारासिद्धिवत् ज्ञानत्वसिद्धावपि न विरोधः ।
10 यदि च ज्ञानाभेदाध्यासेन तदनुभवस्यान्यथासिद्धौ न ज्ञानत्वसिद्धिरिति मन्यसे, तदा अनुवृत्तधारारूपसंविदभेदाध्यासेनैव धारानुभवस्यान्यथासिद्धौ ज्ञानसन्तानमात्रोच्छेदप्रसङ्गः । यच्चोक्तं एकस्मिन् विषये निरन्तरानुभवे बहुकालसंभूते 'एतावन्तं कालं एतद्विषयमद्राक्षं इतोऽन्यत् किमपि नाद्राक्षम्' इतीतरज्ञानाभावपरामर्शानुपपत्तिरिति, तन्न; चत्वरे प्रातर्गजाभाव-
15 ज्ञानवदुपपत्तेः । गजाभावज्ञानं न स्मृतिरूपं; पूर्वमननुभवात्, किन्त्वनुमितिरूपमेव । तथा प्रकृतेऽपि इतरज्ञानाभावज्ञानमनुमितिरूपमेव ॥

किञ्चायमितरज्ञानाभावपरामर्शो धाराकाले घटव्यतिरिक्तज्ञानाभावं साधयन् ज्ञानाभावस्यापि घटभिन्नतया तज्ज्ञानाभावमपि साधयेदविशेषात्; नतु तदा ज्ञानान्तराभावज्ञानं साधयेत् व्याघातात् । तस्मादनुमानजन्यो
20 वा अनुपलब्धिजन्यो वा ज्ञानाभावपरामर्श इत्यकामेनापि स्वीकरणीयम् ॥

एवं स्वप्नज्ञानानुरोधेनापि न नित्यसंवित्सिद्धिः । तत्र स्मर्यमाणाधिकरणे स्मर्यमाणपदार्थानां मनसाऽऽरोपसंभवात् । नच मनसो बहिरस्वातन्त्र्यम्; कविकाव्यादिषु मूलभूतज्ञानस्य मानसत्वेन सर्वैरभ्युपगन्तव्यत्वात् ॥

नचैवं स्वाप्नज्ञानस्य चाक्षुषत्वानुभवविरोधः; साक्षिरूपज्ञानेऽपि तु-
25 ल्यत्वात् मानसज्ञाने वैशद्यविशेषेण चाक्षुषत्वारोपसंभवाच्च । वस्तुतस्तु "सन्ध्ये सृष्टिराह हि" इत्यधिकरणे "अथ रथान् रथयोगान् पथः सृजते स

हि कर्ते"त्यादिश्रुत्या स्वप्नसृष्टदेहगतेन्द्रियेण स्वप्नसृष्टपदार्थदर्शनसंभवान्न विरोधः इति । सुप्तोत्थितपरामर्शस्तु भावरूपाज्ञानभङ्गे समर्थयिष्यते ॥

ननु घटः स्फुरति घटं जानामीत्याश्रयभेदेन सकर्मकतया अकर्मकतया उपलम्भात् ज्ञानातिरिक्तस्फुरणात्मकसंवित्तिसिद्धिरिति चेत्, न; देवदत्तो मोदकमिच्छति देवदत्ताय रोचते मोदक इत्यत्रापि इच्छारुच्योर्भेदप्रसङ्गात् । 5
कथं तर्ह्युभयत्रापि तत्प्रयोग इति चेत्, उच्यते—मोदकस्य रसगन्धमार्दवादिभिर्देवदत्ताभिलाषहेतुत्वेन कर्तृत्वोपचारात् मोदको रोचत इति प्रयोगः ॥ एवं घटस्य स्फीतालोकमध्यवर्तितया प्राधान्येन देवदत्तप्रकाशहेतुतया कर्तृत्वोपचारेण घटः स्फुरतीति प्रयोगः । एवं च यानि संविद्भेदसाधकान्यनुमानानि तानि सर्वाण्यपि बाधितानि । ज्ञानपदव्युत्पत्तिविषयाणां 10
ज्ञानानामभेदसाधने बाधात्, ज्ञानपदव्युत्पत्त्यविषयसंविदन्तराभेदसाधने चाश्रयासिद्धेः । अपिच ज्ञानातिरिक्तवृत्तौ प्रमाणाभावान्नवृत्तिविषयत्वम् । तथाहि ॥ केचिदाहुः—ब्रह्मचैतन्यस्य जगदुपादानत्वेन सर्वतादात्म्यात्तत्सर्वमवभासयति । जीवचैतन्यं तु सर्वगतत्वेऽपि अनुपादानत्वेनासङ्गित्वादन्यासंसृष्टमप्यन्तःकरणपरिणामरूपवृत्तेरिन्द्रियद्वारा निर्गमने सति झटित्येव विषयं 15
गत्वा तदाकारेण व्याप्तौ चैतन्यस्य विषयसंबन्धे सति विषयं प्रकाशयतीति चैतन्यविषयोपरागार्थावृत्तिरिति—तदयुक्तम्; असङ्गित्वस्यानिर्वचनात् । किमिदमसङ्गित्वं न तावदनधिष्ठानत्वं, तथा सति वृत्त्याप्यधिष्ठानत्वसंपादनायोगेन वृत्तिवैयर्थ्यात् । नापि संबन्धमात्राभावः; स्वाभिन्नबिम्बद्वारकसंबन्धसत्त्वेन तदयोगात् । नापि संयोगाभावः; चैतन्यस्य सर्वगतत्वेन 20
संयोगाभावे मानाभावात् ।

ननु "असङ्गो ह्ययं पुरुष" इति श्रुतिरेवासङ्गित्वे मानमिति चेन्न; तस्याः हेयसंबन्धस्य कर्माधीनतया स्वाभाविकहेयसंबन्धाभावपरत्वात्, अन्यथा अविशेषेणान्तःकरणेनापि संबन्धाभावप्रसङ्गात् । किञ्च असङ्गित्वं चैतन्यस्य स्वाभाविकं न वा । आद्ये असङ्गित्वस्वभावस्य चैतन्यस्य वृत्त्यापि तत्साधनमशक्यमेव । द्वितीये सर्वव्यापकस्य चैतन्यस्य संयोगाभावो दुर्वचः । 25

तस्मात् वृत्त्यधीनो विषयोपरागो न चैतन्यस्य । अत्रानेकधा विषयोपरागमाहुः ॥

केचित्तु—विषयविषयिभाव एव चितो विषयोपराग इत्याहुः । अन्ये तु विषयसन्निहितजीवचैतन्यतादात्म्यापन्नाया वृत्तेर्विषयसंयोगे सति तद्द्वारा 5 चैतन्यस्यापि परम्परासंबन्ध एव विषयोपराग इत्याहुः ॥ अपरे तु— अपरोक्षार्थसंबन्धिन एव सुखादेरापरोक्ष्यदर्शनात् अपरोक्षार्थविषये साक्षात्संबन्धो वाच्यः, तथा च वृत्तेर्विषयस्य च संयोगे सति जीवचैतन्यस्यापि साक्षाद्विषयसंयोगः सिध्यति । यथा कारणाकारणसंयोगात् कार्याकार्यसंयोगः तथा कार्याकार्यसंयोगादपि कारणाकारणसंयोगोऽपि न विरुद्धः । 10 एवं च स्वकार्यवृत्तेरकार्यघटसंयोगेन स्वकारणान्तःकरणस्य स्वाकारणघटस्य च संयोगः सिध्यतीति अयमेव चिद्विषयोपराग इत्याहुः ॥

परे तु—विषयावभासकान्तःकरणोपहितचैतन्यस्य विषयतादात्म्यसम्पादनमेव विषयोपरागः; विषयतादात्म्यसम्पादनं च विषयतादात्म्यापन्नब्रह्मचैतन्याभेदाभिव्यक्तिद्वारेणेत्याहुः ॥

15 तत्र प्रथमपक्षस्तावदनुपपन्नः—विषयविषयिभावस्य वृत्त्यधीनत्वेन वृत्तेरिन्द्रियद्वारा विषयपर्यन्तं बहिर्निर्गमनाभ्युपगमवैयर्थ्यात्, अनिर्गताया एव वृत्तेस्तत्प्रयोजकत्वसंभवात् । नहि वृत्तेर्बहिर्निर्गताया एव घटादिविषयकत्वनियमः; मतान्तरे बहिरनिर्गतानामपि ज्ञानादीनां घटादिविषयकत्वाभ्युपगमात् ॥

20 ननु सत्यमेव विषयविषयिभावे न वृत्तेर्निर्गमनापेक्षा, तदभावेऽपि परोक्षज्ञानवत् विषयविषयिभावोपपत्तेः; किन्तु साक्षात्त्वार्थं, निर्गता वृत्तिर्हि साक्षात्त्वमापादयतीति चेन्न, तथासति रूपादेर्वृत्तिसंयोगाभावेन तत्र वृत्ते रूपादेश्चापरोक्षत्वाभावप्रसङ्गात् । नच वृत्तिसंयुक्तविषयनिष्ठतया रूपादेरापरोक्ष्यं तदाश्रयसंयुक्ततया वृत्तेरप्यापरोक्ष्यमिति वाच्यम्; तथा सति 25 शब्दादिना धर्मादिज्ञाने धर्मादेरापरोक्ष्यप्रसङ्गात् ॥

किञ्च किञ्चिज्ज्ञ इत्यत्र यः संबन्धः ज्ञानार्थयोः प्रतीयते, स एव सर्वः सर्वज्ञ इत्यत्रापि वाच्यः; अन्यथा वैरूप्यप्रसङ्गात् । किञ्चिज्ज्ञ इत्यत्र

यादृशसंबन्धो विषयताप्रयोजकः स सर्वज्ञ इत्यत्रास्तीति ब्रह्मणः सर्वज्ञत्वाभावप्रसङ्गात् ब्रह्मवत् जीवचैतन्यस्यापि सर्वव्यापकतया सर्वसंबन्धित्वेन सर्वज्ञत्वप्रसङ्गाद्वा । एतेन द्वितीयतृतीयपक्षावपि निरस्तौ ॥

किञ्च वृत्तेः सूर्यमण्डलपर्यन्तं निर्गमनेन तन्मध्यवर्तिपदार्थानां वृत्तिसंयोगस्यावश्यकतया तावतां प्रत्यक्षत्वप्रसङ्गो दुर्वारः । नच मध्यवर्तिपदार्थै- 5 रेतद्वृत्तिघटितसंबन्धे सत्यपि तत्तदाकारवृत्तिघटितपरम्परासंबन्धाभावात् न तदवभास इति वाच्यम्; सत्यपि चिदुपरागे तदनवभासे चिदुपरागस्य विषयावभासप्रयोजकत्वकल्पनं भ्रान्तिमूलमेव स्यात् ॥

किञ्च संप्रतिपन्नेन चक्षुःसंयोगादिना व्यवहारसंभवे वृत्तिकल्पनं तन्निर्गमनकल्पनं च व्यर्थम्, अतिप्रसङ्गतत्परिहारौ वृत्तिकल्पनेऽपि तुल्यौ ॥ 10

नापि चतुर्थः पक्षः—बिम्बप्रतिबिम्बाभेदस्य स्वाभाविकत्वेन वृत्त्यधीनत्वाभावात्, तदभिव्यक्तेरपि वृत्त्यधीनत्वाभावाच्च । नहि घटाद्याकारवृत्त्या बिम्बप्रतिबिम्बाभेदः अभिव्यक्तियोग्यः; अनतिप्रसङ्गात्, मोक्षपर्यन्तावस्थायिनो जीवभावस्य वृत्तिनिवर्त्यत्वाभावात् तदनिवृत्तौ बिम्बप्रतिबिम्बाभेदाभिव्यक्त्यसंभवात् घटादिवृत्त्या जीवभावनिवृत्तौ च सर्वमोक्षप्रसङ्गात् ॥ 15

किञ्च परोक्षस्थले वृत्तिनिर्गमनाभावेन चिदुपरागाभावाद्व्यवहाराभावप्रसङ्गः । तत्र वृत्तेरेव व्यवहारहेतुत्वे अपरोक्षेऽपि तथैव स्यादिति चिदुपरागकल्पनं व्यर्थम् । परोक्षत्वापरोक्षत्वे च सामग्रीवैचित्र्यकृते इति न चिदुपरागाधीनो विषयावभास इति ॥

अन्ये–तु सर्वगतोऽपि जीवः अविद्यावृतत्वात् विषयाननवभासयन् वृ- 20 त्तिविषयोपरागादावरणतिरोधाने सति विषयेऽभिव्यक्तो जीवस्तमेव विषयं प्रकाशयतीत्यावरणाभिभवार्था वृत्तिरित्याहुः, तदप्ययुक्तम्; आवरणाभिभवस्यैव वक्तुमशक्यत्वात् । अत्रावरणाभिभवं बहुधा वदन्ति—

केचित्तु–चैतन्यमात्रावारकस्याज्ञानस्य विषयावच्छिन्नप्रदेशे ज्ञानेन एकदेशस्य विनाशोऽभिभवः, यथा खद्योतादिप्रकाशेन महान्धकारे एकदेशस्य 25 विनाश इत्याहुः ॥

अन्ये तु—कटवद्विषयांशे (अ)ज्ञानस्य संवेष्टनमभिभव इत्याहुः ॥ परे तु—भीरुभटवत् ज्ञानेनाज्ञानस्यापसरणमभिभव इत्याहुः ॥ अपरे तु—पक्षत्रयमप्ययुक्तम् । न तावत् ज्ञानेनाज्ञानस्यैकदेशविनाश इति पक्षः संभवति, एकदेशविनाशे पुनस्तत्राज्ञानावरणासंभवात् सकृदवगतेऽर्थे सर्वदा आव-5 रणाभावप्रसङ्गात् । निष्क्रियस्यापसरणवेष्टनयोरसंभवात् निस्पर्शतया नोदनाभिघातयोरसंभवाच्च द्वितीयतृतीयपक्षावप्ययुक्तौ । तस्माच्चैतन्यावारकस्याप्यज्ञानस्य वृत्तिविषयोपरागे चैतन्यानावारकत्वस्वभाव एवाभिभव इत्याहुः ॥ तत्र पक्षत्रयं परैरेव निरस्तम् ॥

किञ्च देवदत्तज्ञानेन घटावच्छिन्नाज्ञानविनाशे यज्ञदत्तस्यापि घटप्रकाशप्र-10 सङ्गः । नच यज्ञदत्तीयवृत्तिकृताज्ञानविनाशभावात् न तत्प्रसङ्ग इति वाच्यम्; देवदत्तीयदीपेन तमोनिवृत्तावपि यज्ञदत्तस्यापि विषयोपलम्भदर्शनात् । देवदत्तीयज्ञानेन घटाज्ञाननिवृत्तौ यज्ञदत्तीयघटज्ञानेन तस्य घटप्रकाशाभावप्रसङ्गश्च, छिद्रस्य पुनश्छिद्रकरणायोगात् ॥

चतुर्थपक्षोऽप्यनुपपन्नः—अज्ञानस्यानावारकत्वस्वभावत्वे वृत्त्यपेक्षाभाव-15 प्रसङ्गात् । नचाविद्याकृतमावरणं वृत्त्या निवर्त्यत इति तदपेक्षेति वाच्यम्; तथासति देवदत्तघटवृत्त्या घटाज्ञाननिवृत्तौ यज्ञदत्तस्यापि घटप्रकाशप्रसङ्गात्, प्रतिप्रमात्रावरणभेदकल्पने सकृदवगतार्थस्य सर्वदा प्रकाशप्रसङ्गः ॥

किञ्च अज्ञानस्य वृत्तिसंसृष्टविषयचैतन्यावारकस्वभावत्वे नाडीहृदयधर्मादिगोचरपरोक्षवृत्तौ सत्यां तत्रावरणाभावप्रसङ्गः । इन्द्रियजन्यत्वेन वृत्तिवि-20 शेषणे इन्द्रियजन्यवृत्तिविषयचैतन्यानावारकत्वस्वभावस्यैव सुवचत्वात् वृत्तेः बहिर्निर्गमनाभ्युपगमो निर्मूलः स्यात् ॥

किञ्च ज्ञानेनावरणनिवृत्तौ ब्रह्मज्ञानेनाप्यावरणनिवृत्तिरेव स्यात् न त्वविद्यानिवृत्तिरिति घटज्ञानेन घटाज्ञानं निवृत्तमित्यनुभवविरोधश्च ॥

ननु तर्हि ज्ञानेनाज्ञानस्यैव निवृत्तिरस्तु । नच सद्यो मुक्तिप्रसङ्गः; 25 तूलाज्ञाननिवृत्तावपि मूलाज्ञाननिवृत्त्यभावात्, यावन्ति ज्ञानानि तावन्ति तन्निवर्तनीयाज्ञानानीत्यभ्युपगमादिति चेन्न, अज्ञानं हि घटं न जानामी-

१ घटवद्विषयांशे अज्ञानस्य ।

त्यनुभवसिद्धं; तच्च घटतादात्म्यापन्नतदधिष्ठानविषयगोचरं, स्वस्य जडतया अज्ञानागोचरत्वात् । अधिष्ठानं च ब्रह्मैवेति ब्रह्मावारकमेवाज्ञानं न जीवचैतन्यावारकमिति तस्य नित्यानावृतत्वेन सर्वप्रकाशप्रसङ्गो दुर्वारः ॥

किञ्चानन्तवृत्तीनां तन्निवर्तनीयानन्ताज्ञानानां च कल्पनापेक्षया ज्ञानानन्त्यमात्रकल्पने लाघवमिति तत्कल्पनमेव युक्तमिति ॥ 5

किञ्च पक्षचतुष्टयेऽपि वृत्तिनिर्गमनकल्पनं व्यर्थम् । यदीया वृत्तिर्यदाकारा सा तस्य तद्गोचराज्ञानं निवर्तयतीति वक्तुं सुवचत्वात्, इह स्थित्यैव विषयगताज्ञाननिवर्तकत्वसंभवात् आवरणस्य विषयगतत्वे मानाभावाच्च । लोके हि मूलावरणं नानाविधं दृष्टम् । किञ्चिन्मुखगतं यथा पक्ष्म । किञ्चिद्गोलकगतं यथा पटलादि । किञ्चिच्च विषयगतं यथाऽवकुण्ठनपटादि । 10 किञ्चिच्च अन्तरालगतं यथा कुड्यादि। एवं च पारिभाषिकस्यावरणस्य कथं देशविशेषनियमकल्पनं? प्रत्युत वृत्तिसमानदेशत्वकल्पनमेव युक्तम्, अहमज्ञ इति प्रतीतेः । तस्मादज्ञाननिवृत्त्यर्थं न वृत्तेर्निगमापेक्षा ॥

अपरे तु जीवः अन्तःकरणोपाधिना परिच्छिन्नः घटाद्यसंसृष्टो न घटादिकमवभासयति । वृत्तिद्वारा तदुपसृष्टविषयावच्छिन्नब्रह्मचैतन्याभेदाभिव्यक्तौ 15 तं विषयं प्रकाशयतीति विषयचैतन्याभेदाभिव्यक्त्यर्था वृत्तिरित्याहुः ॥

तदप्ययुक्तम्—अभेदाभिव्यक्तेरसंभवात् । अत्राभेदाभिव्यक्तिं बहुधा वर्णयन्ति—

केचित्तु कुल्याद्वारा तटाककेदारसलिलयोरिव विषयावच्छिन्नचैतन्यान्तःकरणावच्छिन्नचैतन्ययोर्वृत्तिद्वारा एकीभावोऽभेदाभिव्यक्तिरित्याहुः ॥ 20

अन्ये तु विषयावच्छिन्नब्रह्मचैतन्यं विषयसंसृष्टायां वृत्तौ अग्रभागे विषयप्रकाशकं प्रतिबिम्बमर्पयति, तस्य प्रतिबिम्बस्य जीवचैतन्येन एकीभावोऽभेदाभिव्यक्तिरित्याहुः ॥

अपरे तु बिम्बभूतविषयावच्छिन्नचैतन्यमेव साक्षादाध्यासिकसंबन्धलाभात् विषयप्रकाशकमिति तस्यैव बिम्बत्वविशिष्टरूपेण भेदसद्भावेऽपि तदुप- 25 लक्षितचैतन्यात्मना एकीभावोऽभेदाभिव्यक्तिः ॥

एवञ्च विषयचैतन्यस्यान्तःकरणावच्छेदात् तदनवच्छेदकृतभेदनिवृत्तिरवभासप्रयोजिकेत्याहुः ॥

तत्र प्रथमपक्षस्तावदनुपपन्नः । औपाधिकजीववादे जीवब्रह्मणोर्वृत्तिद्वारा अभेदे जीवे ब्रह्मगतघटतादात्म्यवत् ब्रह्मणि जीवगतं[1] दुःखित्वं प्रसजेत् ॥

5 ननु तदानीं घटचैतन्यस्य जीवोपाधिव्याप्त्या जीवभावेन ब्रह्मत्वसिद्धेः न ब्रह्मणो दुःखित्वमिति चेत् तर्हि तदानीं ब्रह्मणः सार्वज्ञ्यं न स्यात्। प्रतिबिम्बजीववादे तु भेदकोपाधौ सति वृत्तिमात्रेण बिम्बप्रतिबिम्बयोरभेदायोगात् स्वाभाविकाभेदस्य वृत्त्यनपेक्षत्वात् । यद्युपाधेरपि विनाशस्तदा जीवस्यैव विनाशात् कस्य घटादिप्रकाशः स्यात् ॥

10 द्वितीयपक्षोऽप्ययुक्तः । अन्तःकरणतद्वृत्तिरूपोपाधिभेदेन बिम्बप्रतिबिम्बयोरन्तःकरणवृत्तिगतयोरैक्यासंभवात् तद्बिम्बयोरपि भेदाच्च । चैतन्यस्वरूपस्यैव अन्तःकरणगतप्रतिबिम्बस्य बिम्बत्वात् विषयावच्छिन्नचैतन्यस्य वृत्तिगतप्रतिबिम्बस्य बिम्बत्वात् । कालभेदादप्यन्तःकरणवृत्तिगतयोः प्रतिबिम्बयोरैक्यासंभवः । अन्तःकरणगतप्रतिबिम्बस्य अनादित्वात् वृत्तिगतप्रतिबि-
15 म्बस्येदानीन्तनत्वात्। किञ्च विषयावच्छिन्नचैतन्यस्य वृत्तौ प्रतिबिम्ब इत्यत्र विषयावच्छिन्नचैतन्यपदेन किं विषयापादितभेदवच्चैतन्यं विवक्षितम्, विषयविशिष्टचैतन्यं वा, विषयोपलक्षिताधिष्ठानचैतन्यस्वरूपं वा । नाद्यः; विशिष्टज्ञाने समूहालम्बने च तत्तद्विषयावच्छिन्नचैतन्यानां भिन्नतया वृत्तौ तत्प्रतिबिम्बानामपि भिन्नत्वेन तेषामेकेनान्तःकरणप्रतिबिम्बचैतन्येनैक्या-
20 संभवात् । न द्वितीयः; विषयस्य प्रतिबिम्बाभ्युपगमवैयर्थ्यात् । प्रकाशकाधिष्ठानचैतन्याभेदे तस्याप्रयोजकत्वात् । न तृतीयः; सर्वविषयाधिष्ठानचैतन्याभिन्नतया अन्तःकरणचैतन्यस्य घटप्रकाशकदशायां सर्वप्रकाशप्रसङ्गात् ॥

किञ्च वृत्तेः प्रकाशकचैतन्याभेदार्थत्वं हि भवदभिमतम् । नच तत्
25 संभवति । बिम्बप्रतिबिम्बयोरधिष्ठानचैतन्यवृत्तिचैतन्ययोरौपाधिकभेदसत्त्वे-

---

१ जीवगतं वृत्तिदुःखित्वं-(मै) २७७१

नैक्यासंभवात् । वास्तवाभेदस्यातिप्रसञ्जकत्वेनाप्रयोजकत्वात् । अन्यथाऽन्तः-करणावच्छिन्नस्य[1] बिम्बभूतविषयचैतन्याभेदसत्त्वेन सर्वदा विषयप्रकाश-प्रसङ्गात् ॥

तृतीयपक्षोऽप्यनुपपन्नः । अन्तःकरणावच्छेदकृतभेदनिरासस्य प्रकाश-प्रयोजकत्वे घटप्रकाशदशायां स्पर्शादेरपि प्रकाशप्रसङ्गात् । तदाकारवृत्ति- 5 कृतभेदनिवृत्तिरेव प्रकाशप्रयोजक इति चेन्न; तथा सति घटप्रकाश-दशायां स्पर्शाद्यप्रकाशार्थमावरणकल्पनवैयर्थ्यात् उक्तप्रयोजकाभावादेव स्पर्शाद्यप्रकाशोपपत्तेः । ननु अन्तःकरणाच्छिन्नचैतन्याभेद एवावभासकः, नतु तदाकारस्याप्यन्तर्भावः । तथा च स्पर्शादेरपि प्रकाशप्रसङ्गवारणायाव-रणकल्पनमिति चेन्मैवं; तदाकारवृत्त्यवच्छिन्नचैतन्यसंबन्धस्यैव अवभास- 10 प्रयोजकत्वकल्पनेनैव स्पर्शाद्यप्रकाशोपपत्तेः अन्तःकरणावच्छिन्नचैतन्या-भेदस्य प्रकाशप्रयोजकत्वं कल्पयित्वा स्पर्शाद्यप्रकाशार्थमज्ञानावरणस्य वृत्त्या तन्निवृत्तेश्च कल्पने अत्यन्तगौरवादिति ॥

इति श्रीवेदान्तविजयमङ्गलदीपिकायाम्
अवेद्यत्वभङ्गः षष्ठः ॥ 15

---

श्रीः

## अथ देवतान्तरोपास्यत्वभङ्गः प्रारभ्यते ॥

श्रीमन्नारायणस्यैव वेद्यत्वं च सुनिश्चितम् ।
पुरुषं वेद सत्यं तां ब्रह्मविद्यामिति श्रुतेः ॥ 20
श्रुतिस्मृतिप्रयोगेभ्यो नारायणपरो हि सः ।
ज्ञातः पुरुषशब्दस्तु पुंसूक्तप्रत्यभिज्ञया ॥

'येनाक्षरं पुरुषं वेद सत्यं
प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्'

[1] करणावच्छिन्नविम्बभूत ।

इति पुरुषस्यैव वेद्यत्वं प्रतिपाद्यते, पुरुषशब्दश्च नारायणपर एव, श्रुतिस्मृतिप्रयोगानुसारात् । श्रुतिस्तावत् कूर्मरूपिणं भगवन्तं पुरस्कृत्य "पूर्वमेवाहमिहासमिति तत्पुरुषस्य पुरुषत्व"मिति । अस्याः श्रुतेः पुरुषशब्दनिर्वचनतया पुरुषशब्दवाच्यत्वं प्रतीयते । निर्वचनस्य सर्वस्यापि वाच्यताप्र-
5 तिपादनपरत्वस्य सर्वसिद्धत्वात् । पुरुषशब्दवाच्यस्य कूर्मरूपित्वं चान्ततः कूर्मं भूतं सर्पन्तमिति प्रकृतवाक्यादवगम्यते । कूर्माकृतियोगश्च नारायणस्यैवेति पुरुषो नारायण इति सिध्यति । एतच्छ्रुत्युपबृंहणानुसाराच्च पुरुषस्य नारायणत्वप्रतीतिः ॥

यदि वा पूर्वमेवाहमिहेति पुरुषं विदुः ।
10　यदि वा बहुदानाद्वै विष्णुः पुरुष उच्यते ॥

इति एतच्छ्रुत्युपबृंहणं पाद्मवचनम् । एतेन "तेऽपश्यन् पुरोडाशं कूर्मं भूतं सर्पन्त"मित्यन्यत्रापि कूर्माकृतियोगप्रतिपादनान्न तेन नारायणत्वप्रतीतिरिति निरस्तम् । "पूर्वमेवाहमिहास"मित्यादिना अनादित्वस्रष्टृत्वादिप्रतिपादनात् तत्सहचरितं कूर्माकृतिमत्त्वं नारायणस्यैवासाधारणमिति नारा-
15 यणत्वसिद्धेश्च । ततोऽन्यत्र तत्प्रसिद्ध्यभावात् । "तद्वा इदमग्रे सलिलमासीत्स प्रजापतिः प्रजाः स्रष्टुं लोकानवपश्यमानो बभ्राम, सोऽन्तस्सलिले विचरन्तं कूर्ममपश्यत् तमपृच्छत् कस्त्वमिति । सोऽब्रवीत् पुरुषोऽहमिति । तं प्रजापतिरब्रवीत् कः पुरुष इति । सोब्रवीद्येनेदं सत्येन ज्योतिषा काष्ठमिवाग्निना पूर्णं स वै पुरुष इति । तं प्रजापतिः प्रणिपत्याब्रवीत् ।
20 भगवन् येन तेन रूपेण[1] जगदिदं पूर्णं तन्मे दर्शय प्रसीदेति तस्मै प्रदर्शयन् नारसिंहमनाद्यन्तं ज्योतिर्मयम्" इति प्रजापतिपुरुषप्रश्नोत्तरवाक्यैः कूर्मरूपपुरुषस्य नारायणत्वावगमाच्च ॥

एवं तापनीयोपनिषदि पञ्चमे खण्डे "परात्परं पुरिशयं पुरुषमीक्षत"इति पुरुषस्येक्षतिकर्मत्वश्रवणात् तत्प्रत्यभिज्ञायमानया "तद्विष्णोः परमं पदं
25 सदा पश्यन्ति सूरयः"इति श्रुत्यापि पुरुषस्य विष्णुत्वसिद्धिः ॥

---

१ त्वद्रूपेण. ख.

"पुंस्संज्ञे वै शरीरेऽस्मिन् शयनात्पुरुषो हरिः ।"

इति पुरुषशब्दस्य हरिशब्देनाभिधानात् शरीरान्तर्वर्तित्वनिमित्तपुरुषशब्दवाच्यताप्रतिपादनाच्च पुरुषस्य नारायणत्वसिद्धिः ।

[ चेतनाचेतनान्तर्यामिणो नारायणत्वं श्रुत्यन्तरे स्पष्टम् ॥

किञ्च—"परात्परं पुरुषमुपैति दिव्यम्। परात्परं पुरिशयं पुरुषमीक्षते"॥ 5

इत्यत्र पुरुषशब्दवाच्यस्य सर्वस्मात्परत्वप्रतिपादनात् प्राप्यत्वप्रतिपादनाच्च नारायणत्वसिद्धिः ॥

"नारायणः परं ब्रह्म तत्त्वं नारायणः परः" । ]

"नारायणाद्रुद्रो जायते नारायणाद्ब्रह्मा जायते" । इत्यादिभिः नारायणस्यैव सर्वस्मात्परत्वप्रतिमादनपरत्वेन नारायणपुरुषयोरैक्यावगमात् । एवं 10 स्मृतिभिरपि पुरुषस्य नारायणत्वसिद्धिः । यथा—याज्ञवल्क्ये—

ईश्वरं पुरुषाख्यं तु सत्यधर्माणमच्युतम् ।

इति ।

यमस्मृतौ च—

रविमध्ये स्थितस्सोमः सोममध्ये हुताशनः । 15
तेजोमध्ये स्थितं सत्त्वं सत्त्वमध्ये स्थितोऽच्युतः ॥
एष देवस्तु मर्त्यानां पटैरिव विधीयते ।
एष वै पुरुषो विष्णुः व्यक्ताऽव्यक्तः सनातनः ॥

इति ।

अत्र हि पुरुषस्याच्युतत्वविष्णुत्वावगतेः नारायणत्वसिद्धिः । 20

सहस्रनामसु—अव्ययः पुरुषः साक्षी इत्युपक्रम्य—

नारसिंहवपुः श्रीमान्केशवः पुरुषोत्तमः ।

इत्यभिधानात् ।

श्रीमति वैष्णवे पुराणे—

भगवानिति शब्दोऽयं तथा पुरुष इत्यपि । 25
निरुपाधी प्रवर्तेते वासुदेवे सनातने ॥

---

१ इति पुरुषस्य हरिशब्देन । २ सत्य । ३ च वर्तेते.

इति पुरुषशब्दार्थस्य(शब्दस्य)वासुदेव(पर)त्वप्रतिपादनात् नारायणत्वसिद्धिः । भगवच्छब्दसमभिव्याहाराच्च पुरुषशब्दस्य नारायणपरत्वसिद्धिः । भगवच्छब्दस्य नारायणासाधारणत्वात् ।

तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः ।
5 शब्दोऽयं नोपचारेण ह्यन्यत्र ह्युपचारतः ॥

इति तस्य भगवदसाधारणत्वप्रतिपादनात् ।

पाद्मे च—ब्रह्माद्याः सकला देवाः यक्षतुम्बुरुनारदाः ।
ते सर्वे पुरुषांशत्वादुच्यन्ते पुरुषा इति ॥

इति भगवतोऽन्यत्र पुरुषशब्दस्य गौणत्वप्रतिपादनात् भगवत एव 10 पुरुषशब्दवाच्यत्वसिद्धिः ।

श्रीभागवते—

सृष्ट्वं स्वशक्त्येदमनुप्रविष्टः—
चतुर्विधं पुरमात्मांशकेन
अतो विदुस्त्वां पुरुषम् ॥

15 इति भगवत एव पुरुषत्वं प्रतिपादितम् ।

नारसिंहपुराणे च—

य एव वासुदेवोऽयं पुरुषः प्रोच्यते बुधैः ।
प्रकृतिस्पर्शराहित्यात् स्वातन्त्र्याद्वैभवादपि ॥
स एव वासुदेवोऽयं साक्षात्पुरुष उच्यते ।
20 स्त्रीप्रायमितरत्सर्वं जगद्ब्रह्मपुरस्सरम् ॥

इति ।

अत्र वासुदेववाचकपुरुषशब्दमनूद्य तस्य तत्रैव मुख्यवृत्तित्वं प्रतिपादितम्, साक्षादिति मुख्यत्वाभिधानात् । एतेन "अपशवो वा अन्ये गो अश्वेभ्यः पशवो गो अश्वाः, अश्वानेवास्मै समीचो दधाति" इति असाधारण्येन 25 गवाश्वानां पशुत्वोक्तिवत् एतानि वचनानि पुरुषधर्मपौष्कल्येन वासुदेवप्रशंसा-

पराणीति परास्तम् । य एव वासुदेवोऽयमित्यादेरुक्तवासुदेवादन्येषां पुरुषशब्दावाच्यत्वविधेरेव स्वरसतः प्रतीतेः । तस्य च निरुपाधी च वर्तेते इति स्मृत्यन्तरानुग्रहाद्वेदोपबृंहणार्थं प्रवृत्तपुराणापेक्षितवेदान्तार्थनिर्णयौपयिकत्वेन सप्रयोजनकत्वात् मानान्तराविरोधाच्च उक्तार्थ उपपन्नः । अपशव इत्यादिवाक्यं तु "सप्त ग्राम्याः पशव" इत्यादिश्रुत्यन्तरविरोधात् प्रत्यक्षविरोधात् अपशवो वा अन्ये पशव इति स्ववचनविरोधात् पशुत्वविधौ[1] प्रयोजनाभावात् वैशब्दोपबन्धात् समीच इत्यभिधानात् विध्यन्तरविरोधाच्च अपशव इत्यत्र पशुशब्दस्य पशुत्वनिमित्तकोपचारत्वमभ्युपगम्य गवाश्वार्थवाद इत्युक्तम् "तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिङ्गसमवायाः" इत्यत्र । एवं स्कान्दे—

> यथा भास्करशब्दोऽयमादित्ये प्रतितिष्ठति ।
> यथा चाग्नौ बृहद्भानुर्यथा वायौ सदागतिः ॥
> यथा पुरुषशब्दोऽयं वासुदेवेऽवतिष्ठते ।
> तथा शंकरशब्दोऽयं महादेवे व्यवस्थितः ।
>
> इति ॥

अत्र व्यवस्थित इत्युक्त्या शंकरशब्दस्य महादेवे असाधारण्यमुच्यते । तद्दृष्टान्ततया पुरुषशब्दस्योपादानात् तस्य वासुदेवासाधारण्यसिद्धिः ॥ ननु स्कान्द एव—

> पुरुषो नाम संपूर्णः शिवः सत्यादिलक्षणः ।
> साम्बमूर्तिधरो नान्यो रुद्रो विष्णुरजोऽपि वा ॥

इति पुरुषशब्दस्य साम्बशिवासाधारण्यप्रतिपादनात् कथं नारायणासाधारण्यमिति चेत् न; उदाहृतबहुश्रुतिस्मृतिविरोधेन पुरुषशब्दस्य साम्बशिवासाधारण्यपरत्वाभावात्, अन्यथा उदाहृतस्कान्दवचनविरोधापत्तेः ॥ तस्मात्तदेवं व्याख्येयम्—

रुद्रगायत्र्यादिषु पुरुषशब्देन रुद्रो विष्णुरजोपि न प्रतिपाद्यते, किन्तु

---

१ अपशुत्वविधौ ।

साम्बमूर्तिधरः शिव एव । अतः सः अन्येभ्यः प्रशस्ततर इति अस्य च प्रशंसामात्रपरत्वम् । नच वासुदेवासाधारण्येन पुरुषशब्दप्रतिपादनपरवचनस्य प्रशंसार्थत्वं, रुद्रासाधारणशंकरशब्दद्दष्टान्ततया पुरुषशब्दस्योपादानात्[1] भास्कराद्यसाधारणशब्दसमभिव्याहाराच्च तत्परत्वमेवेति ॥

5 किञ्च निरुपाधी च वर्तेते इति भगवच्छब्दपुरुषशब्दयोः भगवत्येवासाधारणतया मुख्यत्वप्रतिपादनान्न प्रशंसापरत्वम् । नहि पुरुषो नामेत्यादिवचने मुख्यताबोधकं पदमस्ति । अतः पुरुषशब्दस्य मुख्यलक्षणासाधारणतया न पुरुषशब्दस्य मुख्यार्थतासाधकत्वम् । मोक्षधर्मे—

वैकुण्ठः पुरुषो विष्णुः शुक्लोऽनन्तः सनातनः ।
10 मुञ्जकेशो हरिश्मश्रुः सर्वभूतपितामहः ॥

इति पुरुषशब्दस्य विष्णुवाचकत्वं स्पष्टमेवावगम्यते । वैकुण्ठादिशब्दवाच्यत्व एव वचनस्य तात्पर्यात् । अन्यथा पौनरुक्त्यप्रसङ्गात् । मात्स्ये अष्टचत्वारिंशच्छततमाध्याये—

रहस्यारण्यकोद्दिष्टं यच्चौपनिषदं स्मृतम् ।
15 पुरुषो यज्ञ इत्येतद्यत्परं परिकीर्तितम् ।
यच्चान्यत्पुरुषाख्यं स्यात्स एव पुरुषोत्तमः ॥

इति ॥

अस्यार्थः—यद्वस्तु रहस्यारण्यकैः प्रतिपाद्यं, यच्च "तं त्वौपनिषदं पुरुषं विद्धी"त्यादौ औपनिषदत्वेन प्रतिपादितं, यच्च "सहस्रशीर्षा पुरुष" इत्यादौ 20 पुरुष इत्युक्तम्, यच्च तत्रैव पुरुषसूक्ते "यज्ञेन यज्ञमयजन्त देवा" इत्यादौ यज्ञ इत्युक्तं स पुरुषोत्तम एव । यच्च ततोऽन्यत्पुरुषाख्यं वस्तु तदपि पुरुषोत्तम एव । तदंश एव अतः पुरुषशब्देनोच्यत इत्यभिप्रायः ॥

यद्वा यच्चान्यदुपनिषदन्तरप्रतिपाद्यतया भिन्नं वस्तु पुरुषशब्देनोच्यते तत्सर्वं पुरुषोत्तम एवेति ॥ भागवते एकादशस्कन्धे—

25 भूतैर्यथा पञ्चभिरात्मसृष्टैः
पुरा विराजं विरचय्य तस्मिन् ।

---

१ स्वोपपादनात्.

स्वांशेन विष्टः पुरुषाभिधान-
मवाप नारायण आदिदेवः ॥

इति नारायणस्यैव पुरुषशब्दवाच्यत्वं स्पष्टम् । प्रयोगश्च कठवल्ल्याम् "अव्यक्तात्पुरुषः परः । पुरुषान्न परं किञ्चित्" इति । अत्र—

"सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" 5

इति प्राप्यस्याभिधानात् पुरुषशब्दो विष्णुविषयः । एवमन्यत्रापि श्रुत्यन्तरे तत्र तत्र पुरुषशब्दस्य नारायणविषये प्रयोगो वेदान्तविजये बहुधा प्रपञ्चितः । विस्तरभयान्नेह लिख्यते ॥

एवं पुरुषं वेदेति पुरुषशब्दस्य पुरुषसूक्तप्रत्यभिज्ञानेनापि नारायणपरत्वं सिद्धम् । पुरुषसूक्तस्य लक्ष्मीपतित्वादिलिङ्गेन नारायणशब्देन च 10 नारायणपरत्वस्य सुस्पष्टत्वात् ॥

ननु "उतामृतत्वस्येशान" इति ईशानशब्द[१]श्रवणात् तस्य च रुद्रे रूढत्वात् पुरुषसूक्तस्य रुद्रपरत्वमेवेति चेत् न; अमृतत्वस्येति षष्ठ्यन्तपदसमभिव्याहारेण रूढेरपहृतत्वात् पदान्तरासमभिव्याहृतेशानपदस्यैव तत्र रूढत्वात् । अत एव गृहस्येशानो ग्रामस्येशान इत्यादौ योगार्थ एव न 15 रूढ्यर्थः । प्रकृते चोभयविवक्षायामावृत्तिकल्पनादोषः, प्रमाणाभावश्च स्वारसिकयोगार्थेनैव प्रकृतार्थनिर्वाहात् ॥

वस्तुतस्तु—"यतो वा इमानि भूतानि जायन्ते" इति जगत्कारणमुपक्रम्य "तद्विजिज्ञासस्व" इति तस्य जिज्ञास्यत्वमुक्तम् । जगत्कारणं च श्रीमन्नारायण एव "एको ह वै नारायण आसीत्, नारायणादेव समुत्पद्यन्ते 20 नारायण एवेदं सर्वम्" इत्यादिश्रुतेः ॥

ननु "न सन्नचासच्छिव एव केवलः" "एक एव रुद्रो न द्वितीयाय तस्थे हिरण्यगर्भः समवर्तताग्रे" इत्यादिश्रुतिभिः रुद्रादेरपि जगत्कारणत्वं प्रतिपाद्यते, तत्कथं नारायणस्यैव जगत्कारणत्वमिति चेदुच्यते । परस्परविरोधपरिहाराय उक्तश्रुतीनामेकविषयत्वं तावदावश्यकम् । तत्र सर्वासामुक्त- 25

---

१ कटिशब्दश्रवणात् इति इमान्यक्षराणि कोशान्तरे दृश्यन्ते ।

श्रुतीनां नारायणपरत्वमेव युक्तम्, नतु रुद्रादिपरत्वम्; "एको ह वै नारायण आसीन्न ब्रह्मा नेशान" इति प्रलयकाले नारायणस्यैवावस्थानश्रुतेः रुद्रादीनां तदभावश्रुतेश्च । तस्मात्पुरुषं वेदेति उपास्यत्वेनोच्यमानः पुरुषः अन्यत्रोपास्यत्वेन प्रतिपादितः श्रीमन्नारायण एवेति स एवोपास्यः ॥

5 किञ्च "नारायणाद्रुद्रो जायत" इत्यादिना नारायणसृज्यत्वेन प्रतिपादितरुद्रादेः कथमुपास्यत्वम् । नच मनुष्यादिरूपेणावतीर्णनारायणस्यापि कथमुपास्यत्वमिति वाच्यम्; मनुष्यादिरूपेण तदवतारस्य स्वेच्छाकल्पितत्वेन उपास्यत्वाविरोधात् रुद्रादेः पुरुषान्तरसृष्टत्वेनानुपास्यत्वात् ॥

किञ्च "नास्त्यकृतः कृतेने"ति अकृतशब्देन प्रक्रान्तस्यैव पुरुषश-10 ब्देनाभिधातुं युक्तत्वात् उपास्यपुरुषस्याकृतत्वं सिद्धम् । अकृतश्च नारायण एव, रुद्रादेश्च नारायणसृष्टत्वेन कृतत्वात् । ब्रह्मनिष्ठं ब्रह्मविद्यामिति पूर्वोत्तरवाक्ययोः ब्रह्मपदसमभिव्याहारेण उपास्यपुरुषस्य ब्रह्मपदवाच्यतया नारायणत्वसिद्धिः । ब्रह्मपदस्य नारायण एव रूढत्वात् अन्यत्रौपचारिकत्वात् । तदुक्तं भाष्ये—तस्मादन्यत्र तद्गुणलेशयोगादौपचारिकः, अनेकार्थत्वकल्प-15 नायोगात् भगवच्छब्दवदिति । किञ्च नारायणं महाज्ञेयमिति नारायणस्य महाज्ञेयत्वमुक्तम् । ज्ञेयस्य च महत्त्वं सकलमुमुक्षूपास्यत्वं सकलफलकामोपास्यत्वं च, अन्यानिरुक्तेः । तच्च नारायणस्यैव । नारायणपदस्य योगार्थेन शिवादिपरत्वं ब्रह्मविद्याविजयोपन्यासे निराकरिष्यते । तस्मान्नारायणस्यैव सिद्धमुपास्यत्वमिति संक्षेपः ॥

20 इति वेदान्तविजयमङ्गलदीपिकायां
देवतान्तरोपास्यत्वभङ्गः सप्तमः ॥

श्रीः

# अथ गुरुविधिविजयोपन्यासः अवाच्यत्वभङ्गः ।



सद्ब्रह्मात्मादिशब्देभ्यो ब्रह्मणः प्रतिपादनात् ।
वाच्यत्वं तस्य सिद्धं स्यादवाच्यत्वं पराहतम् ॥ 5
शक्त्या लक्षणया वा स्याद्ब्रह्मणः प्रतिपादनम् ।
तैः शब्दैर्लक्षणा युक्ता मुख्यार्थविरहान्न च ॥
सति मुख्यार्थसम्बन्धे सा दृष्टा लोकवेदयोः ।
ततः शक्त्यैव तैः शब्दैः ब्रह्मणः प्रतिपादनम् ॥

"सदेव सोम्येदमग्र आसीत्" "आत्मा द्रष्टव्यः" "सत्यं ज्ञानमनन्तं 10 ब्रह्म" "एकमेवाद्वितीय"मित्यादिश्रुतिषु सद्ब्रह्मादिशब्दैः ब्रह्मणः प्रतिपादनात् वाच्यत्वं सिद्धम् । तथाहि—

तैश्शब्दैः ब्रह्मणः प्रतिपादनं मुख्यया वृत्त्या लक्षणावृत्त्या वा स्यात् । नहि लक्षणा संभवति; मुख्यार्थसंबन्धाभावे तदनुपयोगात् । नहि सद्ब्रह्मादिशब्दानां परमात्मनोऽन्यत्र मुख्यवृत्तिः संभवति । तस्माद्वाच्यत्वमेव ब्र- 15 ह्मणो न लक्ष्यत्वम्, लक्ष्यतावच्छेदकाभावात् न लक्षणा, मुख्यवृत्त्यभावेऽपि शब्देन प्रतिपादने घटादावपि तथा संभवात् वाच्यत्वप्रसङ्गो दत्तजलाञ्जलिः स्यात् । किञ्च मुख्यवृत्तिं परित्यज्य लक्षणाङ्गीकारे न किञ्चिन्नियामकं पश्यामः । सविशेषत्वप्रसङ्गस्य लक्ष्यत्वेऽप्यविशेषात् वृत्तिविषयत्वस्याप्यभावप्रसङ्गाच्च ॥ 20

ननु देवदत्तादिशब्दवत् साङ्केतिकशब्दोऽयम्[1] । नहि तत्र मुख्यवृत्तिर्लक्षणा वास्ति । अथापि देवदत्तादिकं बोधयति । एवं सद्ब्रह्मात्मादिशब्दा अपि ब्रह्मस्वरूपं बोधयन्तीति चेन्न; तथात्र सङ्केतयितृपुरुषाभावात्, भावे वा सङ्केतस्यैव शक्तिस्थानाभिषिक्तत्वात् । स च सङ्केतः लौकिकालौकिकशब्देष्वीश्वरकृतः देवदत्तादिनामशब्देषु इदानीन्तनपुरुषकृत इत्य- 25 न्यदेतत् ॥

---

१ साङ्केतिकोयं शब्दः.

किञ्च सद्ब्रह्मात्मादिशब्दानां ब्रह्मलक्षकाणां मुख्यार्थोऽस्ति वा न वा? नचेत्, हुंफडादिशब्दवदनर्थकत्वप्रसङ्गात्, किंचिदर्थबोधनद्वारेणैव शब्दानां लक्षकत्वस्य लोकसिद्धत्वात्। अस्ति चेत्, स एव सद्ब्रह्मात्मादिशब्दैर्बोध्यः स्यान्न ब्रह्मस्वरूपं, मुख्यार्थे बाधकाभावात् ॥

5 ननु सद्ब्रह्मात्मादिशब्दानां सत्ताब्रह्मत्वात्मत्वादिविशिष्टचैतन्यमेव मुख्यार्थः। तत्र विशेषाणां कल्पितत्वेन विशिष्टस्यातात्त्विकतया तत्संबन्धिनि ब्रह्मचैतन्ये लक्षणेति न ब्रह्मणो वाच्यत्वमिति चेन्न; एवमपि विशिष्टस्य वाच्यत्वे विशेष्यभूतब्रह्मणोऽपि वाच्यत्वावश्यंभावात्, यथा घटादिशब्दवाच्यत्वेऽपि घटत्वविशिष्टादे:[1] विशेष्यभूतघटादेरपि वाच्यत्वम्। नच 10 ब्रह्मणो विशिष्टात्मना वाच्यत्वेऽपि शुद्धात्मना वाच्यत्वाभावान्न विरोध इति वाच्यम्; एवमपि शुद्धचैतन्यादिपदवाच्यत्वस्य दुर्वारत्वात्, अवाच्यपदवाच्यत्वाच्च। अन्यथा ब्रह्मणः अवाच्यत्वभङ्ग एव स्यात्। नचावाच्यपदस्यापि ब्रह्मस्वरूपे लक्षणा न शक्तिः, अतो न विरोध इति वाच्यम्; अवाच्यत्वविशिष्टस्याप्रामाणिकतया तेन पदेन लक्षणायोगात्। नहि शशविषाणादि- 15 पदेन लक्षणा संभवति। संभवे वा अवाच्यपदेन ब्रह्मस्वरूपं किं स्वरूपेण बोध्यते विशिष्टवेषेण वा। आद्ये अवाच्यत्वभङ्गः। अन्त्ये सविशेषत्वप्रसङ्गः। किञ्च मुख्यार्थशून्यसद्ब्रह्मात्मादिशब्दैः ब्रह्मस्वरूपलक्षणायां ब्रह्मणः सर्वशब्दलक्ष्यत्वापत्तिः, मुख्यार्थसंबन्धाभावस्याविशिष्टत्वात्। नच लौकिकार्थशक्तैरेव शब्दैः लक्षणया ब्रह्म बोध्यत इति वाच्यम्; तथासति हुंफडा- 20 दिशब्देनापि ब्रह्मबोधप्रसङ्गात्। प्रत्युत तैरेव शब्दैर्ब्रह्मबोधनं युक्तम्, सत्यज्ञानादिशब्दवत् सविशेषत्वशङ्काया अभावात्। नचेष्टापत्तिः; आत्मोद्देशेनैव दर्शनादीनां विधानेन तच्छब्दबोध्यस्य ब्रह्मणः तदन्वयाप्रसङ्गेनानिर्मोक्षप्रसङ्गात्[2]।

किञ्च ब्रह्मावाच्यमिति हि भवद्भिरुच्यते! तत्र ब्रह्मपदवाच्यमवाच्य- 25 मिति वा विवक्षितम्, ब्रह्मपदलक्ष्यमवाच्यमिति वा, ब्रह्मपदबोध्यमवाच्यमिति वा? नाद्यः; व्याघातात्[3]। न द्वितीयः; ब्रह्मपदलक्ष्यस्य ब्रह्मातिरिक्तत्वेन

१ न विशेषत्व। २ तदनन्वयप्रसङ्गेन। ३ नहि ब्रह्मपदार्थो ब्रह्मपदावाच्य इति वक्तुं शक्यं। विरोधात्।

तस्य च वाच्यतया अवाच्यत्वाभावेन बाधप्रसङ्गात् तस्यावाच्यत्वानभ्युपगमाच्च [नहि[1] ब्रह्मपदार्थो ब्रह्मपदावाच्य इति वक्तुं शक्यम्, विरोधात्]। अत एव न तृतीयः; शक्यलक्ष्यातिरिक्तबोध्यासिद्धेः। गौण्या वृत्तेर्लक्षणाविशेषत्वात् ॥

अपि च ब्रह्मपदप्रवृत्तिनिमित्तं ब्रह्मण्यस्ति वा न वा? नाद्यः; प्रवृत्तिनिमित्तसत्त्वेऽपि ब्रह्मपदावाच्यत्वस्य ब्रह्मणापि दुस्साधत्वात् । न द्वितीयः; असिद्धेः। निरतिशयबृहत्त्वादेः ब्रह्मपदादिप्रवृत्तिनिमित्तस्य ब्रह्मण्येव पुष्कलत्वात्। नच धर्मिसमानसत्ताकप्रवृत्तिनिमित्ताभावान्न ब्रह्मपदवाच्यत्वमिति वाच्यम्; अप्रयोजकत्वात्। अन्यथा घटादावपि घटपदप्रवृत्तिनिमित्तस्य घटचैतन्यसमानसत्ताकत्वाभावेनावाच्यत्वप्रसङ्गात्। वाच्यतानिमित्तस्य तत्समानसत्ताकत्वस्यैव प्रयोजकतया धर्मिसमानसत्ताकत्वस्याप्रयोजकत्वाच्च ॥

नन्वस्त्येव ब्रह्मणो वाच्यत्वं किन्तु समानसत्ताकं न भवतीति ब्रह्मणो न वाच्यत्वमिति चेन्न; तथा सति व्योकर्तृत्वादेरपि[2] निषेधप्रसङ्गात्, धर्मिसमानसत्ताकत्वाभावाविशेषात्॥

किञ्च "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इत्यादिश्रुत्यापि ब्रह्मणो वाच्यत्वसिद्धिः । तत्रानुप्रवेशस्य नामरूपव्याकरणहेतुत्वोक्त्या नामवाच्यत्वलाभात्। अन्यथा तदुक्तिवैयर्थ्यात्। रूपव्याकरणहेतुत्वोक्तेस्तु प्रयोजनं वक्ष्यामः। किञ्च वचसां वाच्यमुत्तमं, तस्योदिति नाम, यन्नाम तन्नाम, ब्रह्मैव वाचः परमं व्योम, इत्यादिश्रुतिभिरपि ब्रह्मणो वाच्यत्वसिद्धिः ॥

नताः स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वती । इत्याद्युपबृंहणाच्च ॥

तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः ।
शब्दोऽयं नोपचारेण ह्यन्यत्र ह्युपचारतः ॥

इति पराशरवचनाच्च। तत्र हि पूज्यपदार्थोक्तिपरिभाषापदाभ्यां योगरूढिभ्यां ब्रह्मणि मुख्यत्वप्रतिपादनं स्पष्टम्। नच "यतो वाचो निवर्तन्ते" इति

१ कुण्डलितं-प्रमादादत्र पतितं । २ कारणत्वोपास्यत्वादेरपि ।

श्रुतिविरोधः; तस्या आनन्दापरिच्छेदतात्पर्यकत्वात् "सैषानन्दस्य मीमांसा भवति" इत्यानन्दस्यैव प्रक्रमात्। तत्र ब्रह्मानन्दातिशयनिरूपणार्थं हि मनुष्यानन्दः प्रक्रान्तः। तदनिरूपणे ततोऽतिशयनिरूपणायोगात्। तत्र हि ब्रह्मानन्दस्य एतावानेवोत्कर्षः उत इतोऽप्युत्कर्षः। यदीतोऽप्युत्कर्षोऽस्ति
5 तदा सोऽप्युपर्युपरि पुरुषकल्पनेन मीमांस्यतामित्याशङ्कायामेव हि "यतो वाचो निवर्तन्त" इति वाक्यं प्रवृत्तम्। यद्यस्य वाक्यस्य ब्रह्मणो वाङ्मनसागोचरतापरत्वं तदा "आनन्दं ब्रह्मणो विद्वान्, न बिभेती"ति वाक्यमसमञ्जसं स्यात्। तस्मादानन्दापरिच्छेदेन वाङ्मनसोर्निवृत्तिपरमिदं वाक्यम्। किञ्च "यतो वाचो निवर्तन्त" इति यच्छब्देन ब्रह्मणोऽभिधानात् वाच्यत्वम्।
10 नहि तत्रापि लक्षणया ब्रह्माभिधानं, सर्वनाम्नां प्रकृतेऽर्थे मुख्यत्वेन ब्रह्मणः प्रकृततया यच्छब्दमुख्यार्थत्वात्॥

ननु "आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्मे"ति वाक्ये ते यदन्तरेति नामरूपासङ्गित्वप्रतिपादनात् ब्रह्मणो न वाच्यत्वमिति चेन्न; ह वा इत्यस्य वाक्यस्यानुवादतया पुरोवादसद्विद्यासापेक्षत्वात्। तत्रानुप्र-
15 विश्य नामरूपे व्याकरवाणीत्यनुप्रवेशस्य नामरूपव्याकरणार्थतया नामवाच्यत्वोपपादकत्वात्। ननु तर्हि नामरूपसंसर्गकृतदोषः स्यादित्यत्राह—ते यदन्तरेति। कर्माभावेन तत्संसर्गकृतदोषासङ्गित्वेनैव वर्तत इत्यर्थः। नच यद्वाचानभ्युदितमिति वाग्विषयत्वनिषेधात् अवाच्यत्वमिति वाच्यम्; येन वागभ्युद्यते इति वाक्यशेषेण वाक्प्रेरकत्वस्य (वाक्प्रवर्तकत्वस्य) प्रतिपादनेन
20 तस्य वाक्प्रेर्यत्वनिषेधपरत्वात्॥

ननु यद्वाचानभ्युदितमिति वदधातोर्व्युत्पन्नस्योदितशब्दस्योक्त्यर्थकत्वेन वाचानुक्तमित्येवार्थः स्यादिति चेन्न; वाचा उच्यमानत्वनिषेधे लक्षणयोच्यमानत्वस्यापि निषेधप्रसङ्गात्। शक्त्या उच्यमानत्वनिषेधे परिच्छिन्नतयोच्यमानत्वनिषेधो वा किं न स्यात्। लक्षणयोच्यमानत्वनिषेधो वा
25 स्यात्, नतु शक्त्या उच्यमानत्वनिषेधः; नियामकाभावात्। वस्तुतो लक्षणया उच्यमानत्वनिषेध एव युक्तः। प्रमाणान्तराविरोधात्। वाच्यत्वनिषेधे हि वचसां वाच्यमुत्तममित्यादिश्रुतिविरोधात्॥ तदुक्तं महाचार्यैः—

ब्रह्मण्यशब्दवाच्ये स्याद्वचसां वाच्यमुत्तमम् ।
इत्यादिमानविद्वेषो वाच्यतारहितस्य चेत् ॥
स्वरूपस्यापि वाच्यत्वं तदन्तर्भावतो भवेत् ।
उपधानेन शून्यस्यावाच्यत्वे व्याहतिर्भवेत् ॥
वाच्यत्वं ब्रह्मणोऽवाच्येऽनुपधाने न लक्षणा । 5
समानसत्त्ववाच्यत्वाभावे तौल्यं घटादिना ॥
निमित्तोपहिते शक्तेः स्वरूपं चेन्न गोचरः ।
यतो वाचो निवर्तन्ते श्रुतिस्तु गुणगोचरा ॥
स्वरूपगोचरत्वेऽपि कथं शक्तिर्निवार्यते ।
अप्राप्येति निषेधस्तु कथं मृष्येत लक्षणाम् ॥ 10
निर्दिश्य वृत्तिमात्रस्य निषेधे व्याहतिस्ततः ।
शक्तेर्निषेधश्चेत्तर्हि लक्षणा वा निषिध्यताम् ॥
लक्षणाया निषेधेऽपि वाच्यत्वश्रुत्यनुग्रहः ।
तात्पर्यमपरिच्छेदे श्रुतेः प्रकरणात्ततः ॥
मनसा सममाम्नानान्निवृत्तिर्दुर्वचा गिरः । 15
इष्यते हि परा वृत्तिः परैरपि परात्मनि ॥

इति ॥

अयमर्थः—अवाच्यत्वे वचसामिति श्रुतिविरोधः। (१) उपहितस्य वाच्यत्वे स्वरूपस्याप्युपहितेऽन्तर्भावात् वाच्यत्वमनिवार्यम् । (२) उपहितस्य वाच्यत्वेऽपि उपधानशून्य(स्वरूप)स्यावाच्यत्वमिति चेन्न; उपहितस्यैवोपधा- 20 नशून्यत्वे व्याघातात् । (३) अपारमार्थिकतया तच्छून्यत्वे ब्रह्मणो वाच्यत्वं दुर्वारम्; उपहितस्य ब्रह्मणो वाच्यत्वात् । यद्युपहितान्तर्भावेन स्वरूपस्य वाच्यत्वेऽपि धर्मिसमानसत्ताकवाच्यत्वाभावमात्रेणावाच्यत्वं ब्रूषे तदा धर्मिसमानसत्ताकलक्ष्यत्वाभावेनालक्ष्यत्वं किमिति न ब्रूषे । लक्षणावैयर्थ्यं च; यदि प्रवृत्तिनिमित्तोपहितप्रतीतेः शक्त्यधीनत्वेऽपि स्वरूपमात्रप्रतीतेः श- 25

स्य वैकल्याभावात् स्वरूपलक्षणेति मन्यसे, तर्हि घटादेरप्यनुपहितस्वरूपस्य घटादिपदावाच्यत्वप्रसङ्गः । "यतो वाच" इति श्रुतिस्तु गुणापरिच्छेदविषया । स्वरूपगोचरत्वेऽपि वाङ्मात्रस्य निवृत्त्या कथं शक्तिमात्रनिवृत्तिः । लक्षणाया अपि अप्राप्त्येति संबन्धनिषेधविषयत्वात् शक्तिमात्रनिषेधे लक्ष-
5 णामात्रनिषेध (एव) स्यात् । तस्य च प्रमाणान्तरानुगुणत्वात् । तस्मात् यतो वाच इति श्रुतेरपरिच्छेद एव तात्पर्यम्; प्रकरणानुगुण्यात् । वाङ्निवृत्तिवन्मनसोऽपि निवृत्त्यभिधानात् मनोवृत्तिविषयत्वमपि ब्रह्मणो न स्यात् । मनोनिवृत्तेः परिच्छेदविषयत्वे वाङ्निवृत्तेरपि तथात्वं स्यात् । आनन्दं ब्रह्मणो विद्वानित्युत्तरवाक्यविरोधात् । वाङ्मनसयोरपि निवृत्तौ आनन्दस्व-
10 रूपब्रह्मवेदनासंभवात् । अतः सिद्धं ब्रह्मणो वाच्यत्वमिति ॥

इति अवाच्यत्वभङ्गः अष्टमः ॥

---

श्रवणस्याविधेयत्वं नच शाब्दापरोक्षता ।
विहिताध्ययनस्यापि फलमक्षरधारणम् ॥
15 साधनानां चतुष्कस्य वृत्तत्वाभाव इत्यपि ।
मीमांसायुगलस्यैक्यं जिज्ञास्यत्वं न युक्तिमत् ॥
निर्विशेषस्य वेद्यत्वं [ब्रह्मणोऽस्तीति सर्वथा ।
अन्यदेवानुपास्यत्वं]वाच्यत्वं परमात्मनः ॥
इत्येतानि प्रमेयाणि सम्यगालोच्य तत्त्वतः ।
20 निरूपितानि न्यायैस्तु संपश्यन्तु मनीषिणः ॥

इति श्रीमद्वेदान्तविजयमङ्गलदीपिकायां
गुरुविधिविजयोपन्यासः समाप्तः ॥

---

श्रीः

श्रीमते रामानुजाय नमः ।

## अथ ब्रह्मविद्याविजयोपन्यासो द्वितीयः

## तत्रायमाद्यो देवतान्तरस्य परविद्यावेद्यत्वभङ्गः प्रारभ्यते ।

5

परविद्यादिषु ब्रह्मविद्यासु सकलासु च ।
पुरुषादिपदश्रुत्या विष्णुरेवाभिधीयते ॥
नोच्यते स्वपदाभावादन्यदेवः कथञ्चन ।
पुरुषादिपदानां च विष्णावेव प्रयोगतः ॥
तत्रादौ परविद्यायां भगवत्परतोच्यते । 10
पुरुषामृतशब्दादिरूढ्या लिङ्गबलादपि ॥

परविद्या तावद्भगवत्परा; तपो ब्रह्म परामृतं, ब्रह्मैवेदममृतं पुरस्तात्, यत्रामृतः स पुरुषोह्यव्ययात्मेति पुरुषशब्दश्रुतेः अमृतशब्दस्य श्रुतेस्तदभ्यासाच्च । पुरुषशब्दस्य भगवत्परत्वं देवतान्तरोपास्यत्वभङ्गे प्रतिपादितम् ॥

किञ्च "उपासते पुरुषं ये ह्यकामाः, पुरुष एवेदं सर्व" मित्यादौ निरु- 15 पपदस्य पुरुषशब्दस्य भगवति रूढतया तत्समानार्थ(स्य)कात्रत्यपुरुषशब्दस्यापि भगवति रूढतया तत्परत्वमवर्जनीयम् । अमृतशब्दोऽपि भगवत्स्येवासाधारणः; "नित्यं निरञ्जनं निर्विकल्पं(कं) परं ज्योतिरमृताख्यं परं ब्रह्म(स्वरूपं)ध्यात्वा तस्मिन्नेव लयमापे"ति नारसिंहपुराणे नारायणमुपक्रम्य तस्यामृताख्यत्वनिर्वचनात्, ब्रह्माण्डे— 20

विष्ण्वाख्यममृतं साक्षाद्विज्ञाय परिमुच्यते ।

इत्यत्र विष्णोः साक्षादमृतमिति अमृतशब्दमुख्यार्थत्वप्रतीतेश्च । साक्षात्पदस्य मुख्यार्थव्यवधानाभावपरत्वात् । लाक्षणिकत्वे मुख्यार्थव्यवधानं हि गङ्गापदादौ दृश्यते ॥

एवं मैत्रायणीयश्रुतौ "आनन्दतृप्तमचलममृतमच्युतं विष्णुसंज्ञं सर्वाधारं 25 धामे"ति विष्णावमृतशब्दः प्रयुक्तः । अम्भस्येत्यनुवाके "तदेव शुक्रममृतं तद्ब्रह्मे"ति तत्रामृतशब्दः प्रयुक्तः ॥

एवं सुबालोपनिषद्यपि अजरममृतमभयमशोकमनन्त"मिति" "सर्वेश्वर-मचिन्त्यशरीरं निहितं गुहायाममृत"मिति च तत्र प्रयुक्तम् ॥

एवं वाराहे ब्रह्मपारस्तोत्रे—

क्षराक्षरं क्षीरसमुद्रनिद्रं नारायणं नौम्यमृतं परेशम् ।

5 इति नारायणे प्रयुक्तः । एवं चामृतशब्दाभ्यासादपि भगवत्परत्वसिद्धिः (रिति) परविद्यायाः ।

एवमेक ऋषिं-(एकमेकर्षि) श्रद्धयन्त इत्येकर्षिशब्दादपि भगवत्परत्वसिद्धिः । भागवते सचेतसेति एतदनुवादवाक्ये एकर्षिशब्दोक्तार्थं (भगवच्छब्देनानूद्य) भगवच्छब्देन चेतसस्तत्सम्बन्धित्वाभिधानात् भाग-10 वतशब्दस्य भगवत्परत्वपरतया शङ्करादिभिर्व्याख्यातत्वात् भगवच्छब्द-स्थानाभिषिक्तैकर्षिशब्दस्य भगवत्परत्वौचित्याच्च । किञ्च "य इमा विश्वा भुवनानि जुह्व (सर्प)दृषिर्होता निषसादापिता नः' इत्यनुवाके ऋषिर्होतेति ऋषित्वस्य, तत्रैव "यो देवानां नामधा देव एक" इत्येकत्वस्य च नारायण एवाभिधानात्, अत्रत्यैकर्षिशब्दोऽपि नारायण पर एव ॥

15 ननु स्यादेवं यदि इमा विश्वा भुवनानीत्यनुवाकस्य नारायणपरत्वं, तदेव (पाप्मभ्य) उदि(कु)त इति चेत्, अजस्य नाभावध्येकमर्पितं यस्मिन्निदं विश्वं भुवनमधिश्रितमिति श्रुतिप्रतिपादितात् विश्वभुवनस्रष्टृकमलासनप्रसूतिना-भिपद्मत्वलिङ्गादिति ब्रूमः ॥

अजस्य नाभावित्यादिश्रुतेरुक्तार्थपरत्वं—

20 अजस्य नाभावध्येकं यस्मिन्विश्वं समर्पितम् ।
पुरुषं पुष्कराक्षस्य तस्मै विद्यात्मने नमः ॥

इति शान्तिपर्वगतस्तवराजाध्यायगतोपबृंहणवचनेन

तस्य नाभ्यां पुष्करं संप्रसूतं यत्रोत्पन्नः स्वयमेवामितौजाः ।

इत्यानुशासनिकस्थवासुदेवमाहात्म्याध्यायगतोपबृंहणवचनेन चावग-25 म्यते ॥ ननु वाजसनेयके ईशावास्यमिदं सर्वमिति सर्वान्तःप्रवेष्टृत्वेन

उपक्रान्तस्य ईशशब्दोक्तरुद्रस्योपसंहारे पूषन्नेकर्ष इति एकर्षिशब्देनाभिधानात् रुद्र एवैकर्षिः न नारायण इति चेत्,

अत्र ब्रूमः—ईशावास्यमिदं सर्वमित्यस्य ईशेन रुद्रेण आवास्यमिति नार्थः; तथासति तृतीयासमासार्थकरणत्वे लक्षणाप्रसङ्गात् विभक्तिलोपकल्पनाप्रसङ्गाच्च । किन्तु ईष्ट इतीट् तेन ईशा सर्वनियन्त्रा पुरुषोत्तमेनावास्यं 5 व्याप्यमित्यर्थः । तथाचोपक्रमे रुद्रस्य प्रसङ्गाभावात् उपसंहारस्थ एकर्षिशब्दो न रुद्रपरः, किन्तु नारायणपर एव । अत एव शङ्करेणापि ईशावास्यमित्येतदेवमेव व्याख्यातम् । एवं च "तदेजति त"न्नैजति तद्दूरे तद्वदन्तिके तदन्तरस्य तदु सर्वस्यास्य बाह्यतः" इत्याद्युत्तरवाक्यगततच्छब्दैः प्राधान्येनोक्तसर्वनियन्तृपरामर्शोऽपि स्वरसः । अन्यथा समासान्तर्गते- 10 (नेशान)शब्देनाप्राधान्येनोक्तरुद्रपरामर्शोनाञ्जस्यात् ॥

किञ्च अन्यत्र भगवत्परतया निर्णीतैकर्षिशब्दानुरोधेन अनिर्णीतस्येशावास्यमित्येतस्य भगवत्परत्वमेव युक्तम् । अत्रापि पूषन्शब्दसामानाधिकरण्यादयमेकर्षिशब्दो भगवत्पर एव; पूषन्शब्दस्यादित्यान्तर्यामिपरत्वात् । तदन्तर्यामित्वं च भगवत एवेत्यन्तरादित्यविद्यावेद्यत्वनिरूपणे 15 समर्थयिष्यमाणत्वात् ॥

एवं "तेनेदं पूर्णं पुरुषेण सर्वं" "पुरुष एवेदं सर्व"मिति महोपनिषत्प्रत्यभिज्ञानाच्च परविद्याया भगवत्परत्वसिद्धिः । तथा भागवतेन चेतसा इति भगवत्प्रवणचेतोवेद्यत्वलिङ्गादपि अस्या भगवत्परत्वसिद्धिः । विद्यावेद्यदेवताप्रावण्यस्यैव विद्यानिष्पादकत्वात् । जगत्कारणत्वलिङ्गादपि अस्या भग- 20 वत्परत्वसिद्धिः । जगत्कारणताप्रतिपादकमहोपनिषदादीनां भगवत्परत्वस्योत्तरत्र समर्थयिष्यमाणत्वात् । किञ्च अक्षरपुरुषब्रह्मशब्दसामानाधिकरण्यादप्यस्या भगवत्परत्वम् । अक्षरादिशब्दाश्च नारायणपरा एवेति "येनाक्षरं पुरुषं वेदे"ति मुण्डकोपनिषदादिषु स्पष्टम् । भगवतोऽन्यत्राक्षरपुरुषब्रह्मशब्दप्रयोगाभावाच्च । अत एव हरिवंशे पौष्करप्रादुर्भावे वेदान्तेषु अक्षर- 25 ब्रह्मशब्दाभ्यां नारायण एवाभिधीयत इत्यभिप्रायेणोक्तम् ॥

प्रच्छाद्य सलिलेनोर्वीं हंसो नारायणायते ।
महतो रजसो मध्ये महार्णवसमस्य वै ।
विरजस्को महाबाहुरक्षरं ब्रह्म यं विदुः ॥
इति ॥

5 तस्मात्परविद्या भगवत्परेति सिद्धम् ॥

इति श्रीवेदान्तविजयमङ्गलदीपिकायां देवतान्तरस्य परविद्यावेद्यत्वभङ्गः प्रथमः ॥

---

श्रीः

## 10 देवतान्तरस्यान्तरादित्यविद्यावेद्यत्वभङ्गः ॥

**अन्तरादित्यविद्यायां विष्णुरेवाभिधीयते ।**
**तस्यापहतपाप्मत्वपद्माक्षत्वादियोगतः ।**
**पुरुषश्रुतिबोध्यत्वात् तथाक्षिद्वययोगतः ।**
**15 एवं सुवर्णवर्णत्वात्पापनाशकभावतः ॥**
**परविद्यान्तरादित्यविद्यापि भगवत्परा ।**

तथाहि—छान्दोग्ये अन्तरादित्यविद्या श्रूयते–"य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः 20 पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद" इति । अत्र पुरुष श्रुतेः भगवदसाधारणपुण्डरीकाक्षत्वाक्षिद्वित्वापहतपाप्मत्वसर्वपापविनाशकत्वोपास्यत्वधर्मप्रतीतेश्च भगवत्परत्वसिद्धिः । तथाहि पुरुषशब्दस्य भगवदसाधारणत्वं बहुशः प्रतिपादितम् । पुण्डरीकाक्षत्वस्य भगवदसाधारणत्वं स्पष्टमेव । अक्षिद्वयमपि नारायणस्यैव । रुद्रस्य त्र्यक्षत्वेन यथा कप्यासं पुण्ड- 25 रीकमेवमक्षिणी इति अक्षिद्वयानुवादेन पुण्डरीकसादृश्यविधानासंभवात् ॥

ननु त्र्यक्षत्वेऽपि रुद्रस्य एकस्याक्ष्णो मुकुलितत्वेनाक्षिद्वयस्यैव रविकर-विकसितपुण्डरीकसादृश्यमिति तत्र तत्सादृश्यविधानमविरुद्धमिति चेत्तथा सति प्रथममक्षिणि पुण्डरीकसादृश्यं विधाय ततः पुण्डरीकसदृशाक्षिणी द्वे एवेति द्वित्वस्य विधाने विधेयभेदेन वाक्यभेदप्रसङ्गात् विरम्यव्यापार-प्रसङ्गाच्च । आवृत्तिकल्पनायां स एव दोषः । अक्ष्यनुवादेन सादृश्यद्वित्वो- 5 भयविधाने बाधापत्तिः, रुद्राक्षिणि द्वित्वाभावात् । "आप्रणखात् सर्व एव सुवर्ण" इति सुवर्णवर्णत्वमपि भगवत एवासाधारणम् । "हिरण्यज्योतिः सलिलमध्ये"इत्यादि श्रुतिप्रत्यभिज्ञानात् । तस्याश्च भगवत्परत्वं तत्रैव भगव-दसाधारणसर्वान्तर्यामित्वसर्वनियन्तृत्वादिधर्मप्रतिपादनेन सुव्यक्तम् । "एष हि सर्वेभ्यः पाप्मभ्य उदित" इत्यनेनादित्यान्तर्वर्तिनः अपहतपाप्मत्वमु- 10 क्तम् । तच्च नारायणस्यैव । "एष हि सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायण" इति श्रुत्या तद्धर्मत्वेन प्रतिपादनात् । अन-पहतपाप्मा वाऽहमस्मि नाम मे धेहीति रुद्रस्यानपहतपाप्मत्वश्रवणाच्च ॥

किञ्चास्यामेव विद्यायां पूर्वत्र "अथ यदेवादित्यस्य शुक्लं भाः" अथ यदेवै-तदादित्यस्य शुक्लं भाः सैवर्क्" "अथ यन्नीलं परः कृष्णः तदमस्त- 15 त्साम" इत्यादित्यान्तर्वर्ती भगवानेवेति स्पष्टमवगम्यते । अथ यन्नील-मित्यत्र नीलशब्देनोक्तस्यादित्यान्तर्वर्तिनः कृष्णशब्देनोक्तेः । अन्यथा कृष्णपदवैयर्थ्यात्, नीलपदेनैव कृष्णद्रव्याभिधानात् । नीलपदोक्तस्य भग-वतः कृष्णत्वोपपादनार्थत्वे हि कृष्णपदस्य सप्रयोजनत्वम् । परं कृष्णमिति पाठे लिङ्गव्यत्ययश्छान्दसः । इयं च विद्या योगार्णवे भगवत्परत्वेनो- 20 पबृंहिता—

आदित्यमण्डले तत्र पश्येद्विष्णुं परात्परम् ।
सर्वाधारं वासुदेवमीशानं शिवमच्युतम् ॥
आत्मानं सर्वजगतां पुरुषं हेमरूपिणम् ।
हिरण्यश्मश्रुमीशं च हिरण्मयनखं हरिम् ॥ 25
कप्यासपद्मवन्नेत्रं सृष्टिस्थित्यन्तकारणम् ।
पद्मासनस्थितं सौम्यं प्रबुद्धकमलेक्षणम् ॥

ईश्वरं सर्वभूतानां सर्वलोकाभयप्रदम् ।
विजानन्तं सदा सर्वं धारणाद्धर्ममुत्तमम् ।
भासयन्तं जगत्सर्वं भासयन्तं रविं सदा ।
त्रयाणां परमं नित्यं भास्करं भास्करोपरि ॥
5 एवंभूतं परं ज्योतिर्दृष्ट्वा लोकैकसाक्षिणम् ।
बिन्दुनादात्मकं देवमविकारमवस्थितम् ।
अकारप्रतिपाद्यं च भिन्नवद्बहुधा स्थितम् ॥
ध्यानेनानेन सौरेण मुक्तिं यास्यन्ति योगिनः ॥ इति ॥

किञ्च तैत्तिरीयमहोपनिषदि च भगवत एव आदित्यान्तर्वर्तित्वमवग-
10 म्यते "य एषोऽन्तरादित्ये हिरण्मयः पुरुष" इति । अस्याश्च भगवत्परत्वम्, पूर्वस्मिन् नारायणानुवाके तस्य प्रकृतत्वात् ॥

किञ्च आनन्दवल्ल्यां "स यश्चायं पुरुषे यश्चासावादित्ये स एक" इति यच्छब्दद्वयेन प्रसिद्धवन्निर्दिष्टयोः पुरुषान्तर्वर्त्यादित्यान्तर्वर्तिनोरभेदः श्रूयते। तत्प्रसिद्धिश्च नारायणानुवाकतदुत्तरानुवाकयोः । तयोश्च पुरुषान्तर्वर्तिना-
15 रायणपरत्वं स्पष्टमेव । अतस्तस्यैवादित्यान्तर्वर्त्यभेदाभिधानं युक्तमिति स यश्चायं पुरुष इत्यादि वाक्यस्य नारायणपरत्वं सिद्धम् ।

तत्र—

ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ।
ऊर्ध्वरेतं विरूपाक्षम् ।

20 इति मन्त्रस्य विरूपाक्षपदसमभिव्याहारेण रुद्रपरत्वं न शङ्कनीयम् । अम्भस्यनुवाकस्थेन "तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीना"मित्यनेन वाक्येन भगवत्परतया व्याख्यानात् कृष्णपिङ्गलपदसमभिव्याहारेण नारायणपरत्वस्यैव युक्तत्वाच्च । कृष्णपिङ्गलस्य च नारायणत्वं—

तन्मध्ये दहराकाशं तन्मध्ये सूर्यमण्डलम् ।
25 तन्मध्ये परमानन्दं वपुषा कृष्णपिङ्गलम् ॥
नारायणं जगन्नाथं वासुदेवमनामयम् ।

इति योगार्णववचनादवगम्यते । विश्वरूपशब्दस्य भगवति रूढत्वाच्च

ऋतं सत्यमिति मन्त्रस्य नारायणपरत्वसिद्धिः ॥ नच विरूपाक्षत्वस्य रुद्रा-
साधारणत्वात् तत्परत्वमस्य मन्त्रस्येति वाच्यम्; वाराहे—

तस्य चिन्तयतो नेत्रात्तेजः समभवन्महत् ।
दक्षिणं वह्निसङ्काशं वामं तुहिनसन्निभम् ॥

इति शीतोष्णत्वेन वैरूप्याभिधानात् भगवतोपि विरूपाक्षत्वाविरोधात् । 5
एवं चास्य मन्त्रस्य भगवत्परत्वे निर्णीते सति एतदनुरोधेन तापनीयस्थस्य

"ऋतं सत्यं परं ब्रह्म पुरुषं (नृकेसरिणं विग्रहम्) कृष्णपिङ्गलम् ।
ऊर्ध्वरेतं विरूपाक्षं शङ्करं नीललोहितम् ।
उमापतिः पशुपतिः पिनाकी ह्यमितद्युतिः ।
ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम् ॥ 10

ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिः" इति मन्त्रस्य भगवत्परत्वमेव वर्णनीयम् ।
तत्र उमापतिरित्यत्रोमाशब्देन जगत्सृष्टिहेतुभूतबुद्ध्यात्मकलक्ष्मीरभिधीयते ।
वाराहे—

पूर्वं नारायणस्त्वेको नासीत्किञ्चिद्धरेः परम् ।

इत्युपक्रम्य "लक्ष्मीर्बुद्ध्यात्मिका बभौ" इति प्रकृतायां लक्ष्म्यात्मिकायां बुद्धौ,— 15

उमेति संज्ञया सा तु तथादित्ये उपस्थिता ।
ओमित्येकाक्षरीभूत्वा ससृजे सा जगत्युमा ॥

इत्युमासंज्ञकत्वाभिधानात्, अत्र नृकेसरिविग्रहमिति नृसिंहत्वोक्त्यास्य
निर्णीते नारायणपरत्वे शङ्करादिशब्दा अपि तत्परत्वेन व्याख्येयाः । किंच
सुवर्णघर्मानुवाकोऽपि भगवत एवादित्यान्तर्वर्तित्वे प्रमाणम् । श्रीभागवते 20
एकादशस्कन्धे सुवर्णघर्मानुवाकेन महापुरुषविद्ययेति भगवदर्चनायां विनि-

---

१ पिङ्गलत्वमपि लक्ष्मीभूषाम्बरादिभिः भगवत एव उपपन्नम् । विरूपाक्षत्वं च पूर्ववन्नि-
र्व्यूढम् । ऊर्ध्वरेतश्शब्दोऽपि रेतोभ्यो विकारेभ्यः ऊर्ध्ववर्ती **विश्वविकारोत्तीर्णम् ।**
सकारलोपः च्छान्दसः । इति भट्टभास्करेण व्याख्यानात् भगवत्येवोपपन्नः । रेतश्शब्दस्य
ऐतरेयके विकारसृष्टिप्रकरणे "अथातो रेतस्सृष्टिः" इति विकारे प्रयोगात् विकारवाचकत्वमु- 25
पपन्नम् । विरूपाक्षमिति नपुंसकलिङ्गं अस्य मन्त्रस्य भगवत्परत्वमवगमयति । रुद्ररूपत्वे
पुंलिङ्गताप्रसंगात् । नृकेसरि ।

योगाभिधानेन तस्य भगवत्परत्वात्, समुद्रेऽन्तः कवयो विचक्षत इति समुद्रशायित्वादिभगवल्लिङ्गश्रवणाच्च भगवत्परत्वम् । तस्य आदित्यमण्डलान्तर्वर्तिपुरुषपरत्वं चान्तरादित्ये मनसा चरन्तं सप्त युञ्जन्ति रथमेकचक्रमिति अजस्रं ज्योतिर्नभसा तत्सर्पदेतीति तत्रत्यवाक्येन आदित्यान्तर्वर्तिपरम-
5 पुरुषाभिधानात् । योगयाज्ञवल्क्यवचनेनापि आदित्यमण्डलान्तर्वर्तिनो नारायणत्वं स्पष्टमवगम्यते—तथाहि—

ईश्वरं पुरुषाख्यं तु सत्यधर्माणमच्युतम् ।
भर्गाख्यं विष्णुसंज्ञं तु ज्ञात्वाऽमृतमुपाश्नुते ॥
हृद्व्योम्नि तपति ह्येष बाह्ये सूर्यस्य चान्तरे ।
10 अग्नावधूमके ह्येष ज्योतिश्चित्रतरो ह्ययम् ॥

इति वाक्ये विष्णोरेव सूर्यस्य चान्तर इति सूर्यमण्डलान्तर्वर्तित्वं प्रतिपाद्यते । सावित्रीव्याख्यानावसरेऽपि—

सवितुस्तद्वरेण्यं तु सत्यधर्माणमीश्वरम् ।
हिरण्यवर्णं पुरुषं व्योम तद्विष्णुसंज्ञितम् ॥

15 इति विष्णोरेव सवितृमण्डलान्तर्वर्तित्वं स्पष्टमभिधीयते । यमस्मृतौ च—"रविमध्ये स्थितः" इत्युपक्रम्य—

"एष वै पुरुषो विष्णुः व्यक्ताव्यक्तस्सनातनः"

इत्यभिधानात् । शङ्खस्मृतावपि तथैवाभिधानात् । दत्तात्रेयस्मृतौ च दक्षिणाविधौ—

20 योऽसौ विष्ण्वाख्य आदित्ये पुरुषोऽन्तर्व्यवस्थितः ।
सोऽहं नारायणो देवः पुरुषो लोकपावनः ॥

इत्यभिधानाच्च आदित्यान्तर्वर्ती नारायण एव ।

किंच—गायत्री चान्तर्वर्तित्वे भगवतः प्रमाणम् । तस्या आदित्यमण्डलान्तर्वर्तिभगवत्परतया मैत्रायणीयोपनिषदि व्याख्याततत्वात् । एवं हि
25 तत्र "हिरण्मयेन पात्रेण" इति मन्त्रेण आदित्यान्तर्वर्तिविष्णुदर्शनप्रतिबन्धकनिवृत्तिप्रार्थनानन्तरं श्रूयते—"यदादित्यस्य मध्येऽक्षिण्यग्नौ चैतद्ब्रह्मैतदमृतमेतद्भर्गमेतत्सत्यधर्म" इति "यदादित्यस्य मध्ये उदित्वा मयूखे भगवत

एतत्सवितुर्वरेण्यं सत्यधर्म एतत्'' इति । अनया श्रुत्या गायत्रीप्रतिपाद्यं वरेण्यं भर्गो विष्ण्वाख्यं आदित्यमण्डलान्तर्वर्तीति प्रतिपादितम् ॥

तलवकारश्रुतावपि कः सविता का सावित्रीति खण्डे यज्ञो वै प्रचोदयितेति प्रचोदयिता यज्ञ इति व्याख्यातम् । यज्ञशब्दश्च विष्णुवाची । यज्ञो वै विष्णुरित्यादिश्रुतेः, 5

"पुरुषो यज्ञ इत्येतद्यत्परं परिकीर्तितम् ।"

इति मात्स्योक्तेः, यज्ञायाचरतः कर्मेति गीताप्रयोगाच्च । ननु यज्ञशब्दः कर्मवाची; कर्मणोऽचेतनस्य आदित्यान्तर्वर्तित्वानुपपत्तेः ॥

योगयाज्ञवल्क्येऽपि गायत्री भगवत्परतया व्याख्याता—

ईश्वरं पुरुषाख्यं तु सत्यधर्माणमच्युतम् । 10
भर्गाख्यं विष्णुसंज्ञं तु ज्ञात्वामृतमुपाश्नुते ॥ इति ।
सवितुस्तद्वरेण्यं तु सत्यधर्माणमीश्वरम् ।
हिरण्यवर्णं पुरुषं व्योम तद्विष्णुसंज्ञितम् ॥

इति । सनकस्मृतावपि आदित्यमण्डलान्तर्वर्ती नारायण एव गायत्रीप्रतिपाद्य इति प्रतिपादितम् । चरकस्मृतौ च— 15

रश्मिज्वालासहस्राढ्यं मण्डलं विपुलं रवेः ।
तदन्तः शीतलाभं तु सौम्यं सोमस्य मण्डलम् ॥
स्फुरत्स्फुलिङ्गमनलरश्मिज्वालासहस्रकम् ।
तस्य मध्ये सुखासीनं तप्तहाटकसन्निभम् ॥
चतुरङ्गुलमात्रं तु शुकपत्रनिभाम्बरम् ।
रक्तनेत्राम्बरं रक्तपाणिपादनखांशुकम् ।
शङ्खचक्रगदापाणिं श्रीवत्साङ्कितवक्षसम् ।
एवं ध्यात्वा जपेन्मन्त्रं सावित्रीं नियतः शुचिः ॥

इति । अत्रादित्यमण्डलान्तर्वर्तिभगवद्ध्यानस्य गायत्रीजपहेतुत्वप्रतिपादनेन गायत्र्यास्तत्परत्वसिद्धिः । मन्त्रप्रतिपाद्यदेवताध्यानस्यैव मन्त्रजपे विनियुक्तत्वात् । एवं संवर्तस्मृतावपि— 25

आदित्यमण्डलान्तस्थं रुक्माभं पुरुषं परम् ।
ध्यायन् जपेत्तदित्येव निष्कामो मुच्यते द्विजः ॥

इति भगवद्ध्यानस्य गायत्रीजपे विनियोग उक्तः ।

एवमाग्नेयपुराणे नवमे अध्याये—आदित्यमण्डलान्तर्वर्तिनो भगवत एव गायत्रीप्रतिपाद्यत्वं स्पष्टमवगम्यते—

सन्ध्यासु संस्थितः सूर्यः सूर्यमध्ये स्थितः शशी ।
5 चन्द्रमध्ये हुताशस्तु सर्वतेजोमयो हरिः ।
अङ्गुष्ठमात्रः पुरुषः सूर्यमध्ये मयोदितः ।
शङ्करेण तथा दृश्यस्तत्प्रकाशोऽतितेजसा ।
स विष्णुर्भुवनाधारो यस्येदं सकलं जगत् ।
वरेण्यं च तत्सवितुर्भर्गो यो भगवान् गिराम् ।
10 सृष्ट्यर्थं भगवान्विष्णुः सविता स तु कीर्तितः ।
सर्वलोकप्रसवनात्सावित्री तेन कीर्त्यते ।
तद्देवत्या यतस्तस्मात्सावित्री नाम कीर्त्यते ॥ इति ।

तदयं गायत्र्यर्थः—नः धियः धर्मादिगोचराः यः प्रचोदयात् तस्य सवितुर्देवस्य विष्णोस्तत् प्रसिद्धं वरेण्यं वरणीयं भर्गस्तेजोमयं रूपं धीम-
15 हीति । सवितृशब्दस्य विष्णुपरत्वं "सविता रविलोचन" इति सहस्रनामसु पाठात् आग्नेयपुराणवचनाच्चावगम्यते । यच्छब्दस्य तच्छब्दसापेक्षत्वात् तस्येत्यध्याहारो युक्तः, अत्रत्यतच्छब्दस्य नपुंसकलिङ्गतया प्रतिनिर्देशानु-पपत्तेः ॥ अत एवेयं गायत्री उक्तार्थपरतया अगस्त्येना(प्येवम्)पि व्याख्याता—

20 यो देवस्सवितास्माकं धियो धर्मादिगोचराः ।
प्रेरयेत्तस्य यद्भर्गस्तद्वरेण्यमुपास्महे । इति ॥

यद्वा सवितुर्देवस्य तत्प्रसिद्धं वरेण्यं भर्गः धीमहि, यः सविता नः धियः प्रचोदयादित्यनध्याहारेण योजना । उत्तरवाक्यगतयच्छब्दस्य तच्छ-ब्दनिरपेक्षत्वात् ॥

25 ननु सवितुर्वरेण्यमित्येवान्वयः, अव्यवधानात्, नतु सवितुर्भर्ग इति ।

---

१ (ग)कोशे धीशब्दवाच्यो ब्रह्मा च प्रचोदयति सर्वदा (इत्यर्धमधिकमस्ति)

सवितुरिति कर्तरि षष्ठी, सवित्रा वरणीयमित्यर्थः । भर्गशब्दश्चाकारान्तः रुद्रवाची । द्वितीयार्थे प्रथमा विभक्तिव्यत्ययः छान्दसः । तदिति नाम भर्गविशेषणम्। "तदिति वा एतस्य नाम भवती"ति ऐतरेयश्रुतेः। तथाच देवस्य सवितुर्वरेण्यं तेजःप्रदत्वेन समाश्रयणीयं तन्नामानं भर्गं धीमहि नः धियो यो भर्गः प्रचोदयादित्यर्थः । उत्तरवाक्यगतयच्छब्दस्य तच्छब्दान- 5 पेक्षत्वादिति चेत्, न; विशेष्यवाचिप्रधानभूतभर्गशब्दान्वयात् विशेषणवाचिना अप्रधानेन वरेण्यशब्देनान्वये अस्वारस्यात् विशेषणवाचिपदस्य व्यवधायकत्वाभावाच्च ॥

किञ्च सवितुरिति देवविशेषणम्; देवविशेषवाचित्वेन व्यावर्तकत्वात्, नतु देवस्येति सवितृविशेषणम् ; सामान्यवाचितया अव्यावर्तक- 10 त्वात् । तथाच सवितुर्देवस्य वरेण्यमित्यन्वयो वाच्यः, ततोऽपि देवस्य भर्ग इत्यन्वय एव युक्तः; अव्यवधानात् । अत एव यो देवः सवितासाकमित्यगस्त्यवचने देवस्यैव विशेष्यतया निर्देशः कृतः नतु सवितुः । नचैवं "तदक्षरं तत्सवितुर्वरेण्यम्" इति श्रुत्यनुसारात् तथान्वय इति वाच्यम् ; तादृशश्रुतेः प्रकृतशिवपरत्वे वरेण्यशब्दस्य गायत्रीस्थभर्गपरत्वे 15 वा नपुंसकलिङ्गत्वानुपपत्तेः । तथाच सकारान्तभर्गशब्देनैव वरेण्यपदान्वयो वाच्य इति घट्टकुट्यां प्रभातम् ॥

अस्तु वा सवितुर्वरेण्यमित्यन्वयः, अव्यवधानात् ; अथापि भगवत्परत्वे नानुपपत्तिः । सवितुर्वरेण्यं तत् प्रसिद्धं देवस्य विष्णोर्भर्गः धीमहि । यो देवः धियो नः प्रचोदयादित्यन्वयः । सवितुरित्यस्य वरेण्यपदेनेव देव- 20 स्येत्यस्य भर्गसा अव्यवधानात् । तथाच सकारान्तत्वमवर्जनीयम् । अत एव मैत्रावरुणीयश्रुतौ "य आदित्यस्य मध्ये उदित्वा मयूखे भगवत एतत्सवितुर्वरेण्यमेतदमृतमेतद्भर्ग" इति गायत्रीस्थभर्गश्शब्दः सकारान्ततया नपुंसकलिङ्गतया च व्याख्यातः ॥

एतेन देवस्य सवितुर्वरेण्यं धीमहि यो भर्गो देवः नः धियः प्रचोद- 25 यादिति भर्गशब्दस्याकारान्तत्वेन रुद्रपरत्वेन व्याख्यानं निरस्तम् । उक्तप्रमाणेन सकारान्तत्वव्यवस्थापनात् ॥

किञ्च वरेण्यशब्दस्य विशेषणवाचितया विशेष्यवाचिपदाकाङ्क्षायां भर्गःपदमेव वाच्यमिति सकारान्तत्वमवर्जनीयमिति कथं रुद्रपरत्वम् । तेजः-पदाध्याहारे तु स एव दोषः ॥

वस्तुतस्तु—सवितुर्वरेण्यं सवित्रा वरणीयं सेव्यम्, सेव्यत्वं च तदन्त-5 र्वर्तितया । अन्यथा विशिष्योक्त्ययोगात् । ततश्च सवितृमण्डलान्तर्वर्ती-त्यर्थः । इदं च भर्गसो विशेषणम् । एतादृशं देवस्य भर्गो धीमहि । यो देवः नः धियः प्रचोदयात् । तथा चायमर्थः—यो देवः नः धियः प्रचो-दयात्—धर्मादिगोचरसम्यग्ज्ञानप्रदो भवेत् तस्य देवस्य सूर्यमण्डलान्तर्व-र्तितेजोरूपं चिन्तयाम इति ॥

10 एवं भगवत एव गायत्रीप्रतिपाद्यत्वमभिप्रेत्य अस्मदाचार्यैरनुगृहीतम्—

गायत्र्यां चिन्त्यमानायां स मे गोपकिशोरकः ।
आत्मानं दर्शयामास दर्शयन्निव वेद्यताम् ॥ इति ।

एवंस्थिते भगवत्परत्वे तलवकारश्रुत्यादौ भर्गमयभर्गाख्यादिव्यपदेशः सकारं विना एकदेशाभिप्रायेणेति द्रष्टव्यमिति सर्वं निरवद्यम् । श्रीवि-15 ष्णुपुराणादावपि भगवत एव सूर्यमण्डलान्तर्वर्तित्वं स्पष्टमवगम्यते ॥

तथा हि श्रीविष्णुपुराणे—

वैष्णवोंऽशः परः सूर्ये योऽन्तर्ज्योतिरवस्थितः ।
अभिधायकमोङ्कारं तस्य तत्प्रेरकं परम् ॥

सनकस्मृतौ च;—

20 आदित्यमण्डले ध्यायेत्परमानन्दमव्ययम् ।
विष्णुं चतुर्भुजं रक्तपङ्कजासनमध्यगम् ॥

नारसिंहपुराणे—

अर्चन्ति मुनयो नित्यं जलेन रविमण्डले ।
आदित्यमण्डले नित्यं देवदेवमनामयम् ॥
25 शङ्खचक्रगदापाणिं ध्यात्वा सत्यमुपासते ।

ध्येयः सदासवितृमण्डलमध्यवर्ती नारायणस्सरसिजासनसन्निविष्ट इत्यादि ॥

आश्वमेधिके च—

ऊर्ध्वबाहुस्ततो भूत्वा सूक्ष्ममीक्षेत्समाहितः ।
तन्मण्डलस्थं मां ध्यायेत्तेजोमूर्तिं चतुर्भुजम् ॥
उदुत्यं तु जपेन्मन्त्रं चित्रं तच्चक्षुरित्यपि ।
सावित्रीं च यथाशक्ति जप्त्वा सूक्तं च मामकम् ॥ इति ।

अत्र कश्चिदाह— 5

इदं वचनजातं विष्णुभक्तानां विष्णुमन्त्रजपानन्तरं आदित्यमण्डलान्तर्वर्तित्वेन विष्णुध्यानपरम्, नतु विष्णोः वास्तवादित्यमण्डलान्तर्वर्तित्वपरम् ।

ततः षडक्षरादीनि षट्कृत्वः परिवर्तयेत् ।

इत्यादिना विष्णुमन्त्रजपविधानदर्शनेन तदनन्तरं तत्प्रतिपाद्यविष्णुध्यानविधौ चित्यात् । तत्तन्मन्त्रजपानन्तरं तत्तत्प्रतिपाद्यदेवताध्यानविधानस्य 10 बहुशो दर्शनात् । अतएव आग्नेयपुराणे ध्येयस्सदेत्यादिना विष्णुपूजावसाने तत्प्रतिपाद्यदेवताध्यानविधिरिति । अत्र ब्रूमः—भगवतः आदित्यमण्डलान्तर्वर्तित्वस्य पूर्वोक्तबहुप्रमाणसिद्धत्वेन उदाहृतवचनजातस्य वास्तवादित्यमण्डलान्तर्वर्तिभगवद्ध्यानविधानपरत्वमेवास्तु, न त्वसदर्थध्यानविधानपरत्वम्; तत्र नियामकाभावात् वास्तवध्यानपरत्वे बाधकाभावाच्च ॥ 15

यदुक्तं षडक्षरेत्यादिना षडक्षरकृष्णमन्त्रनिष्ठविषयतया तन्मन्त्रजपविधानं दृश्यत इति तत्तत्प्रकरणार्थानभिज्ञविजृम्भितम् । तत्प्रकरणे हि—

दर्भेषु दर्भपाणिः सन् प्राङ्मुखः सुसमाहितः ।
प्राणायामं ततः कुर्यात् मद्गतेनान्तरात्मना ।
सहस्रकृत्वः सावित्रीं शतकृत्वस्तु वा जपेत् ॥ 20
समाप्ते तु जपे तस्मिन् सावित्र्या चाभिमन्त्र्य च ।

इत्युपक्रम्य

ततो द्वादशकृत्वस्तु सूर्यस्यैकाक्षरं जपेत् ।
ततः षडक्षरादीनि षट्कृत्वः परिवर्तयेत् ।
सदक्षिणं परामृश्य मुद्रया सुमुखं तथा । 25
ऊर्ध्वबाहुस्ततो भूत्वा सूक्ष्ममीक्षेत्समाहितः ।
तन्मण्डलस्थं मां ध्यायेत्तेजोमूर्तिं चतुर्भुजम् ।

उदुत्यं तु जपेन्मन्त्रं चित्रं तच्चक्षुरित्यपि ।
सावित्रीं च यथाशक्ति जपेत्सूक्तं[1] च मामकम् ।
मामकानि च नामानि पुरुषव्रतमेव च ।
ततस्त्वालोकयेदर्कं हँसश्शुचिषदित्यर्थे[2] ।
5 प्रदक्षिणं समाक्रम्य नमस्कृत्य दिवाकरम् ।
ततस्तु तर्पयेरन्मां ब्रह्माणं च सशङ्करम् ॥ इति–

'उदुत्यं तु जपेन्मन्त्र'मित्यादिना नित्यसन्ध्योपासनसावित्रीजपतदुपस्थानादिविधानमेव दृश्यते । नतु कृष्णमन्त्रनिष्ठविषयतया तन्मन्त्रजपविधिः । किंतु सौरैकाक्षरादिजपवत्तदङ्गतया षडक्षरजपविधिः । तदनन्तरं

10 दर्भेषु दर्भपाणिस्सन् स्वाध्यायं तु समारभेत् ।

इति ब्रह्मयज्ञस्वाध्यायविधानात् । यदप्युक्तं कृष्णयुधिष्ठिरसंवादे–श्रुता मे मानवा धर्माः इति श्रुतेभ्यो मानवधर्मेभ्यो व्यावर्त्य–

"युष्मदीयान्परान्धर्मान्पुण्यान्कथय मेऽच्युत"

इति तान्त्रिकधर्माणां पृष्टत्वात् इदमप्यादित्यमण्डलान्तर्वर्तिदर्शनं तान्त्रिकम15वैदिकमेव । "यद्वै किंच मनुरब्रवीत् तद्भेषजं" इति श्रुत्या मानवधर्माणामेव वैदिकत्वादिति । तदप्यसत्–

"श्रुता मे मानवा धर्मा वासिष्ठाः काश्यपास्तथा ।"

इत्यादिना अनुक्रान्तानां मानवधर्मव्यतिरिक्तानां वासिष्ठकाश्यपयाज्ञवल्क्यपराशरापस्तम्बशाखादिधर्मशास्त्राणामप्यवैदिकत्वप्रसङ्गात् । अवैदिकत्वे च 20परमवैदिकस्य धर्मसूनोः अत्यादरेण तद्विषयकप्रश्नानुपपत्तिः ।

"पवित्राः किल ते धर्माः सर्वपापप्रणाशनाः ।
एतेभ्यस्सर्वधर्मेभ्यः देव त्वन्मुखनिस्सृताः ।
पावनत्वाद्यथार्थत्वात् विशिष्टा इति मे मतिः ।"

इति तत्प्रशंसानुपपत्तिश्च । किंच—

25 "युधिष्ठिरस्तु धर्मात्मा हृदि कृत्वा जनार्दनम् ।"
तद्भक्तस्तन्मयो युक्तस्तद्याजी तत्परोऽभवत् ।

---

१ जप्त्वा सूक्तं च. २ दित्यृचि.

इति युधिष्ठिरस्य भगवदुपदिष्टधर्मनिष्ठतायाः धर्मात्मताप्रयुक्तत्वाभिधानानुपपत्तिः । धर्मात्मतायाः भगवदुपदिष्टवैदिकधर्मनिष्ठतायामहेतुत्वात् तद्विरोधित्वाच्च । "चिन्तयस्व तदा विष्णुं" इत्यादिना वैशम्पायनेन जनमेजयस्यापि तद्धर्मे प्रवर्तनानुपपत्तिः । अपिच—तद्धर्माभिनिविष्टानां धर्मसूनुवैशम्पायनप्रभृतीनां महतामवैदिकत्वापादनेन ब्रह्मविदपचारापत्तिः । अस्तु वा—आदि- 5 त्यमण्डलान्तर्वर्तिविष्णुध्यानस्य तन्त्रनिष्ठाधिकारिविषयत्वम् । तथापि नानुपपत्तिः । तदर्थध्यानस्यैव तन्मन्त्रजपाङ्गत्वेन सावित्रीजपाङ्गध्यानस्य तदर्थविषयतावश्यंभावेन अर्थतथात्वस्य अवर्जनीयत्वात् । किंच—ब्रह्माण्डपुराणादौ भगवत एवादित्यमण्डलान्तर्वर्तित्वं वास्तवमभिधीयते । तथा हि ब्रह्माण्डे— 10

तस्य रूपं तु भगवान्परब्रह्ममयो हरिः ।
तेजसाधिष्ठितस्तस्य भानुर्भुवनभासकः ।
पर्येति मेरुं देदीप्यन् ज्योतिश्चक्रसमन्वितः ॥ इति ।

वाराहे—

क्षीराब्धिर्मण्डलं भानोर्योगिनां हृदयानि च । 15
त्रीणि धामानि मे सन्ति त्रिधामाहमतः स्मृतः ॥

इति भगवतैवोक्तम् । मोक्षधर्मे—

विद्यासहायवन्तं मामादित्यस्थं सनातनम् ॥

इति भगवद्वचनादपि तस्यादित्यमण्डलान्तर्वर्तित्वसिद्धिः । अत्र विद्याशब्दो लक्ष्मीपरः ॥ 20

मा विद्या च हरेः प्रोक्ता तस्या ईशो यतो भवान् ।
तस्मान्माधवनामासि धवः स्वामीति शब्दतः ॥

इति कैलासयात्रायां शिवोक्तेः ॥

ननु रुद्रसूक्ते—यः शुक्र इव सूर्ये यो हिरण्यमिव रोचते । श्रेष्ठो देवानां वसुरिति आदित्यमण्डलान्तर्वर्तित्वं रुद्रस्यावगम्यते इति चेन्न; 25 शुक्र इव सूर्य इति सूर्यमण्डलान्तर्वर्तिनः शुक्रशब्दाभिहिताद्भगवतो भेदस्यैव रुद्रे प्रतीतेः । शुक्रशब्दवाच्यश्च भगवानेव ।

तन्मण्डलस्थं मां ध्यायेत्तेजोमूर्तिं चतुर्भुजम् ।
उदुत्यं तु जपेन्मन्त्रं चित्रं तच्चक्षुरित्यपि ॥

इति भगवद्वचनात् । तत्र हि तच्चक्षुरिति मन्त्रस्यादित्यमण्डलान्तर्वर्तिभगवद्ध्यानोपयुक्तस्य भगवत्परत्वमेव युक्तम् । तथाच तन्मन्त्र(स्थ)शुक्रशब्द-
5 वाच्यो भगवानेव ॥

एवं च यः शुक्र इव सूर्य इत्यस्यायमर्थः—सूर्यमण्डलान्तर्वर्तिशुक्रशब्दवाच्यभगवत्सदृशो रुद्रो रोचत इति, नतु शुक्र इव यो रुद्रः सूर्ये रोचत इत्यर्थः; सूर्यपदस्याव्यवहितशुक्रपदान्वय एव स्वारस्यात् । अत एव नारायणपरत्वेन निर्णीताम्भस्यानुवाके तदेव शुक्रममृतमिति शुक्रशब्देन
10 भगवानेव निर्दिष्टः ॥

मोक्षधर्मे—

वैकुण्ठः परमो विष्णुः शुक्रोऽनन्तः सनातनः ।

इति विष्णौ शुक्रशब्दप्रयोगाच्च । एवं स्थिते भगवत एव सूर्यमण्डलान्तर्वर्तित्वे

15 "असौ योऽवसर्पति नीलग्रीवो विलोहितः"

इति मन्त्रः "नमो रुद्राय पशुपतये महादेवाय हराय शिवाय ईशानाय उग्राय घृणिने कपर्दिने नमः, नमस्सूर्यायादित्याय नमः, नमश्चन्द्रललाटाय कृत्तिवाससे नमः, इत्यादिमन्त्राश्च नमो रुद्राय पशुपतये शिवायोग्राय कपर्दिने सूर्यायादित्याय नमो नमश्चन्द्रललाटाय कृत्तिवाससे नम" इत्यादिमन्त्राश्च सूर्य-
20 मण्डलस्य रुद्राभेदोपचारेण स्तुतिपराः । एवं "य एष आदित्ये पुरुषः स परमेष्ठी ब्रह्मात्मा" इत्यादौ परमेष्ठ्यादिशब्दा नारायणपरमपुरुषशब्दसमभिव्याहारेण। भगवत्परा एव "ब्रह्मा विश्वः कतमः स्वयंभुः प्रजापतिः संवत्सर इति संवत्सरोऽसावादित्ये" इत्यत्रापि प्रजापतिशब्दो भगवत्परः। ब्रह्मशब्दस्य

"एकार्णवे तथा तस्मिन् नष्टे स्थावरजङ्गमे ।
25 तथा संभवति ब्रह्मा सहस्राक्षस्सहस्रपात् ।
सहस्रशीर्षा पुरुषः रुक्मवर्णो ह्यतीन्द्रियः ।
ब्रह्मा नारायणाख्यस्तु सुष्वाप सलिले सदा ।

इति नारायणे प्रयोगात् । प्रजापतिशब्दस्यापि “प्रजापतिश्चरति गर्भे अन्तः, अजायमानो बहुधा विजायते” इति तत्र प्रयोगात् । “एकार्णव” इत्यादिवचनेषु “ब्रह्मा नारायणाख्य” इति ब्रह्मशब्देन नारायणमभिधाय उत्तरत्र;—

“ब्रह्मा तु सलिले तस्मिन् वायुर्भूत्वा तथाचरत् । 5
निशायामिव खद्योतः प्रावृट्काले ततस्तु सः ॥

इति वचनेन प्रसिद्धब्रह्मणश्चतुर्मुखस्य पृथगभिधानेन पूर्वब्रह्मशब्दस्य नारायणपरत्वात् । एवं परमेष्ठिशब्दोऽपि—

“इत्यादिष्टौ भगवता कृष्णौ तौ परमेष्ठिना ।”

इति दशमस्कन्धे भगवति प्रयुक्तः । एवं हरिवंशेऽपि— 10

“परमेष्ठी हृषीकेशश्शयनायोपचक्रमे ।
पीतवासा लोहिताक्षः”

इति तस्मिन्नेव प्रयुक्तः । नन्वेवमपि केषुचिद्वाक्येषूदाहृतेषु परमेष्ठिप्रजापतिशब्दादिभिः चतुर्मुखस्य आदित्यान्तर्वर्तित्वं प्रतीयते । ( केषुचित् भर्गेशानादिशब्दैः रुद्रस्य आदित्यान्तर्वर्तित्वं, ) केषुचित् विष्णुनारायणा- 15 दिशब्दैः नारायणस्य आदित्यान्तर्वर्तित्वमिति कथं निर्णयः इति चेदुच्यते—पुण्डरीकाक्षत्व, हिरण्मयत्व, शङ्खचक्रादिमत्त्वादीनां भगवदसाधारणलिङ्गानां प्रतीत्या सिद्धे भगवत एव आदित्यान्तर्वर्तित्वे ईशानप्रजापतिशब्दादयः तदनुरोधेन भगवत्परतया नेयाः । न त्वीशानप्रजापतिशब्दानुरोधेन विष्णुनारायणादि ( शब्दाः; तत्र तादृशलिङ्गाश्रवणात् । 20 योगार्थेन नारायणादि)शब्दानां रुद्रादिपरत्वे णत्वानुपपत्तेर्वक्ष्यमाणत्वाच्च । तस्मात् सिद्धं भगवत एवादित्यमण्डलान्तर्वर्तित्वमिति ॥ ॥

॥ इत्यन्तरादित्यविद्यावेद्यत्वभङ्गः ॥

श्रीः

## अथ देवतान्तरस्याक्षिविद्यावेद्यत्वभङ्गः प्रारभ्यते ॥

एवमन्तराक्षिविद्यापि भगवत्परा । यथा—छान्दोग्ये "य एषोऽन्तरक्षिणि 5 पुरुषो दृश्यते सैवर्क् तत्साम तदथर्वस्तद्यजुस्तद्ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्यगेष्णौ तौ गेष्णौ यन्नाम तन्नामे"ति । अत्र पुरुषो नारायणः । तत्रैव पुरुषशब्दप्रयोगस्य बहुशो दर्शितत्वात् ॥

किञ्च बृहदारण्यके "तद्यत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषः यश्चायं दक्षिणेऽक्षन्नि"ति सूर्यमण्डलान्तर्वर्तिपुरुषेणाक्षिपुरुष-10 स्यैक्यावगमेनाक्षिपुरुषो नारायण एव ॥

किञ्च "इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन्पुरुषस्तं वा एतमिन्धꣳसन्तमिन्द्र इत्याचक्षते परोक्षेण, अथैतद्वामेऽक्षिणि पुरुषरूपमेषास्य पत्नी विराट्" इत्यक्षिपुरुषस्य इन्द्रत्वमभिधाय इन्द्रपत्न्या राडसि बृहती श्रीरसीन्द्रपत्नीति लक्ष्म्यभेदप्रतिपादनेनाक्षिपुरुषस्य लक्ष्मीपतित्वसिद्ध्या नारायणत्वसिद्धिः ॥

15 इति श्रीवेदान्तविजयमङ्गलदीपिकायां देवतान्तरस्याक्षिविद्यावेद्यत्वभङ्गः तृतीयः ॥

---

श्रीः

## अथ देवतान्तरस्य दहरविद्यावेद्यत्वभङ्गः प्रारभ्यते ॥

20

**एवं दहरविद्यापि व्याख्याता भगवत्परा ।**
**तत्रोत्तरेषु वाक्येषु तद्धर्माणां प्रतीतितः ॥**

छान्दोग्ये दहरविद्या श्रूयते—

"अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर 25 आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वा व विजिज्ञासितव्यमि"ति ॥

अत्र दहराकाशो भगवानेव । तदसाधारणधर्माणामपहतपाप्मत्वादीनां "एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामः सत्यसंकल्प" इत्यादीनां श्रुतानां भगवत्येवोपपत्तेः । सुबालोपनिषद्यपि भगवत एव हृदयान्तर्वर्तित्वं स्पष्टमवगम्यते ॥ चतुर्थे "हृद्याकाशे परेशो दीर्घोऽयमात्मा स्वपिति । पञ्चमे यः प्राणे यो विज्ञाने य 5 आनन्दे यो हृद्याकाशे य एतस्मिन् सर्वस्मिन्नन्तरे सञ्चरति सोऽयमात्मा तमात्मानमुपासीताजरममृतमभयमशोकमनादि त्वेकमनन्तमि"ति चतुर्दशकृत्वोऽभ्यस्तम् । सप्तमे खण्डे "अन्तश्शरीरे निहितो गुहायामज एको नित्यो यस्य पृथिवी शरीरम्" । अष्टमे "अन्तश्शरीरे निहितो गुहायां शुद्धः सोऽयमात्मा, तत्रैव सर्वेश्वरमचिन्त्यमशरीरं निहितं गुहायाममृतमि"ति ॥ 10

एवमात्मप्रबोधोपनिषद्यपि—हृदयाकाशान्तर्वर्ती भगवानेवेत्यवगम्यते "अथ यदिदं ब्रह्मपुरमिदं पुण्डरीकं तस्यायमात्मा हृत्पुण्डरीकमध्य" इत्यारभ्य "दीपवत्प्रकाशो ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदनः" इति ॥

एवं वासुदेवोपनिषद्यपि—

एकाग्रमानसो यो मां ध्यायते हरिमव्ययम् । 15
हृदम्बरस्थमात्मानं स मुक्तो नात्र संशयः ॥ इति ।

हरेर्भगवतो हृदयाकाशान्तर्वर्तित्वं स्पष्टमवगम्यते । एवं मुण्डकोपनिषदि तृतीये

पुरुष एवेदं सर्वं ततो ब्रह्म परामृतम् ।

एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य॥ इति । 20
तथा चतुर्थे खण्डे गुहाचरं नाम महत्पदमिति । पञ्चमे दूरस्थे दूरेचरदन्तिके च पश्यत्स्वेव विश्वस्येव निहितं गुहायामिति । एवं कठवल्यां षष्ठे खण्डे—

अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा
सदा जनानां हृदये सन्निविष्टः ॥

इति सकलचेतनहृदयान्तर्वर्तिपुरुषो भगवानेवेति स्पष्टमवगम्यते । तथा 25 क्षुरिकोपनिषद्यपि—

ततो रक्तोत्पलाभासं पुरुषायतनं महत् ।
दहरं पुण्डरीकमिति वेदान्तेषु निगद्यते ॥ इति ।

तथा–यो वेद सोऽन्तःपुरुष आकाशोऽयं वा वसनीय? यथान्तर्हृदय आकाशस्तदेकं तत्पूर्णमिति । एवं ब्रह्मविद्योपनिषदि द्वितीयखण्डे—हृद्या-
5 काशे तद्विज्ञानमाकाशं (तत्सुषिरमाकाशं) तद्वेद्यं हृद्याकाशे यस्मिन्निदं स-ञ्चरति तस्मिन्निदं सर्वमोतं प्रोतं स विभुः । तथा श्वेताश्वतरे तृतीये—

सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः । इति ।

अत्रैव—अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा
सदा जनानां हृदये सन्निविष्टः ।
10 अणोरणीयान्महतो महीयान्
आत्मा गुहायां निहितोऽस्य जन्तोः ॥ इति ।

तथा चतुर्थे—एष देवो विश्वकर्ता महात्मा
सदा जनानां हृदये सन्निविष्टः ॥ इति ।

बृहदारण्यके चतुर्थेऽध्याये प्रथमे ब्राह्मणे—"य एषोन्तर्हृदय आकाशस्त-
15 स्मिंच्छेते सर्वस्य वशी"ति । तथा "हृदये ह्येव सत्यं प्रतिष्ठितं भवति" इति । तथा कैवल्योपनिषदि—

हृत्पुण्डरीकं विरजं विशुद्धं
विचिन्त्य मध्ये गगनं विशोकम् ।

अनन्तमव्यक्तम् इति । तत्रैवोत्तरत्र– "एवं विदित्वा परमात्मरूपं
20 गुहाशयमद्वितीयमि"ति । माण्डूक्ये च—

"प्रणवं हीश्वरं विद्यात्सर्वस्य हृदयस्थितम्" । इति ।

आरण्ये च शिक्षायाम्—"स य एषोऽन्तर्हृदय आकाशस्तस्मिन्नयं पुरुष" इति । एवं बहुश्रुतिभिः हृदयाकाशान्तर्वर्ती भगवानेवेति स्पष्टमवगतम् ॥

ननु दहरविद्यायां दहरोऽस्मिन्नन्तर आकाश इत्यत्र दहराकाशो भग-
25 वानेवास्तु । तथापि तस्मिन्यदन्तस्तदन्वेष्टव्यमिति दहराकाशान्तर्वर्ति यद्-देवतान्तरं तदन्वेष्टव्यमिति देवतान्तरस्यैवोपास्यत्वं प्रतीयते । युक्तं चैतत्; बृहदारण्यके—"स पुनः कस्मिन्नु खलु आकाश ओतश्च प्रोतश्च, एतस्मिन्

खल्वक्षर आकाश ओतश्च प्रोतश्चे"ति प्रश्नोत्तरानुसारात्। तत्र हि दहराकाशातिरिक्तस्याक्षराख्यतत्त्वस्य प्रतीतेः, दहरविद्यायामेवोपसंहारे "आकाशो ह वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्मे"ति दहराकाशातिरिक्तस्यैव ब्रह्मत्वप्रतीतेश्च॥

किञ्च श्वेताश्वतरे "तेनेदं पूर्णं पुरुषेण सर्वम्" इत्यभिधाय "ततो यदुत्तर- 5 तरम्" इति पुरुषशब्दवाच्यं नारायणादतिरिक्तं वस्तु प्रतिपाद्यते॥

किञ्च मैत्रायणीयोपनिषदि "तमो वा इदमेक आसीत् तत्परेणेरितं विषयत्वं प्रयाती"ति तमोऽधिष्ठातारं परशब्देनाभिधाय तस्य प्रोक्ता अन्यास्तनवः ब्रह्मविष्णुरुद्रा इति तमोऽधिष्ठातुः परस्यांशत्वेन ब्रह्मविष्णुरुद्राणामभिधानात् त्रिमूर्त्यतिरिक्तं तत्त्वान्तरमिति सिद्धम्॥ 10

अपि च—अथर्वशिखायाम् "ईशानं प्रध्यायितव्यं सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते न कारणं कारणानां धाताध्याता कारणं तु ध्येयः सर्वैश्वर्यसम्पन्नः सर्वेश्वरः शम्भुराकाशमध्ये ध्येयः" इति ब्रह्मादित्रितयकारणमुपास्यमीशानशम्भुशिवादिशब्दवाच्यं देवतान्तरमेव प्रतिपाद्यते॥

अपि चाथर्वशिरसि "यो वै रुद्रः स भगवान्, यश्च ब्रह्मा तस्मै वै नमो 15 नमः, यो वै रुद्रः स भगवान्, यश्च विष्णुः तस्मै वै नमो नमः, यो वै रुद्रः स भगवान्, यश्च वै महेश्वरः तस्मै वै नमो नमः" इति ब्रह्मादीनां रुद्रविभूतित्वप्रतिपादनेन तदतिरिक्तं तत्त्वान्तरं सिद्धम्। तस्मात्—

बृहदारण्यमैत्रेयश्वेताश्वतरवाक्यतः।
छान्दोग्यतापनीयाभ्यां ब्रह्मोपनिषदा तथा॥ 20
तथाथर्वशिरोवाक्यैरथर्वशिखयापि च।
त्रिमूर्तिभ्योऽधिकं तत्त्वं निश्चिन्वन्ति विपश्चितः॥

इति दहराकाशान्तर्वर्तिदेवतान्तरस्यैवोपास्यत्वमिति। अत्रोच्यते—अत्र दहरविद्यायाम्—"अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्य"मित्यु- 25 पासनं विधाय तदन्तर्वर्तिविशेषनिर्धारणाय "किं तत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्य"मिति कृतप्रश्नोत्तरम् "अस्मिन् कामाः समाहिता"

इति । अस्मिन्दहराकाशे परमात्मनि कामाः कल्याणगुणाः समाहिताः । तथाचापहतपाप्मत्वादिगुणजातं दहराकाशान्तर्वर्तीत्युक्तं भवति । काम्यन्त इति कामा इति व्युत्पत्त्या कामशब्दस्य कल्याणगुणपरत्वात् । तानेव गुणानाह—"एष आत्माऽपहतपाप्मा विरजो विमृत्युर्विशोको विजिघित्सोऽपि-
5 पासः सत्यकामः सत्यसंकल्प" इति । एवं हि विहितस्य परमात्मतदन्तर्वर्ति-गुणजातोपासनस्य फलान्वयं दर्शयति—"अथ य इहात्मानमनुविद्य व्रजन्त्ये-तांश्च सत्यान् कामान् तेषां सर्वेषु लोकेषु कामचारो भवति स्वेन रूपेणाभि-निष्पद्यत" इति । अत्रैतांश्च सत्यान् कामानिति सत्यकामशब्देन प्रकृतप-रैतच्छब्दसमानाधिकरणेन एष आत्मा अपहतपाप्मेति अप्रकृतापहतपाप्म-
10 त्वादय उच्यन्ते ॥

ननु तृतीयखण्डे त इमे सत्याः कामा इत्यत्र सत्याः कामा इत्यनेन द्वितीयखण्डोक्तपितृलोकादय एवोच्यन्ते, ततश्च प्रथमखण्डेऽपि एतांश्च सत्यान् कामानिति तेषामेवाभिधानं युक्तम्; अन्यथा वैरूप्यप्रसङ्गादिति चेन्न; पितृलोकादीनामप्रकृतत्वेन एतानित्येतच्छब्देन परामर्शायोगात् ।
15 योगे वा द्यावापृथिव्यादीनामपि प्रकृतत्वेन तेषामपि परामर्शे वैरूप्यमव-र्जनीयम् । वस्तुतस्तु "य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्" इत्युपास्यत्वेनोक्ताः सत्यकामा अपहतपाप्मत्वादिगुणा एव न पितृलोकादयः, तेषामनुपास्यत्वात्, तदुपासनस्य सर्वलोककामचारस्वरूपगुणाष्टकाविर्भावरूप-फलहेतुत्वासंभवाच्च । नच तृतीयखण्डस्थसत्यकामपदवैरूप्यप्रसङ्गः; भिन्नप्रक-
20 रणतयार्थानुपपत्त्या च तस्यादोषत्वात् ॥

अथवा प्रथमतृतीयखण्डस्थयोः सत्यकामपदयोरपहतपाप्मत्वादिगुणपर-तया न वैरूप्यम्; सत्यपदस्य नित्यपरत्वेन तत्परत्वस्यैव युक्तत्वात् पितृ-लोकादीनामनित्यत्वात् मिथ्यात्वप्रतियोगिसत्यत्वस्याप्रकृतत्वात् प्रकृतपितृ-लोकाद्यनित्यकामव्यावृत्तेर्वक्तव्यत्वात् । अत एव च पूर्वाचार्यैरप्ययमेवार्थः
25 स्पष्टीकृतः ॥

भगवद्गुणानां च नित्यत्वं "त इमे सत्याः कामा" इति श्रुतिसिद्धम् । काम्यन्त इति कामाः कल्याणगुणाः त इमे सत्या नित्या इति । अत एव

च त इम इति पदद्वयसाफल्यम् । अन्यथान्यतरपदवैयर्थ्यात् । गुणपरत्वे हि त इत्यस्य प्रथमद्वितीयखण्डोक्तगुणपरामर्शितया इम इत्यस्य प्रकृततृतीयखण्डोक्तगुणपरामर्शितया च साफल्यम् । अत एव प्रथमखण्डे "य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामा"नित्येतच्छब्द एव प्रयुक्तः, नतु तच्छब्दोऽपि । तस्माद्दहराकाशान्तर्वर्तिगुणजातं दहराकाशश्च भगवानेव । 5 "य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशान" इत्युपक्रम्य "एष सर्वेश्वर एष भूतपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाये"ति सर्वेश्वरत्वधारकत्वादिश्रुतेः, "एवमेवैष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुष" इति दहरोपासकोपास्यस्य पुरुषोत्तमत्वनिर्धारणाच्च। उत्तमः पुरुषः सर्वेभ्यः 10 पुरुषेभ्यः उत्तमः पुरुषः इत्यर्थः ॥

उत्तमत्वस्यावधिसापेक्षतया पुरुषशब्दोपस्थापितत्वेनान्तरङ्गतया सजातीयानामेव पुरुषाणामवधित्वेनान्वयात् स इति तच्छब्देन ज्योतिरेव परामृश्यते न तु मुक्तः; तत्र सर्वपुरुषोत्तमत्वविधानासंभवात्, पुरुषशब्दापेक्षया च पुल्लिङ्गनिर्देशः । उत्तमपुरुषपदस्यानुवादत्वेन पर्येतीत्यत्र तच्छ- 15 ब्दवैयर्थ्यम्; तदानीं स उत्तमः पुरुषः तत्र पर्येतीत्येकवाक्यतयान्वयासंभवात् । तस्मात् तच्छब्दद्वयेन वाक्यभेदस्यावश्यकतया ज्योतिष्येव पुरुषोत्तमत्वं देवताविशेषनिर्णयार्थं विधीयते, नतु मुक्ते; अयोग्यत्वात् । पुरुषोत्तमत्वं च गीतोपनिषदि भगवता स्वस्मिन्नेवेति प्रतिपादितम् ॥

यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । 20
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ इति ।

अत्र क्षराक्षरशब्दौ—

क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।

इति विवृतौ । सर्वाणि भूतानीति बद्धाः पुरुषा उच्यन्ते । कूटस्थ इति मुक्ताः ।

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । 25

इति प्रक्रमात् । ततश्च क्षरं बद्धचेतनमतीतः विलक्षणः बद्धचेतनेभ्य उत्तम इति यावत् । अक्षरान्मुक्तचेतनवर्गादपि उत्तमो यस्मादहमतो लोके

वेदे च पुरुषोत्तम इति प्रथितः प्रसिद्धः । अनेन योगरूढिभ्यां पुरुषोत्तम-शब्दो भगवत्पर इत्युक्तं भवति ॥

अत्र केचिदाहुः—अनुपपन्नोऽस्य योगार्थः । तथाहि न तावदुत्तम-श्चासौ पुरुषश्चेति कर्मधारयः; उत्तमशब्दस्योपसर्जनतया पूर्वनिपातप्रस-5 ङ्गात् । नापि पुरुषेभ्य उत्तम इति पञ्चमीसमासः; "पञ्चमी भयेने"ति भया-दिशब्दैरेव तद्विधानात् । नापि पुरुषाणामुत्तम इति षष्ठीसमासः; "न निर्धा-रण"इति षष्ठ्याः समासनिषेधात् । नापि पुरुषेषूत्तम इति सप्तमीसमासः; षष्ठीसमासनिषेधादेव तस्यापि निषिद्धत्वात् । अन्यथा रूपतोऽर्थतश्च भेदा-भावेन सप्तमीसमाससंभवे निषेधानर्थक्यात् । तस्मात् केवलरूढ एवायं 10 पुरुषोत्तमशब्द इति ॥

अत्रोच्यते—"यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः" इति निरुक्त्य-नुसारेण पञ्चमीसमास एवायम् । नच "पञ्चमी भयेने"त्यादिना भयादिशब्दै-रेव पञ्चमीसमासविधानात् नात्र पञ्चमीसमाससंभव इति वाच्यम् ; पञ्चमीति योगविभागेन समासोपपत्तेः । योगविभागश्च "तपरस्तत्कालस्ये" 15 त्यत्र "तः परो यस्मात् सोऽयं तपरः तादपि परः तपरः" इति भाष्यवा-क्यादवगम्यते ॥

अथवा षष्ठीसमास एवायम् । षष्ठी च संबन्धसामान्ये । सम्बन्धश्चात्र नीचोत्तमभाव इति न विरोधः । सप्तमीसमासो वा । नच षष्ठीसमासनिषे-धादेवायं निषिद्धः, अन्यथा निषेधानर्थक्यादिति वाच्यम्; तस्यान्तोदा-20 त्तस्वरनिषेधार्थत्वात् । सप्तमीसमासे हि "तत्पुरुषे तुल्यार्थतृतीयार्थसप्तम्यु-पमाने"त्यादिना पूर्वपदप्रकृतिस्वरत्वमेव नान्तोदात्तत्वमिति । वस्तुतस्तु निर्धारणषष्ठीसमास एवायम् । नच "न निर्धारण"इति समासनिषेधः शङ्कनीयः; समुदायसमुदायिवाचिपदयोः समुदायिपदसमुदायवाचिपदेनैव समासनिषेधात् । अत एव "मनुष्याणां क्षत्रियश्शूरतमः विप्राणां देवदत्तो 25 भक्त" इत्युदाहृतं वृत्तिकारादिभिः ॥

नहि पुरुषोत्तम इत्यत्र उत्तमपदं समुदायसमुदायिवाचि, किन्तु विधे-यवाचि । समुदायी च रूढ्युपस्थितो नारायण एव । नच "न निर्धारण" इति

समासनिषेधस्य कथं समुदायिवाचिपदविषयत्वं ? विधेयवाचिपदेनापि तन्निषेधसंभवादिति वाच्यम्; ब्राह्मणोत्तमनरोत्तमवानरोत्तमादिप्रयोगानुरोधेन तद्विषयत्वस्यैव युक्तत्वात् ॥

नचोत्तमपदमेव निर्धार्यसमर्पकमस्त्विति वाच्यम्; तथा सत्यनुवादकतया विधेयत्वप्रतीतिस्वारस्यविरोधात् । अथवा पुरुषश्चासावुत्तमश्चेति कर्म- 5 धारयः, पुरु सुनोतीति व्युत्पत्त्या पुरुषो बहुप्रदः, तथाच पुरुषशब्दस्य विशेषणत्वात्पूर्वनिपातः । बहुप्रदत्वमुत्तमत्वं च रूढ्युपस्थिते नारायणे प्रतीयते पङ्कजपदरूढ्युपस्थापिते पद्मे पङ्कजनिकर्तृत्वमिव । अस्तु वा पुरुषशब्दो रूढः; तथापि पुरुषशब्दस्य विशेषणत्वाभावेन पूर्वनिपातानुपपत्तिः । "प्रशंसावचनैश्चे"ति सूत्रेण पुरुषशब्दस्य प्रशंसावचनेनोत्तमशब्देन 10 समाससंभवात् । वस्तुतस्तु उत्तमश्चासौ पुरुषश्चेत्येव कर्मधारयः । नच विशेषणतया उत्तमशब्दस्य पूर्वनिपातप्रसङ्गः; प्रयोगानुरोधेन क्वचिद्विशेष्यस्यापि तत्संभवात् । अत एवोक्तं चान्द्रव्याकरणवृत्तौ "विशेषणमेकार्थेन बहुल"मिति सूत्रेण बहुलग्रहणात् क्वचिद्विशेषणस्य परनिपातः; यथा पुरुषोत्तम इति, क्वचित्पूर्वनिपातः उत्तमपुरुष इति । तस्माद्योगरूढ एवायं 15 पुरुषोत्तमशब्द इति ॥

एवं दहराकाशस्य पुरुषोत्तमत्वं "दहर उत्तरेभ्य"इति सूत्रे सूत्रकारेणापि व्यवस्थापितम् । दहराकाशस्यान्तर्वर्तिगुणजातमिति तु तस्मिन्यदन्तारिति कामव्यपदेश इति वाक्यकारेण व्यवस्थापितम् । काम्यन्त इति व्युत्पत्त्या कामशब्दस्य(कामाः)कल्याणगुणा इति व्याख्याततत्वात् । अन्यथा ब्रह्म- 20 व्यपदेश इत्येवोच्येत ॥

अत्रेदं तत्त्वम्—आकाशपदचिह्नितानि वाक्यानि बहूनि श्रूयन्ते "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशो ह्येवैतेभ्यो ज्यायान् आकाशः परायणं, दहरोऽस्मिन्नन्तर आकाशः, तत्रापि दहं गगनं विशोकः, आकाशो ह वै नामरूपयोः निर्वहिता, यदेष आकाश आनन्दो 25 न स्या"दित्यादीनि । अत्र सर्वत्राप्याकाशशब्दो हि एकविषयः,अन्यथा वैरूप्यात् ,स विषयो नारायण एव । आकाशो ह्येवैतेभ्यो ज्यायानित्युक्तस्य सर्वे-

भ्यो ज्यायस्त्वस्य "अतो ज्यायांश्च पुरुषः" इति पुरुषसूक्तेऽपि प्रतिपादितत्वेन तत्प्रत्यभिज्ञानात्। "आकाशादेव समुत्पद्यन्त" इति प्रतिपादितस्य जगत्कारणत्वस्य "एको ह वै नारायण आसीत् न ब्रह्मा नेशानो नेमे द्यावापृथिवी नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायत"इत्यादिना नारायणे 5 प्रतिपादनेनायमाकाशो नारायण एव। शम्भुराकाशमध्य इत्यत्र शम्भुपदं शं सुखं भावयतीति व्युत्पत्त्या गुणजातपरम्। अन्यथा "अस्मिन् कामास्समाहिताः" इति श्रुत्यन्तरविरोधात्॥

अथवा आकाशो मध्ये यस्य स आकाशमध्यः, विभक्तिव्यत्ययश्छान्दसः। यद्वा अत्रत्याकाशशब्दो हृदयाकाशपरः। नचाकाशशब्दवैरूप्यम्; 10 सति बाधके तदविरोधात्। शम्भुशब्दो नारायणपरः। अन्यथा रुद्रस्य नारायणान्तर्यामित्वस्य "एको ह वै नारायण असीन्न ब्रह्मा नेशानो नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायत" इत्यादिश्रुतिविरोधेनासंभवात्। शम्भुशब्दस्य नारायणपरत्वं "स्वयम्भूश्शम्भुरादित्य"इति सहस्रनामसु पाठादवगम्यते। न चास्य गौणनामत्वम्; तथापि प्रकृते नारायण-15 परत्वाविरोधात्, वासुदेवजनार्दनादिनामभिः सह पठितत्वेन मुख्यत्वाविरोधाच्च। एवमीशानादिशब्दोऽपि भगवत्परः; "ईशानः प्राणदः प्राणः सर्वः शर्वः शिवः स्थाणु"रिति सहस्रनामसु पाठात्। तस्माद्दहराकाशो नारायण एव॥

ननु कारणं तु ध्येय इत्यादिना जगत्कारणस्य उपास्यत्वम्, तथाच 20 "तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वा व विजिज्ञासितव्य"मिति दहराकाशस्य उपास्यत्वप्रतीतेः दहराकाशशब्देन जगत्कारणस्यैवाभिधानं युक्तम्। जगत्कारणत्वं च श्वेताश्वतरे—

यदा तमस्तन्न दिवा न रात्रि-
र्न सन्न चासच्छिव एव केवलः॥

25 इति रुद्रस्य श्रूयते। अतः कथं दहराकाशो नारायण इति चेन्न; "एको ह वै नारायण आसीत् नारायणाद्ब्रह्मा जायत" इत्यादिवाक्यानुसारेण सहस्रनामपाठाच्च शिवशब्दस्य नारायणपरत्वात्। नच वैपरीत्यं शङ्कितुमर्हम्;

तदा नेशान इति रुद्रसत्त्वनिषेधात् । नारायणाद्रुद्रो जायत इति तस्य नारायणजन्यत्वकथनाच्च ॥

किञ्च यदेत्यस्य वाक्यस्यानुवादकतया वाक्यान्तरसापेक्षत्वात्, वाक्यान्तरेण च एको ह वै नारायण आसीदित्यादिना नारायणस्यैव जगत्कारणत्वप्रतीतेः इदमपि वाक्यं तत्परम् ॥ 5

ननु "एको ह वै नारायण आसी"दिति वाक्यमपि प्रसिद्धवाचक-ह-वै-शब्दश्रुत्याऽनुवाद एवेति चेदुच्यते, "सदेव सोम्येदमग्र आसी"दिति सच्छब्दवाच्यस्य जगत्कारणत्वमभिधाय "ब्रह्म वा इदमग्र आसी"दिति ब्रह्मत्वं विधाय "आत्मा वा इदमग्र आसी"दित्यात्मत्वं विहितम्, स चात्मा नारायण एवेति एको ह वा इति तदनुवादेन नारायण इति नारायणत्वविधानेनावगतम् । नारायण इत्यंशस्याप्यनुवादत्वे नारायणाद्ब्रह्मा जायते इति नारायणत्वावगतौ शिवादिपदचिह्नितवाक्यं सर्वमपि तत्परमेवेति न "यदा तमस्तन्न दिवा न रात्रिः" इति वाक्येन रुद्रकारणत्वसिद्धिः ॥ 10

ननु यदा तमस्तदिति वाक्ये तच्छब्दस्य शिव इत्यनेनान्वयः, तथाच तत्तदा शिव एव केवल इति विधिः, नचासीदित्यन्तमनुवादः; तथाच रुद्रस्यैव जगत्कारणत्वसिद्धिरिति चेन्न; नारायणाद्ब्रह्मेति नारायणस्य कारणत्वश्रुतिप्राबल्येन शिवशब्दस्यान्यपरत्वात् । न हि तत्रैवात्र कारणताश्रुतिरस्ति । लिङ्गं तु दुर्बलम् ॥ 15

किञ्च शिव एवेत्येवकारेण इतरनिवृत्तिविधौ तात्पर्यं, न तूभयत्र; गौरवात् वाक्यान्तरविरोधाच्च । तदयमर्थः—यदा तत्तमः परे देव एकी भवतीत्यविभक्तावस्थं तमः न दिवादि च समस्तकार्यविधुरो भगवानेव तत्तदा, अक्षरमिति भगवतः स्वरूपतो विकाराभावो विधीयते । अत्र च शिवशब्देन भगवन्निर्देशः सर्वशून्यत्वेऽपि मङ्गलरूपत्वं व्यञ्जयितुम् ॥ 20

ननु यदा शिवस्तदाक्षरमित्युक्तौ शिवशब्दवाच्यात् भगवतोऽन्यदेवाक्षरं प्रतीयत इति चेन्न; यदा प्रलयकाले सर्वशून्यो भगवान् तदा स्वरूपतः विकारहीन इत्येवंपरत्वात् । अक्षरशब्दस्य केवलं यदा शिवस्तदाक्षरं इत्युक्तावपि भेदप्रतीतिः यथा—यदा यज्ञदत्तस्तदा देवदत्तः—इत्यादौ । 25

वस्तुतस्तु श्वेताश्वतरे "यदा तमस्त"दित्यादिना रुद्रस्य कारणत्वं "एको ह वै नारायण आसी"दित्यादिना नारायणस्य कारणत्वं च प्रतिपाद्यते। उभयोरविरोधायान्यतरवाक्यानुरोधेनान्यतरस्य कारणत्वप्रतिपादकवाक्यानुरोधेन श्वेताश्वतरवाक्यस्य तत्परत्वमेव युक्तम्। शिवशब्दस्य मङ्गलवाचितया
5 भगवदभिधानत्वसंभवात् भगवन्नामसु पाठाच्च ॥

न ह्येवं नारायणशब्दस्य रुद्राभिधानत्वसंभवः, तत्परतया क्वाप्यप्रयोगात्।

न तु नारायणादीनां नाम्नामन्यत्र संभवः।
अन्यनाम्नां गतिर्विष्णुरेक एव प्रकीर्तितः ॥

इति मानवे नारायणादिशब्दानां भगवदसाधारणत्वावगमाच्च ॥

10 किञ्च शिवादिशब्दानां भगवदभिधानत्वं हरिवंशे कैलासयात्रायां रुद्रकृतभगवत्स्तोत्रे रुद्रनामदर्शनेन परिसरवर्तिनां विचिकित्सानिराकरणाय रुद्रेणैवोक्तम् ॥

नामानि तव गोविन्द यानि लोके महान्ति च।
तान्येव मम नामानि नात्र कार्या विचारणा ॥ इति ॥

15 लोक्यते अनेनेति व्युत्पत्त्या लोकशब्दः प्रमाणपरः। तथाच यानि तव नामानि त्वदभिधायकतया प्रमाणसिद्धानि महान्ति परत्वगमकानि च भवन्ति ईश्वरमहेश्वरपरमेश्वरमहादेवशिवादीनि तान्येव मम नामानि ॥

ननु शिवशब्दो यदि नारायणपरस्तदा रूढिद्वयपरित्यागप्रसङ्गः, शिवशब्दो हि रुद्रे मङ्गले च रूढः, ततश्च रूढिद्वयानुग्रहाय रुद्रपर एव शिव-
20 शब्द इति चेन्न; तथासति नारायणशब्दे लक्षणाप्रसङ्गात्। नारायणशब्दरूढ्यनुसारेण शिवशब्दस्यैकरूढ्यनुग्रहे न कुत्रापि लक्षणा ॥

ननु नारायणशब्दे रूढित्यागेऽपि योगार्थाङ्गीकारेण रुद्रपरत्वान्न लक्षणेति चेन्न; तथासति नारायणशब्दे नकारस्य णत्वाभावप्रसङ्गात् तन्निमित्तस्य रेफस्य भिन्नपदस्थत्वात्। नहि भिन्नपदत्वेऽपि सुबन्ततया समस्तं
25 पदमेकमेवेति वक्तुं शक्यम्; एकार्थवाचकपदैक्यस्यैव णत्वसूत्रे विवक्षितत्वात्। अन्यथा ग्रामनायको गृहनायक इत्यादावपि णत्वप्रसङ्गात् ॥

किञ्च शिवनारायणशब्दयोर्नारायणशब्दरूढित्यागेन शिवशब्दस्य

रुद्रपरत्वादप्युभयत्र रूढ्यपरित्यागेन शिवशब्दस्य नारायणपरत्वमेव युक्तम् । वस्तुतस्तु शिवादिशब्दानां न रुद्रे रूढिः; योगार्थेनैव प्रयोगोपपत्तौ तत्कल्पकाभावात् । अभिधानकोशस्य प्रसिद्धिप्राचुर्येणाप्युपपत्तेः । नारायणेऽपि तेषां प्रयोगस्य बहुशो दर्शनाच्च । तथाहि पुरुषसूक्ते—

शाश्वतं शिवमच्युतम् ॥ इति 5

यमस्मृतौ—एष वै पुरुषो विष्णुरित्यारभ्य प्रधानं निष्कलः शिवः । इति ।

सभापर्वणि—कृष्णः साक्षात्स्वयं शिवः । इति ।

हरिवंशे षट्चत्वारिंशच्छततमे—

शिवयोर्देवयोस्तत्र हरेश्चैव भवस्य च । इति ॥

त्रिपञ्चाशच्छततमे तत्रैव—विष्णुं पीताम्बरं शिवम् । इति । 10

पञ्चाशच्छततमे—चतुर्भुजं शुभं धीरं निश्चलं सर्वगं शिवम् । इति ।

सप्तपञ्चाशच्छततमे—विष्णुः सर्वेश्वरः शिवः । इति च ॥

एकनवतिशततमे—

वसन्तमम्भोनिधिशायिनं हरिं भक्तप्रियं भक्तजनास्पदं शिवम् ।

चतुर्विंशद्विशततमे— 15

महादेवं महाभागमनन्तं शिवमच्युतम् । इति ॥

शान्तिपर्वणि राजधर्मप्रशंसायां भीष्मः—

लोकनाथ महाबाहो शिव नारायणाच्युत । इति ॥

वाराहे तृतीयेऽध्याये—तत्र गत्वा महाविष्णुः पुराणपुरुषः शिवः । इति ॥

द्वादशाऽध्याये— 20

शिवं सुरूपं परमं महेश्वरं सदा प्रपन्नार्तिहरं धृतश्रियम् । इति ।

पञ्चविंशाध्याये—शिवो नारायणः स्मृतः । इति ।

इतिहाससमुच्चये ॥

तमाहुः पुरुषं केचित्केचिदीश्वरमव्ययम् ।

केचिच्च परमात्मानं केचिच्छिवमनामयम् ॥ इति । 25

हरिवंशे शततमेऽध्याये—विष्णुं सुशकमीशानमिति ।

एकोनपञ्चाशच्छततमे—इत्यादिभिस्तथा देवं विष्णुमीशानमव्ययम् । इति ।

द्विपञ्चाशच्छततमे—तं देवं द्रष्टुमीशानं यतामः साम्प्रतं हरिम् । इति ।
भारतसारसमुच्चये—
आद्यं पुरुषमीशानं सर्वलोकमहेश्वरम् ।
यश्चिन्तयति यो विष्णुं नारायणमनन्यधीः । इति ।
5 यज्ञाग्रहाराध्याये—
प्रापुरादित्यवर्णं तं पुरुषं तमसः परम् ।
बृहन्तं सर्वगं देवमीशानं वरदं प्रभुम् । इति ।
हरिवंशे—
स हि युद्धगतः श्रीमानीशो न स व्यकम्पत ।
10 जहि निद्रां जगद्धातः केशवेश जनार्दन । इति ।
भागवते दशमस्कन्धे द्वादशेऽध्याये—
उत्तराया हतो गर्भः शिवेनाजीवितः पुरा । इति ।
तथा अन्यत्र—रमते भगवानीशः । इति ।

भूयात्स ईशो भगवान् गुरुरिति ।
15 तथाहि भगवानीश आत्मानं सृजते हरिः ॥
मुनिभिः पूजितस्तैस्तु विवेकी हरिरीश्वरः ।
बुभुजे पायसं शौरिरीश्वरः सर्वहृच्छयः ॥

विष्णुपुराणे—नागपर्यङ्कशयने स शेते परमेश्वरः । इति ।
वाराहे—आदिदेवं महादेवम् । इति ॥
20 तृतीयस्कन्धे त्रयोदशाध्याये—
'यस्याहं हृदयावासं स ईशश्च करोति यः' । इति ।
तत्रैव—विरिञ्चिमुख्या उपतस्थुरीश्वरम् ॥ इति ।

अष्टमकन्धे प्रथमाध्याये—"स विश्वकायः पुरुहूत ईशः सत्यं परं ज्योतिरजः पुराणः" ।

25 तथान्यत्र—"रमते भगवानीशः" इति ।
द्वाविंशे—"भूयात्स ईशः परमो गुरुः" इति ।]
नवमस्कन्धे षष्ठे—एकश्चरेद्रहसि चित्तमनन्त ईशे" इति ।

द्वाविंशे—"तथाहि भगवानीश आत्मानं सृजते हरिः ।
मुनिभिः पूजितस्तैस्तु विवेकी हरिरीश्वरः ।"
प्रत्युवाच शुभं वाक्यं देवानां प्रभुरीश्वरः ।
एवं तु स समादिश्य गतोऽन्तर्धानमीश्वरः । इति ।
विंशतितमे—"रुक्मिणी च तथा देवी ददृशे कृष्णमीश्वरम् । इति । 5
एकोनत्रिंशच्छततमे—
"आकर्णपूर्णमाकृष्य जघान हरिरीश्वरः । इति ।
एकोनपञ्चाशच्छततमे—"
तुष्टुवुः पुण्डरीकाक्षं वाग्भिरिष्टाभिरीश्वरम् । इति ।
सप्ततितमे—स्तुत्वा स्थातुं हरिं विष्णुमीश्वरं कमलेक्षणम् । इति । 10
पञ्चसप्ततितमे—अभ्यन्तरं जगन्नाथः प्रविश्य हरिरीश्वरः ।
ततः स्वभवनं विष्णुः प्रविश्य हरिरीश्वरः ॥ इति ।
एकविंशतितमे—कृत्वा केशव ईश्वरः । इति ।
तत्रैव—अथ विद्धो दृढं तेन शरेण हरिरीश्वरः । इति ।
एकादशे—द्विशततमे—अर्चयन्तं जगन्नाथं मनसा विष्णुमीश्वरम् । 15
वधाय हि मनो दध्रे दैत्यस्य हरिरीश्वरः ।
आजहार निजैस्तीक्ष्णैर्मृगेन्द्रो हरिरीश्वरः । इति ।
एकोनपञ्चाशच्छततमे—तथेत्यथाब्रवीद्दैत्यः प्रणम्य हरिमीश्वरम् । इति ।
तत्रैव क्षीरोदध्युत्तरं कूलं जगाम हरिरीश्वरः । इति ।
द्विसप्ततितमे—निश्शेषं दानवबलं चकार हरिरीश्वरः । इति । 20
पञ्चाशच्छततमे—शिवस्त्वं सर्वभूतानामीश्वरोऽसि सदा हरे । इति ।
सभापर्वणि—हिरण्यकशिपुं राजन् जगाम हरिरीश्वरः ।
बुभुजे पायसं शौरिरीश्वरस्सर्वहृच्छयः ।
एष तिष्ठति गोविन्दः पूजितोऽस्माभिरीश्वरः । इति ।
भागवते प्रथमस्कन्धे अष्टमेऽध्याये— 25
"नमस्य पुरुषं चाद्यमीश्वरं प्रकृतेः परम् । इति ।
द्वितीयस्कन्धे अष्टमेऽध्याये—

तमेव पुरुषं यज्ञं तेनैवाजयदीश्वरम् । इति ।

तृतीयस्कन्धे पञ्चमे–"गृहीतोऽनन्यभावेन यत्त्वया हरिरीश्वरः ।" इति ।

विंशेऽध्याये–"यस्य नाभेरभूत्पद्ममन्ववात्सीत्स ईश्वरः ।" इति ।

अन्यत्र एकोनत्रिंशे–"ईश्वरो जीवकलया प्रविष्टो भगवानिति ।"

5 चतुर्थस्कन्धे — एकोनविंशेऽध्याये—

"यत्र यज्ञपतिस्साक्षाद्भगवान् हरिरीश्वरः ।" इति ।

एकोनत्रिंशे—सेव्यते हरिरीश्वरः ।

पञ्चमस्कन्धे चतुर्दशेऽध्याये—

ईश्वरस्य भगवतो विष्णोर्वशवर्तिन्या मायया" इति ।

10 षष्ठस्कन्धे चतुर्थे—"अन्तर्देहेषु भूतानामात्मास्ते हरिरीश्वरः ।" इति ।

पञ्चदशेऽध्याये—"हयमेधेन पुरुषं परमात्मानमीश्वरम् ।

इष्ट्वा नारायणं देवम्" इति ।

सप्तमस्कन्धे षष्ठेऽध्याये—एक एव परो ह्यात्मा भगवानीश्वरोऽव्ययः । इति ।

15 सप्तमेऽध्याये- यदीश्वरे भगवति । हरिस्सर्वेषु भूतेषु भगवानास्त ईश्वरः । क्रियते भक्तिरीश्वरे । वासुदेवे भगवति । अनीहं हरिमीश्वरम् । इति ।

वाराहे चतुर्थाध्याये—

यस्य ब्रह्मा समुत्पन्नो नाभीपङ्कजमध्यतः ।

तस्माच्च ब्रह्मणो रुद्रः स विष्णुः परमेश्वरः । इति ।

20 एकोनसप्ततितमे—

न विष्णोः परतो देवो विद्यते नृपसत्तम ।

ततो देव क्रियायोगात् दृश्यते परमेश्वरः ।] इति ।

नारसिंहपुराणे त्रिंशेऽध्याये—

संस्थाप्य भक्त्या विधिना च पूजयन् स याति साक्षात्परमेश्वरं हरिम् ।
25 इति ।

विष्णुधर्मे—"पूजितस्तु महेश्वरः । हरिर्ददातीह फलं" इति ।

श्रीविष्णुपुराणे प्रथमेंऽशे द्वितीये—

नागपर्यङ्कशयने संशेते परमेश्वरः । इति ।
नवमे—एवं संस्तूयमानस्तु भगवान् शङ्खचक्रधृत् ।
जगाम दर्शनं तेषां मैत्रेय परमेश्वरः । इति ।
सप्तदशे—स विष्णुः परमेश्वरः । इति ।
एकोनविंशे— तं सर्वसाक्षिणं विष्णुं नमस्ये परमेश्वरम् । इति । 5
द्वाविंशे—बिभर्ति पुण्डरीकाक्षं तं देवं परमेश्वरम् । इति ।
पञ्चविंशे प्रथमे— एवं संस्तूयमानस्तु भगवान् परमेश्वरः । इति ।

श्रीवाराहे षष्ठेऽध्याये—
आदिदेवं महादेवं वेदवेदान्तपारगम् । इति ।

हरिवंशे चतुरशीतितमे— 10
महादेवं महाभागमनन्तं शिवमच्युतम् । इति ।

पुराणान्तरे—
अनादिरक्षकोऽनन्तो महादेवो महेश्वरः । इति ।

हरिवंशे त्र्यशीतिद्विशततमे—
तथान्यद्रूपमास्थाय शम्भुर्नारायणोऽव्ययः । इति । 15

सभापर्वणि—
इति नारायणश्शम्भुर्भगवान् जगतः प्रभुः । इति ।

वाराहे सप्तमे—
कलौ घनाभप्रतिमं महेश्वरं गदाधरं प्रणमति यस्सुखं वसेत् । इति ।
द्वादशे—शिवं सुरूपं च महेश्वरं सदा 20
प्रपन्नभक्तार्तिहरं वृतश्रियम् । इति ।

सूर्यसिद्धान्ते गोलाध्याये—"सोयं नारायणो देवः" इत्यारभ्य "पाति चायं महेश्वरः" इति ।

श्रीभगवते सप्तमस्कन्धे दशमेऽध्याये—
वरं वरय वै तन्मे वरदेश महेश्वर । इति । 25

श्रीविष्णुधर्मोत्तरे षष्ठे—
पूजाफलं महेशस्य देवदेवस्य शार्ङ्गिणः । इति ।

हरिवंशे सप्तषष्टिद्विशततमे—

"हिरण्यगर्भ हिरण्यनाभ" इति ।

सभापर्वणि—

पुरा नारायणो देवस्स्वयम्भूः प्रपितामहः । इति ।

5 तस्मात् शिवेशेशानेश्वरपरमेश्वरमहादेवशम्भ्वादिशब्दानां हिरण्यगर्भस्वयंभ्वादिशब्दानां च नारायणपरताया बहुप्रमाणसिद्धत्वात् तदङ्कितानि सर्वाण्यप्युपनिषद्गतानि नारायणवाक्यानुसारेण योगरूढिगौणवृत्तिभिः नारायणपरतया निर्व्यूढानि ॥

यदि चाभिधानकोशानुसारेण शिवादिशब्दानां रुद्रपरत्वमिष्यते तदा 10 प्रसिद्धरुद्रपरत्वमेव वाच्यम् । तस्य जगत्कारणत्वादिकमनुपपन्नम् । तथाच प्रसिद्धस्वारस्यभङ्गेन ततोऽतिरिक्तपरत्वे वक्तव्ये नारायणपरत्वमेव युक्तम्; श्रुत्यन्तरानुसरणपरित्यागेन नारायणातिरिक्तपरत्वकल्पने मानाभावात् ॥

किञ्च एतदुपक्रमप्रथमखण्डानुरोधेनापि शिवशब्दो नारायणपरः । तत्र हि 15 ब्रह्मवादिनो वदन्ति किं कारणं ब्रह्म कुतः स्म जाता इत्युपक्रम्य "कालस्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम्" इति पुरुषशब्देन कारणब्रह्मभूतदेवताविशेषो निर्धारितः । चिन्त्यशब्दस्य निर्धार्यपरत्वात् तच्चिन्त्यमित्यादौ तथा दर्शनात् । तत्र चिन्त्यशब्दस्य व्यतिरेकलक्षणया निर्धारणपरत्वात् दूष्यपक्षनिर्धारणपरत्वानुपपत्तेः । प्रकृते चान्व- 20 यनिर्धारणपरत्वे बाधकाभावात् । भूतानीत्यन्तेन कार्यजातं, योनिशब्देनोपादानमभिधाय पुरुष इति तदभेदप्रतिपादनेन पुरुषस्य जगदुपादानत्वं हि निर्धारितम् । पुरुषश्च नारायणः, पुरुषसूक्तप्रत्यभिज्ञानात् । श्वेताश्वतरस्य सर्वस्यापि भगवत्परत्वं वेदान्तविजये तद्वाक्यस्वारस्यानुरोधेन प्रपञ्चितम् ॥

ननु रुद्राभिधानचिह्नितवाक्यानां भगवदभिधानचिह्नितवाक्यानां चावि- 25 रोधायान्यतरस्यान्यतरपरत्वेन वर्णनीये अनन्यपरश्वेताश्वतरवाक्यस्य रुद्रपरत्वे निर्व्यूढे अन्यपरनारायणादिपदचिह्नितवाक्यानां लक्षणया रुद्रपरत्वमेव

युक्तमिति चेत्, न; लक्षणाभावेनाविरोधसंभवे तदभ्युपगमेनाविरोधवर्णनस्य जघन्यत्वात्। शिवादिशब्दानां नारायणपरत्वे हि न कुत्रापि लक्षणेत्युक्तम् ॥

किञ्च श्वेताश्वतरप्रथमखण्डोपसंहारे भूतानि योनिः पुरुष इति चिन्त्यमिति पुरुषशब्देन पुरुषसूक्तप्रत्यभिज्ञापकेन देवताविशेषनिर्धारणं कृतम्, कथं श्वेताश्वतरस्य रुद्रपरता कथं वा तदनुरोधेन नारायणादिपदानां लक्ष- 5 णया रुद्रपरत्वं (नारायणादिपदचिह्नितवाक्यानां अनन्यपरत्वं) तत्तद्वाक्यपर्यालोचनया वेदान्तविजये प्रपञ्चितम् । तथा अथर्वशिखाप्रभृत्युपनिषदन्तराणामपि भगवत्परत्वमुपवर्णितम् । तत्तु विस्तरभयान्नेहोपन्यस्यते । तस्मात् सर्वोपनिषदां भगवत्परत्वे स्थिते दहराकाशो भगवानेव । अत्र तस्मिन्यदन्तरित्यत्र यच्छब्देन दहराकाशस्तदन्तर्वर्तिगुणजातं च परामृ- 10 श्यते । तथाच यो दहराकाशः यच्च तदन्तर्वर्तीत्यर्थः ॥

ननु कथं यच्छब्दैकशेषः कथं वा एकवचनान्तता, नच "नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्या"मिति सूत्रेण तदुभयसिद्धिरिति वाच्यम्; परत्वेन "त्यदादीनि सर्वैर्नित्य"मिति सूत्रस्यैव प्रवृत्त्या नपुंसकसूत्राप्रवृत्तेः । नच तेनैवैकशेषोऽस्त्विति वाच्यम्; तथाप्येकवचनान्तत्वासिद्धेः, मैवम्; 15 "त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानि भवन्ती"ति त्यदादिसूत्रवार्तिकेन तत्सूत्रविषयेऽपि नपुंसकसूत्रप्रवृत्त्युपगमेनोभयसिद्धेः ॥

ननु कथमस्य वार्तिकस्य तद्ज्ञापकत्वमिति चेदुच्यते—न हीदं वार्तिकं विधायकम्; तथात्वे त्यदादितः शेषे कृते तत्सूत्रविषये यत्पुंलिङ्गं वचनं च भवति तत्सूत्रविषये यन्नपुंसकं लिङ्गं वचनं च भवतीति वार्ति- 20 कार्थः स्यात् । तथाच स च देवदत्तौ च ते, स च कुण्डले च तानीति द्विवचनमपि प्राप्नोति । स च कुण्डले च तदिति रूपम्, तद्दर्शनीयं तत्तिष्ठतीति सुबन्ततिङन्तयोरेकवचनं च न सिध्यतीति । तथा चेदं वार्तिकमनुवादकं सत् त्यदादिविषयेऽपि नपुंसकमित्यादिसूत्रप्रवृत्तिं ज्ञापयति । एवंचानिष्टं न प्राप्नोति इष्टं च प्राप्नोति एकवदिति एकवद्भावविधानात् ॥ 25

ननु यदि स च कुण्डले च तदिति रूपमिष्टं स्यात् तदा तत्सिध्यर्थं वचनग्रहणस्यैवं व्याख्यानं स्यात् । तद्रूपस्येष्टत्वमेव कुत इति चेत् वचन-

ग्रहणसामर्थ्यादिति ब्रूमः । अन्यथा वचनग्रहणमनर्थकं स्यात् । एतादृश-
प्रयोग इष्ट इति भाष्यवाक्येनाप्यवगम्यते । इति । एवं हि भाष्यम्—
लिङ्गभेदाविवक्षायां लिङ्गसामान्यं नपुंसकलिङ्गं विवक्षितम् । तत्र सामा-
न्यविवक्षायामेकवचनं व्यक्तिविवक्षायां द्विवचनबहुवचने इति । एतदेवा-
5 भिप्रेत्य समनुगृहीतं महाचार्यैः—"त्यदादीनि सर्वैर्नित्य"मिति पुंलिङ्गनपुं-
सकलिङ्गयोरेकशेषः "नपुंसकमनपुंसकेनैकवच्चान्यतरस्या"मिति नपुंसका-
न्तत्वमेकवचनान्तत्वं चेति ॥

अथवा मण्डूकवृत्त्या नपुंसकसूत्रं त्यदादिसूत्रे अनुवर्तते । तथाच त्यदा-
दिसूत्रेणानिर्धारितैकशेषः नपुंसकसूत्रेणैकवद्भाव इति वार्तिकाभिप्राय
10 इत्याचार्याभिप्रायः ।

ननु यच्छब्देन दहराकाशान्तर्वर्तिनमेव परामृश्य तदन्वेष्टव्यमिति
तस्यैवोपासनविधिसंभवे किमेकशेषसूत्रानुसरणप्रयासेनेतिचेन्न; "अथ य
इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामा"निति उभयोपासनानुवा-
दवाक्यानुसारेण उभयोपासनविधानस्यावश्यकतया यच्छब्दैकशेषस्याव-
15 र्जनीयत्वात् । एवं तच्छब्देऽपि । अन्वेष्टव्यपदे तु नपुंसकसूत्रेणैव एकशेषादिकं
द्रष्टव्यम् ॥

वस्तुतस्तु—तस्मिन् यदन्तः तस्मिन् दहराकाशे अन्तर्वर्ति गुणजातं यत्त-
दन्वेष्टव्यमित्यर्थः । दहराकाशान्तर्वर्तित्वेन गुणजातमुपास्यमिति यावत् ।
तथाच नैकशेषसूत्रानुसरणप्रयासोऽपि । यद्यप्येवमुपसर्जनतया आत्मोपा-
20 सनसिद्धावपि न प्राधान्येन तत्सिद्धिः, तथाप्यर्थतः प्राधान्यमात्मन एवेति
तत्सिद्धिः ॥

अथ वा "य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामा"निति वा-
क्यानुसारेणान्वेष्टव्यपदस्य लिङ्गव्यत्ययेनावृत्त्या दहराकाशोऽन्वेष्टव्यः तदन्त-
र्वर्ति यद्गुणजातं तदन्वेष्टव्यमित्यर्थः । एवं च न दहराकाशस्य प्राधान्य-
25 हानिरिति ॥

एवं शाण्डिल्यविद्यापि दहराकाशपरतया भगवत्परा—

दह्रं विपापं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम् ।
तत्रापि दह्रं गगनं विशोकस्तदस्मिन्यदन्तस्तदुपासितव्यम् ॥

इत्यपि भगवत एव हृदयाकाशान्तर्वर्तित्वमुपदिशति ॥

यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।
तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ॥ 5

इत्युत्तरवाक्यानुरोधात् । तस्मिन् यदन्तरिति किमुच्यत इत्याकाङ्क्षायां अनेन वाक्येन देवतानिर्धारणं क्रियते य अकारवाच्यः स एवेति । अकारवाच्यश्च योगरूढिभ्यां भगवानेव । तस्य प्रकृतिलीनस्येति पदाभ्यामकार एवोच्यते । प्रकृतिभूते अकारे लीनस्य प्रणवस्येति हि तदर्थः, प्रकृतिभूताकारस्येति यावत् । अकारस्य प्रणवप्रकृतित्वं च "अकारो वै 10 सर्वा वाक्" ।

समस्तशब्दमूलत्वादकारस्य स्वभावतः ।

इत्यादिष्ववगतम् । अकारस्य भगवति रूढत्वं च अकारो विष्णुवाचक इति (भगवतो नारायणस्य प्रथमाभिधानं)इत्यादिना अवगतम् । अव रक्षण इति धातूत्पन्नाकारयोगार्थोऽपि न भगवतोऽन्यत्र संभवति । 15 त्रिमूर्तिषु भगवत एव—

नहि पालनसामर्थ्यमृते सर्वेश्वरं हरिम् ।

इत्यादिना रक्षकत्वप्रसिद्धेः । प्रकरणानुगुणं चास्य भगवत्परत्वम् ॥

पूर्वत्र अम्भस्यनुवाकेन उत्तरत्र ऋतं सत्यमित्यादिना च भगवत एव प्रकृतत्वात् । यद्वेदादावित्यादिवाक्यं चोपबृंहितं पाद्मे 20

यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रकीर्तितः ।
तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ॥
योऽसावकारवाच्यो वै विष्णुर्नारायणो हरिः ।
स एव पुरुषो नित्यः परमात्मा महेश्वरः ॥
तस्यांशभूतमैश्वर्यं यस्मिन् कस्मिन् हि वर्तते । 25
तस्मिन्नीश्वरशब्दोऽपि प्रोच्यते मुनिभिस्तथा ॥

निरुपाधीश्वरत्वं तु वासुदेवे प्रतिष्ठितम् ।
आत्मेश्वर इति प्रोक्तो वेदवादैः सनातनैः ॥
तस्मान्महेश्वरत्वं तु वासुदेवे प्रतिष्ठितम् ।
विभूतिद्वयमैश्वर्यं तस्यैव सकलात्मनः ॥
5 श्रीभूनीलापतिर्योऽसावीश्वरः समुदाहृतः ।
तस्मात्सर्वेश्वरत्वं तु वासुदेवे प्रतिष्ठितम् ॥
योऽसौ यज्ञेश्वरो यज्ञो यज्ञकृद्यज्ञभुग्विभुः ।
यज्ञकृद्यज्ञपुरुषस्स एव परमेश्वरः ॥ इत्यादिना ।

अत्र कश्चिदाह—यद्वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः (प्रति-
10 पाद्यः) लिङ्गव्यत्ययश्छान्दसः । तस्य प्रकृतिलीनस्य अविद्यायां प्रतिबिम्बितस्य प्रकृतिविशिष्टस्य भोक्तुः परः प्रधानः महेश्वरो नियन्तेति । तन्न; उदाहृतपाञ्चवचनविरोधात् । निर्विशेषचिन्मात्रस्य स्वाभाविकाभेदेन विशिष्टनियमनासंभवाच्च । भेदे चातिरिक्तजीववादप्रसङ्गेन अपसिद्धान्तापातात् । विस्तरस्तु अद्वैतविद्याविजयोपन्यासे द्रष्टव्यः ॥

15 यदप्याह—अकारो वेदादौ प्रोक्तः स्वरः स एव तदन्ते प्रतिष्ठितः । समानं परमित्यत्र उपान्त्यः अकारः तस्य प्रकृतिः विष्णुः "वासुदेवः परा प्रकृति"रिति श्रुतेः । तस्मिन् लीनस्य वाच्यवाचकभावेनाभेदं प्राप्तस्य विष्णुरूपस्येति यावत् तस्मात्परो यः स महेश्वर इति । तन्न; अकारस्य वेदान्तप्रतिष्ठितत्वाभावात् समानं परमिति मकारस्यैवान्तप्रतिष्ठितत्वात्
20 अग्निमीळे पुरोहितं—योनिस्समुद्रो बन्धुः समानं परमित्येषु श्रुतानामकारोकारमकाराणां वेदादिमध्यान्तवर्णत्वप्रसिद्धेः ॥

नच स्वरान्तप्रतिष्ठितत्वं विवक्षितम्, ततः परं स्वराभावादिति वाच्यम्; "अचोऽन्त्यादिटी"त्यादिवत् सजातीयनिर्देशाभावात् । प्रकृतिलीनस्य तस्याकारस्य यो वाच्यः स महेश्वर इत्यर्थपर्यवसानेनाकारवाच्यस्यैव परमे-
25 श्वरत्वसिद्धेश्च । यच्चोक्तं यद्वेदादाविति मन्त्रस्य यजुर्वेदपठितत्वात् वेदशब्देन यजुर्वेद एवोच्यते । तस्यादाविषेत्वेति स्वर इकारः प्रोक्तः तदन्तेऽप्र-

वणतीत्यत्र[1] प्रतिष्ठितः तस्यैकारस्य प्रकृतौ श्रियां लीनस्य वाचकतया दैर्घ्यापन्नस्य ईकारस्य तत्र श्रीरभवदिति प्रक्रम्य "मूलप्रकृतिरव्यया" इति श्रियां प्रकृतिशब्दप्रयोगात्। षष्ठी चात्र पञ्चम्यर्थे तस्मादिकारात्पर उत्तर उकारः स महेश्वरः तद्वाच्यः परमेश्वर इत्यर्थः। अभेदोपचारस्तु वाच्यवाचकभावसंबन्धादिति, तदप्ययुक्तम्। अस्य मन्त्रस्य यजुर्वेदपठितत्वेऽपि वेदादौ वेदान्ते 5 चेति सामान्यवाचिवेदशब्दस्य यजुर्वेदपरत्वे स्वारस्यभङ्गात्। अतः सिद्धं सर्वोपनिषदां भगवत्परत्वम्॥

इति देवतान्तरस्य दहरविद्यावेद्यत्वभङ्गः चतुर्थः॥

एवं भगवतोऽन्यस्य परविद्यावगम्यता।
निराकृताऽन्तरादित्यविद्यावेद्यत्वमप्यसत्॥ 10
तथाक्षिविद्यादहरविद्यावेद्यत्वमेव न।
शाण्डिल्यविद्यावेद्यत्वं नास्तीति स्थापितं ततः॥
सर्वोपनिषदां वाच्यमुत्तमं ब्रह्मवेदिनः।
वदन्त्यखिलवाक्यैककण्ठ्यान्नारायणं परम्॥

इति श्रीवाधूलकुलतिलकश्रीमहाचार्यचरणारविन्दसेवा- 15
समधिगतसकलशास्त्रहृदयेन श्रीमद्वाधूलसुन्दर-
जामातृदेशिकसूनुना सुदर्शनगुरुणा विर-
चितायां विजयमङ्गलदीपिकायां ब्रह्म-
विद्याविजयोपन्यासो द्वितीयः
संपूर्णः। 20

---

१ इव तपतीत्यत्र।

श्रीः

श्रीमते रामानुजाय नमः ॥

# अथ सद्विद्याविजयोपन्यासस्तृतीयः

## तत्रायमाद्यो भावरूपाज्ञानप्रमाणभङ्गः प्रारभ्यते ।

5

अखिलस्य प्रपञ्चस्य कल्पितत्वं न युज्यते ।
अविद्याकल्पकाभावान्मिथ्यात्वं न ततो भवेत् ॥

यत्तावदुच्यते—ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य प्रपञ्चस्याविद्यापरिकल्पितत्वेन मिथ्यात्वमिति—तत्रोच्यते—

10 मानाभावेन कल्पकाविद्याभावान्नाविद्याकल्पितत्वं प्रपञ्चस्य । नच मिथ्यात्वानुपपत्त्यैवाविद्याकल्पनम्, तथा सति मिथ्यात्वसिद्धावविद्याकल्पनं तत्कल्पने च तत्कल्पितत्वेन प्रपञ्चस्य मिथ्यात्वसिद्धिरित्यन्योन्याश्रयात् । न चानुमानादिना तत्सिद्धावन्योन्याश्रयानवकाश इति वाच्यम्; तस्य[1] निरसिष्यमाणत्वात् ।

15 नन्वहमज्ञ इत्यादि प्रत्यक्षमेव भावरूपाज्ञाने प्रमाणम्, न चास्य ज्ञानाभावविषयत्वेनान्यथासिद्धिः; अभावज्ञानकारणयोः धर्मिज्ञानप्रतियोगिज्ञानयोः सत्त्वेन तदभावासंभवादिति चेत्, न; भावरूपाज्ञानस्यापि किं सकलज्ञानविरोधित्वेन प्रतीतिः सकलविषयत्वेन वा । नोभयम्; धर्मिज्ञानप्रतियोगिज्ञानयोः सत्त्वेनोभयथापि प्रतीत्यसंभवात् । नचोभयोरौदासीन्येनाज्ञानत्वेनैव भावरूपाज्ञानं प्रतीयत इति वाच्यम्; ज्ञानविरोधित्वातिरिक्तस्याज्ञानत्वस्यासिद्धेः । सिद्धौ वा सामान्यविशेषौदासीन्येन ज्ञानाभावत्वेनाभाव एव प्रतीयताम्, किमतिरिक्ताज्ञानकल्पनया । एतेन कृत्स्नौदासीन्येन[2] ज्ञानविरोधित्वेन भावरूपाज्ञानं भासत इत्यपास्तम् ॥

(20 at line beginning "ज्ञानत्वेनैव")

ननु—एवमप्यहमज्ञ इत्यादिप्रतीतेर्भावरूपाज्ञानविषयत्वे लाघवम् ।
25 भावाभावयोर्मध्ये भावस्य लघुत्वादिति चेत्, हन्तैवमघटं भूतलमित्या-

१ ज्ञानविरोधित्वातिरिक्तस्य निराकरिष्यमाणत्वात् । २ कृत्स्नैकोदासीन्येन ।

दिप्रतीतेरपि लाघवेन भावरूपाघटत्वादिविषयत्वप्रसङ्गेनाभावमात्रोच्छेद-प्रसङ्गात् , सिद्धान्ते भावान्तरस्यैवाभावतया अहमज्ञ इत्यादिप्रतीतेरधिकरणतद्धर्मविषयत्वोपपत्तौ अतिरिक्तभावरूपाज्ञानकल्पने गौरवाच्च, सावयवत्वपरिणामित्वाद्यनेकधर्मकल्पनाप्रसङ्गाच्च । एतेन त्वदुक्तमर्थं न जानामि शास्त्रार्थं न जानामि राजवृत्तान्तं न जानामि—इत्यादिप्रतीतिरपि विशेषज्ञा- 5 नाभावविषयत्वेन व्याख्याता । अन्यथा सामान्यतः शास्त्रार्थादिज्ञानसत्त्वेन तद्विरोधेन भावरूपाज्ञानस्याप्यसंभवात् । किं बहुना यादृशं ज्ञानं भावरूपाज्ञान-विरोधि तादृशज्ञानाभाव एवाहमज्ञ इत्यादिप्रतीतेर्विषय इति किमनुपपन्नम् ॥

किञ्च मम शास्त्रार्थज्ञानसामग्री नास्तीत्यादिप्रतीतौ तव का गतिः ? सामान्यतः शास्त्रार्थज्ञानसामग्रीसत्त्वेन तदभावविषयत्वासंभवात् । यदि 10 तत्रापि शास्त्रार्थज्ञानसामग्री भावरूपाऽङ्गीक्रियते तदा कामं भावरूपाज्ञान-मप्यङ्गीक्रियताम् ॥

अपिच त्वया शास्त्रार्थ उपदेष्टव्य इति केनचित् पृष्टे अधिकाराभावान्न तव शास्त्रार्थ उपदेष्टव्यः विशिष्यापि नोपदेष्टव्य इत्यादौ भावरूपेणानुप-देशेन विना कथं निर्वाहः । तत्र शास्त्रार्थत्वेन तद्विशेषत्वेन च उपदेश- 15 सत्त्वेन सामान्यतो विशेषतो वा उपदेशाभावासंभवात् इत्येवमादिर्दुस्तरा प्रतिबन्दी ॥

वस्तुतस्तु अभावज्ञानकारणीभूतं धर्मिज्ञानादिकं साक्षिणैव संभवति । साक्षिभूतज्ञानेनाज्ञानवत् ज्ञानाभावस्याप्यविरोधात् । किञ्च अज्ञोऽहं न जानामीति ज्ञानाभावत्वेनैव प्रतीतेर्न भावरूपाज्ञानसिद्धिः । 20

यत्तु अधर्म इत्यादिवत् ज्ञानविरोधित्वेनैव प्रतीतिः नाभावत्वेन, अज्ञानमिति नञः समासानुपपत्तेरिति, तदसत् । अद्वेषः अगमनमभोजनमबाधः असिद्धिरित्यादिप्रयोगाणां लौकिकपरीक्षकैः व्यवह्रियमाणानामुच्छेदप्रसङ्गात् । अत एव कार्यानुत्पादप्रयोजकमित्यादि व्यवहरन्ति ॥

किञ्च नास्ति न करोति नेच्छतीत्यादौ आख्यातान्वितनञः अभाव- 25 वाचित्वदर्शनेन न जानामीत्यत्रापि नञः अभाववाचित्वध्रौव्ये अहमज्ञः

मय्यज्ञानमित्यादावपि नामान्वितत्वेन विरोधवाचिना नञा ज्ञानविरोधित्वेन ज्ञानाभाव एव बोध्यते। क्लृप्तत्वेनाभावविषयत्वस्यैवौचित्यात्। किञ्च अहमज्ञ इत्यादिप्रतीत्याऽहमर्थगताज्ञानमेव सिध्येन्न ब्रह्मगताज्ञानमिति कथं ब्रह्माविद्यायां जीवाविद्यायां वा प्रतीतिरियं प्रमाणं भवेत्। अपिच प्रकृष्ट-
5 प्रकाशश्चन्द्र इत्युपदेशात् प्राग्दृष्टेऽपि प्रकृष्टप्रकाशे चन्द्रे चन्द्रं न जानामीत्यनुभवो न भावरूपाज्ञानविषयः संभवति। चन्द्रप्रत्यक्षसत्त्वेन तदज्ञानासंभवात् अनङ्गीकाराच्च। तस्मात् ज्ञानविशेषाभाव एव तद्विषय इति स्वीकार्यमित्यन्यत्र सर्वत्राप्यज्ञानानुभवे स एव विषयोऽस्तु॥

नन्वेवं सति अज्ञो घटो न जानाति घट इत्यादिप्रयोगोऽपि साधुः
10 स्यात्, नचाप्रयोगादेवाप्रयोग इति वाच्यम्; नियामकान्तरसंभवे गत्यभावस्वीकारस्य तस्य जघन्यत्वादिति चेत्—न; अर्थसत्त्वादनुशासनविरोधाभावाच्च तत्साधुताया इष्टत्वात्। अप्रयोगस्त्वप्रसङ्गादेव, निषेधस्य प्रसङ्गपूर्वकत्वात्। तदुक्तं महाचार्यैः—

**घटो नेच्छति न द्वेष्टि न दुःख्यति न सुख्यति।**
15 **न गच्छति न जागर्ति न शेते न च भक्षते।**
**इत्यादावप्यसाधुत्ववस्त्वभाव प्रसङ्गतः।**
**अप्रसङ्गान्निषेधस्य व्यतिरेकोपपादने।**
**घटेऽपि धीनिषेधो न तथैवेति विभावय।**
**जानाति घट इत्येवं विप्रलम्भेन चोदितः।**
20 **प्रयुङ्क्ते च न जानाति घट इत्येव संसदि॥** इति।

नन्वेवमहमज्ञो न जानामीत्यादौ अज्ञानं तावदनुभूयते; तच्च न ज्ञानाभावः; विषयविशेषानुल्लेखात्, किन्तु अधर्मिष्ठोऽधर्म इत्यादौ [1]धर्मविरोध्यधर्मान्तरमिव ज्ञानविरोधिभावान्तरमेव। तच्च ज्ञानं ब्रह्मतत्त्वज्ञानमिति न विद्यमानज्ञानेन विरोधः। तच्च ज्ञानं निर्विषयमेव ब्रह्मविषयं वा निष्प्र-
25 तियोगिकं च, अभावस्तु सप्रतियोगिक इति न निष्प्रतियोगिकाज्ञानानुभवविषयः। नच ज्ञानस्य प्रतियोगिनोऽभानात् निष्प्रतियोगिकाज्ञानानु-

---
१ धर्मविरोधिभावान्तरमिव। तच्च ज्ञानं ब्रह्मतत्व।

भवोऽयमिति वाच्यम्; सर्वत्र ज्ञानाभावानुभवे प्रतियोगिभूतज्ञानस्य विषयविशेषालिङ्गितत्वभाननियमेन प्रकृते तदभावेन ज्ञानस्य प्रतियोगित्वेन भानासिद्धेः । न ह्यधर्म इत्यादौ धर्मस्य प्रतियोगित्वेन भानमस्ति । नहि धर्मविरोधित्वमधर्मत्वम्, किन्तु जातिविशेष एव । तद्वदिहापि इति निर्विषयं निष्प्रतियोगिकं ज्ञानाविरोधि भावरूपाज्ञानं सिध्यति ॥ 5

नचैवमप्यहमज्ञ इति प्रतीत्या न ब्रह्मगताज्ञानसिद्धिः जीवगताज्ञानसिद्धिर्वा, भवन्मते[1] अन्तःकरणस्यैवाहमर्थत्वादिति वाच्यम्; चैतन्यगतस्यैवाज्ञानस्य चैतन्याभेदाध्यासेन अन्तःकरणनिष्ठत्वेन प्रतीत्या जीवब्रह्मगताज्ञानसिध्यविरोधात् । न च ज्ञानाविरोध्यज्ञानस्य तत्त्वज्ञानप्रतिबन्धकत्वानुपपत्तिरिति वाच्यम्; वैषयिकज्ञानाविरोधिदेहसंबन्धस्य देहातिरिक्ततत्त्व- 10 ज्ञानप्रतिबन्धकत्ववत् ज्ञानान्तराविरोध्यज्ञानस्य ब्रह्मज्ञानप्रतिबंधकत्वे विरोधाभावात् इति ॥

अत्र ब्रूमः—एवं हि तत्त्वज्ञानोत्पत्तिप्रतिबन्धकं वैषयिकज्ञानजनकं निष्प्रतियोगिकं किञ्चिद्भावरूपमङ्गीकार्यमित्युक्तं भवति । तच्चास्माकं प्रकृतिः युष्माकं त्वज्ञानमिति नाम्नि विवादो नार्थ इति पर्यवसन्नो 15 विवादः । तदपि नाहमज्ञ इत्यादि प्रतीत्या सिध्यति, अज्ञानस्य प्रकृतेर्वा अहमर्थान्तःकरणगतत्वासंभवात् ॥

नच चैतन्याभेदाध्यासेन तद्गतमेवाज्ञानमन्तःकरणवृत्तितया भासत इति वाच्यम्; अन्तःकरणगतत्वेनाज्ञानानुभवस्य चैतन्यगताविद्यायामप्रमाणत्वात् तर्हि तादृशाध्यासनिमित्तकत्वे मानाभावाच्च । नचाज्ञानानुभव एव तत्र 20 प्रमाणमिति वाच्यम्; अज्ञानानुभवस्य ज्ञानाभावविषयत्वेनाप्युपपत्तेः । ज्ञानाभावस्यान्तःकरणवृत्तित्वसंभवेन चैतन्याभेदाध्यासनिमित्तत्वकल्पनानवकाशात् । नच प्रतियोगिभूतज्ञानस्य सविषयकत्वेन विषयविशेषभाननियमप्रसङ्ग इति वाच्यम्; ममानिच्छा अद्वेष इत्यादौ प्रतियोगिभूतयोः सविषयकयोः द्वेषेच्छयोरिव विषयविशेषाभानेऽपि प्रतियोगित्वेन भाने विरो- 25

---

[1] भवन्मते—इति पदं नास्ति ।

धाभावात् । किञ्चैवमन्योन्याश्रयः सिद्धे ह्यज्ञानस्य भावत्वेऽन्तःकरणस्य तदाश्रयत्वानुपपत्त्या चैतन्याभेदाध्यासनिमित्तत्वकल्पनं तत्कल्पने हि भावरूपाज्ञानानुभवसंभवः, अन्यथा अन्तःकरणस्य तदाश्रयत्वविरोधादिति ॥

किञ्चान्तःकरणाज्ञानयोः ब्रह्मण्यध्यस्तत्वेन ब्रह्माभेदाध्यासाविशेषात् 5 अन्तःकरणस्य ज्ञानवृत्तित्वेन मानप्रसङ्गो दुर्वारः, चैतन्याभिन्नान्तःकरणस्य चैतन्याध्यस्ताज्ञानाश्रयत्ववत् चैतन्याभिन्नाज्ञानस्य चैतन्याध्यस्तान्तःकरणाश्रयत्वस्याप्यविरोधात् । नचान्तःकरणावच्छिन्नचैतन्यमेवाहमर्थ इति तद्वृत्तित्वेनाज्ञानानुभवाविरोध इति वाच्यम्; अन्तःकरणावच्छिन्न चैतन्यवृत्तित्वं हि किमुभयवृत्तित्वं अन्तःकरणमात्रवृत्तित्वं चैतन्य-10 मात्रवृत्तित्वं वा । नाद्यः; चैतन्यमात्रवृत्त्यज्ञानस्य अन्तःकरणवृत्तित्वे बाधात् । अत एव न द्वितीयः । नापि तृतीयः; अध्यस्ताधिष्ठानयोराश्रयाश्रयिभावप्रतीतिविरोधात् । अन्यथा शुक्ताविदं रजतमितिवत् प्रतीत्यापत्तेः । तस्मादहमज्ञ इत्यादि प्रतीतेर्ज्ञानाभाव एव विषयो न भावरूपाज्ञानम् ।

ननु ज्ञानेनाज्ञानं निवृत्तमिति सर्वलोकव्यवहारात् 'ज्ञानेन तु तदज्ञानं 15 येषां नाशितमात्मनः' इति भगवद्गीतावचनाच्च ज्ञाननिवर्त्यत्वं तावदज्ञानस्य सिद्धम्; नह्यभावस्य ज्ञाननिवर्त्यत्वसंभवः, ज्ञाननिवर्त्यत्वं हि ज्ञानजन्यविनाशप्रतियोगित्वम्, नचाभावे तदस्तीति चेन्न; आलोकेनान्धकारो निवृत्तः दारिद्र्यं धनागमेन निवृत्तमित्यादिवदुपपत्तेः । न हि आलोकनिवर्त्योऽन्धकारो भावः धनागमनिवर्त्यं दारिद्र्यं वा भावरूपं किञ्चिदस्ति । 20 किंत्वालोकधनयोरभावावेव । तृतीया च रामेण दशरथः पुत्री, अपरोक्षज्ञानेन घटो ज्ञात इत्यादिवत् प्रयोजकत्वमात्राभिप्रायेण । गीतावचनं तु कर्मविषयम् मिथ्याज्ञानविषयं वा । अत एव परोक्षज्ञानेनाप्यज्ञानं निवृत्तमिति व्यवहारः ॥

किञ्चाहमज्ञ इत्यादि ज्ञानं न प्रत्यक्षम्; इन्द्रियाजन्यत्वात् । इन्द्रियं हि 25 आन्तरं वा बाह्यं वा । नाद्यः; प्रमाणान्तरसहकारिणो मनसः प्रमाणत्वाभावस्य भवतैव बहुधा प्रपञ्चितत्वात् । न द्वितीयः; चक्षुर्जन्यत्वे तस्यालोकापेक्षा नियमेनान्धकारस्थपुरुषस्य तादृशज्ञानानुत्पत्तिप्रसङ्गात् । इन्द्रियान्तराणां

नियतविषयत्वेन तज्जन्यत्वस्यानवकाशात् । नाप्यनुमितिरूपः; भावरूपा-
ज्ञानव्याप्यस्य लिङ्गस्य कुत्रचित् व्याप्यत्वेनाग्रहणात् । तस्मादहमज्ञ इति
प्रतीत्या न भावरूपाज्ञानसिद्धिः ॥

नाप्येतावन्तं कालं न किञ्चिदवेदिषमिति सुप्तोत्थितपरामर्शेनापि भाव-
रूपाज्ञानसिद्धिः; तस्यापि ज्ञानाभावविषयत्वेनोपपत्तेः, साक्षिणा भावरूपा- 5
ज्ञानस्येव ज्ञानाभावस्यापि भानसंभवात् । साक्षिभूतज्ञानाविरोधस्तूभयो-
रप्यविशिष्टः । ज्ञानाभावश्च न ज्ञानत्वावच्छिन्नज्ञानाभावः; येन तद-
संभवः, किन्तु अविशेष्य(क)[1]विशेषप्रकारकज्ञानाभावः, सर्वत्राज्ञानानुभवे
तद्विषयत्वस्य दर्शितत्वात् ॥

किञ्च सुषुप्तिकाले लयाङ्गीकारात् कथमन्तःकरणाश्रयतया अज्ञानानु- 10
भवः, कथं वा तत्प्रभवः सुप्तोत्थितस्य स्वात्मनि परामर्शः, कथं वा एता-
वन्तं कालं न किञ्चिदवेदिषमिति सुषुप्तिकालाधिकरणत्वेनाज्ञानपरामर्शः ।
सुषुप्तिकालमपि नावेदिषमिति सुषुप्तिकालाज्ञानपरामर्शेन सुषुप्तिकाले तद-
धिकरणाज्ञानानुभवासंभवात् । यदि सुषुप्तिकालाधिकरणकाज्ञानपरामर्शः
अनुमितिरूपः, तदा ज्ञानाभावपरामर्श एव स्यात्, तद्व्याप्यहेतूनामेव तद्व्या- 15
प्यत्वेन ग्रहणात् ॥

किञ्च बहुकालं घटमनुभूय विस्मृतवतः एतावन्तं कालं घटं नावेदिष-
मिति हि ज्ञानं दृश्यते । नचेदमज्ञानपरामर्शो भवितुमर्हति, घटानुभव-
काले घटाज्ञानासंभवात् । तथाच तत्रानुमानिकपरामर्श एव वाच्य इति
अन्यत्रापि तथैवास्तु, किं सौषुप्तिकाज्ञानानुभवकल्पनया ॥ 20

किञ्च सुषुप्तिकाले अज्ञानानुभवोऽप्यनुपपन्नः; सुप्तोत्थितस्य एतावन्तं
कालमहमज्ञ इत्यत्रापि नावेदिषमिति विरुद्धपरामर्शस्यानुभवसिद्धत्वात् ।
तस्मादानुमानिक एवायं परामर्शः । सच ज्ञानाभावविषयः । तद्व्याप्य-
स्यैव इन्द्रियप्रसादविशेषादेरिन्द्रियव्यापारोपरमद्वारा ज्ञानाभावानुमापकस्या-
नुभवसिद्धत्वात् । तस्मान्न सुप्तोत्थितपरामर्शेनापि भावरूपाज्ञानसिद्धिः ॥ 25

---

१ अविशेष्यविशेषप्रकारक ।

ननु तर्ह्यनुमानादेव भावरूपाज्ञानसिद्धिः; तथाहि—विवादाध्यासितं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकं, अप्रकाशितार्थप्रकाशकत्वात्, अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति । अत्र पक्षे धारावाहिकद्वितीयादिज्ञानव्यवच्छेदाय विवादाध्यासि-5तशब्दः, स्वरूपभूतज्ञानव्यावृत्त्यर्थं भ्रान्तिज्ञानव्यावृत्त्यर्थं च प्रमाणशब्दः, करणभ्रमनिरासाय ज्ञानशब्दः, साध्ये च स्वप्रागभावेनार्थान्तरवारणाय प्रथमविशेषणम्, स्वोत्पादकादृष्टेनार्थान्तरवारणाय द्वितीयं विशेषणम्, स्वोत्पत्तिप्रतिबन्धकादृष्टविशेषेणार्थान्तरवारणाय तृतीयविशेषणम्, वेद्यगतवृत्त्यभिव्यक्तिप्रागभावेन अर्थान्तरवारणाय चतुर्थविशेषणम्, वस्त्वन्तर-10पदं स्पष्टार्थम् । नन्वाद्यस्वपदं विहायोच्यमाने चतुर्थविशेषणं व्यर्थमेव, नच घटादिगताज्ञातत्वेन अर्थान्तरवारणाय तदिति वाच्यम्; अज्ञातत्वस्य ज्ञानाभावरूपत्वे ज्ञानविषयत्वाभावत्वे च स्वनिवर्त्यत्वाभावेन स्वनिवर्त्यपदेनैव तन्निरासादिति चेन्न; तथापि व्यावर्त्यविशेष(ण)द्योतनाय तदुक्तेः । हेतौ च धारावाहिकद्वितीयादिज्ञाने व्यभिचारवारणायाप्रकाशितपदम् । 15दृष्टान्ते च आलोकमध्यारोपितदीपव्यवच्छेदायान्धकारपदम् । तत्रैवानन्तरारोपितदीपादिव्यवच्छेदाय प्रथमोत्पन्नपदम्, इन्द्रनीलादिप्रभाव्यवच्छेदाय प्रदीपशब्द इति विवरणानुमाने सप्रयोजनानि विशेषणानि ॥

अत्र ब्रूमः—प्रमाणज्ञानपदेन किं वृत्तिर्विवक्षिता, उत चैतन्यम्, अथवा वृत्त्यवच्छिन्नचैतन्यम् । नाद्यः; वृत्तेर्जडत्वेनाज्ञानानिवर्तकतया साध्यबा-20धात् । न द्वितीयः; चैतन्यस्य नित्यत्वेन प्रागभावाद्यभावेन (प्रमाणाभावाद्यसंभवेन) साध्यबाधात् । नापि तृतीयः वृत्तेरुपलक्षणत्वे द्वितीयपक्षोक्तदोषानतिवृत्तेः, वृत्तेरेव निवर्तकत्वसंभवेन चैतन्यस्याज्ञानानिवर्तकत्वप्रसङ्गाच्च । नच वृत्तिप्रतिफलितचैतन्यमेव पक्ष इति वाच्यम्; प्रतिबिम्बचैतन्यस्य बिम्बचैतन्याभिन्नतया पूर्वोक्तदोषप्रसङ्गात् । अज्ञानस्य स्वविषयावरणत्वासंभ-25वेन बाधश्च । स्वविषयावरणत्वं हि स्वविषयज्ञानोत्पत्तिप्रतिबन्धकत्वम्, नचाज्ञाने तत्संभवति; प्रतिबन्धकाज्ञानसत्त्वे कदाचिदपि ज्ञानानुत्पत्त्या अनिर्मोक्षप्रसङ्गात् ॥ अत एव पटादिवत्स्वविषयावकुण्ठकत्वमित्यपि प्रत्यु-

क्तम्। नहि पटाद्यवकुण्ठितो घटादिः सामग्रीशतेनापि ज्ञातुं शक्यते। न च ब्रह्मतत्त्वज्ञानसामग्रीविशेषस्तदुत्तेजक इति न ज्ञानानुत्पत्तिप्रसङ्ग इति वाच्यम्; तथा सति तदन्वयव्यतिरेकयोरेव कार्यतदभाव(तया) प्रयोजकतया पृथगन्वयव्यतिरेकाभावेनाज्ञानस्य प्रतिबन्धकत्व एव मानाभावात्॥

किञ्च साध्ये स्वप्रागभावव्यतिरिक्तेति विशेषणं व्यर्थमेव; स्वस्य प्रागभावनिवृत्तिरूपतया स्वनिवर्त्यत्वासिद्ध्यानेनार्थान्तरानवकाशात्। नच प्रतियोगी न प्रागभावनिवृत्तिः, तथा सति प्रतियोगिविनाशे प्रागभावोन्मज्जनप्रसङ्गादिति वाच्यम्; प्रतियोगिवत् तद्ध्वंसस्यापि प्रागभावनिवृत्तिरूपतया तदनवकाशात्[1]। नचालोकनिवर्त्योऽन्धकार इतिवदौपचारिकं निवर्त्यत्वं प्रागभावस्यापि संभवतीति वाच्यम्; तथा सति स्वप्रागभावव्यतिरिक्तेन स्वात्यन्ताभावेन अर्थान्तरस्य ब्रह्मणाऽपि दुष्परिहरत्वात्[2]। स्वप्रागभावस्य स्वविषयावरणत्वाभावेन स्वप्रागभावव्यतिरिक्तेतिविशेषणं सर्वथा व्यर्थमेव। प्रागभावस्य स्वविषय(क)ज्ञानानुकूलतया स्वविषयज्ञानप्रतिबन्धकत्वासिद्धेः। स्वविषयेत्यपि विशेषणं व्यर्थम्; आवरणपदेनैव स्वोत्पादकादृष्टव्यावृत्तिसिद्धेः॥

किञ्च जडस्यावरणानङ्गीकारेण घटादिविषयकज्ञानस्य स्वविषयावरणनिवर्तकत्वाभावात्[3] बाधः। स्वविषयावच्छिन्नचैतन्यावरणनिवर्तकत्वविवक्षायां शाब्दाखण्डब्रह्मसाक्षात्कारे बाधः। तस्य पक्षबहिर्भावे तत्र व्यभिचारः। दृष्टान्तासिद्धिश्च; अन्धकारस्य स्वविषयावच्छिन्नानावारकत्वात्। हेतौ चाप्रकाशितार्थत्वं किमप्रकाशितविशेष्यत्वमप्रकाशितविशेषणत्वं वा[4] अप्रकाशितविशिष्टत्वमप्रकाशितयावदर्थत्वं[5] वा विशेषणविशेष्यौदासीन्येनाप्रकाशितार्थत्वमात्रं वा। नाद्यः; चैतन्यमात्रस्य पूर्वं प्रकाशितत्वेन पक्षीभूतघटादिज्ञाने स्वरूपासिद्ध्यापत्तेः। न द्वितीयः; धारावाहिकद्वितीयादिज्ञाने व्यभिचारात्, तस्याप्यप्रकाशिततत्तत्क्षणादिविशेषणरूपार्थप्रकाशकत्वात्। अत एव न तृतीयः। नापि चतुर्थः। घटावच्छिन्नचैतन्यप्रकाशके पक्षी-

१ °शप्रसङ्गात्। २ हरणीयत्वात्। ३ त्वासंभवात्। ४ वा आहोस्वित् अप्र। ५ त्वमथवा अप्रकाशितयावदर्थत्वं वा नोचेत् विशे।

भूतघटादिज्ञाने स्वरूपासिद्ध्यापत्तेः, तत्र घटादेरप्रकाशितत्वेऽपि चैतन्यस्य प्रकाशितत्वेन अप्रकाशितयावदर्थाभावात् । नापि पञ्चमः; धारावाहिकद्वितीयादिज्ञाने व्यभिचारादेव । किञ्च प्रकाशकत्वमपि किमभिप्रेतं ज्ञानत्वं वा ज्ञानकरणत्वं वा ज्ञानकरणानुग्राहकत्वं वा ज्ञानहेतुत्वमात्रं वा 5 प्राकट्यहेतुत्वं वा साक्षात्परंपरया विषयव्यवहारानुगुण्यहेतुत्वं वा अन्यद्वा । नाद्यः; दृष्टान्ते साधनवैकल्यात् । न द्वितीयः; पक्षे घटादिज्ञाने ज्ञानकारणत्वाभावेन स्वरूपासिद्ध्यापत्तेः । दीपादेर्ज्ञानकारणेन्द्रियानुग्राहकत्वेन ज्ञानकरणत्वाभावेन साधनवैकल्याच्च । न तृतीयः; पक्षीभूतज्ञाने ज्ञानकारणानुग्राहकत्वाभावेन स्वरूपासिद्धेः । नापि चतुर्थः; इन्द्रियादिषु व्यभिचारात्, 10 पक्षीभूतज्ञाने ज्ञानहेतुत्वाभावेन स्वरूपासिद्धेश्च । नापि पञ्चमः; प्राकट्यानभ्युपगमेन हेतोरप्रसिद्धेः, दीपप्रभायाः प्राकट्यहेतुत्वाभावेन दृष्टान्तस्य साधनविकलत्वाच्च ॥

नापि षष्ठः; इन्द्रियादिषु व्यभिचारात् । नान्त्यः; तस्यानिर्वचनात् किञ्च परोक्षज्ञानमज्ञानानिवर्तकं निवर्तकं वा? नाद्यः; तत्र व्यभिचारात् । 15 न द्वितीयः; परोक्षज्ञानस्याप्यज्ञाननिवर्तकत्वे प्रकृताज्ञानानुमितेरप्यज्ञानविषयकाज्ञाननिवर्तकत्वप्रसङ्गेन तद्विषयकानुमितेरपि तथाप्रसङ्गे दुष्परिहरानवस्थापातात् । अज्ञानानुमितेश्चाज्ञाननिवर्तकत्वेऽनुमानवैफल्यम् ॥ नचाज्ञानव्यवहार एवानुमानफलमिति वाच्यम्; अज्ञानविषयकाज्ञाननिवृत्त्यभावे तद्व्यवहारस्याप्यसंभवात् । अत एव ब्रह्मस्वरूपभूतज्ञाने सत्यपि तद्विषयका- 20 ज्ञाननिवृत्त्यभावेन[1] अस्ति ब्रह्म प्रकाशत इति व्यवहाराभावः । नास्ति न प्रकाशत इति व्यवहार इति हि भवत्सिद्धान्तः । नापि संशयनिवृत्तिः प्रयोजनम्; अज्ञाननिवृत्त्यभावे तस्या अप्य[2]भावात् । नचाज्ञानाभाव एव व्यवहारप्रयोजकः न तन्निवृत्तिः, अज्ञाने चाज्ञानभावः स्वतः सिद्ध इति वाच्यम्; तथासत्यनुमानवैफल्यात् ॥

25 किञ्च अर्थाप्रकाशकालोकमध्यारोपितदीपप्रभायां व्यभिचारः । तत्रा-

---

१ भावेन इत्यारभ्य तस्या अप्यभावात्—इत्यन्त गकोशे नास्ति । २ अप्यसंभवात्

र्थस्य पूर्वालोकाप्रकाशितत्वेनाप्रकाशितार्थप्रकाशकत्वरूपहेतोः सत्त्वात् दीपप्रभाया अन्धकारानिवर्तकतया साध्याभावाच्च । नच तत्रार्थस्य पूर्वालोकप्रकाशनयोग्यत्वेन नाप्रकाशितार्थप्रकाशकत्वमिति वाच्यम्; तथा सति पक्षीभूतज्ञाने अर्थस्य तादृशप्रकाशनयोग्यतासत्त्वेन हेतोः स्वरूपासिद्ध्यापत्तेः ॥ 5

किञ्चैवं सुखादिप्रमाया अपि पक्षत्वेन तत्र साध्यबाधः; सुखादिप्रमायाः साक्षिभूतत्वेन स्वनिवर्त्यवस्त्वन्तरपूर्वकत्वाभावात् । तस्य पक्षबहिर्भावे च तत्र व्यभिचारः । किञ्च उक्तसाध्याप्रयोजकश्चायं हेतुः; अप्रकाशितार्थप्रकाशकत्वस्य प्रकाशप्रतिबन्धनिवृत्तिमात्राधीनत्वेन स्वप्रागभावातिरिक्तत्वाद्यधीनत्वेन[2] विशिष्टसाध्याव्याप्यत्वात् । अन्यथा स्वप्रागभावाज्ञानाति- 10
रिक्तवस्तुपूर्वकत्वसाधने अज्ञानेनातिरिक्तभावान्तरस्यापि सिद्धिप्रसङ्गात् ॥

यत्तु नवीनोक्तं जन्यसविकल्पकाजन्यचाक्षुषघटप्रमाणज्ञानं अन्धकारनिवृत्त्यव्यवहितोत्तरकालीनचाक्षुषज्ञानं वा पक्षः, अतो न सुखादिप्रमायां बाधावकाशः । स्वविषयावरणस्वनिवर्त्यवस्त्वन्तरपूर्वकमित्येक एव साध्यम् । स्वप्रागभावातिरिक्तस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकमित्यपरं साध्यम् । 15
यद्वा स्वप्रागभावातिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकमित्येकमेव साध्यम् । स्वसमानाधिकरणविशिष्टज्ञानध्वंसोत्पत्तिसमयानाधारस्थितिकचाक्षुषसविकल्पकान्धकारनिवर्तकालोकान्यान्यत्वात्, एतद्ज्ञानविषयदेशीयान्धकारस्थितिसमयास्थितिकप्रत्यक्षत्वे सति एतद्ज्ञानोत्पत्तिसमये एतद्विषयसंबन्धित्वात्, एतद्विषयावारकमात्रनिवर्तकत्वे सत्यावारका- 20
न्यत्वात्, तद्विषयावरणसमयावृत्तित्वे सति तदावरणनिवर्तकत्वाद्वेति हेतवः ॥

अत्र प्रथमसाध्ये स्वविषयावरणत्वं स्वजननायोग्यत्वं, स्वनिवर्त्यत्वं च स्वजन्यध्वंसप्रतियोगित्वं, वस्तुपदं च स्वपरम्, अन्तरपदं चान्यपरम् । तथाच वस्त्वन्तरत्वं स्वान्यत्वम् । स्वप्रागभावेन अर्थान्तरवारणाय स्वविषयावरणेति । इच्छाप्रागभावादिना अर्थान्तरवारणाय स्वनिवर्त्येति । नच स्वनिवर्त्ये- 25
तिपदेनैव स्वप्रागभावव्यावृत्तिसिद्धेः प्रथमविशेषणं[1] व्यर्थमिति वाच्यम्;

---

२ द्यनधीनत्वेन । १ प्रथमविशेषणवैयर्थ्यमिति वाच्यं ।

प्रागभावनिवृत्तिः प्रतियोग्यतिरिक्तेति मतेनास्याभिधानात्। स्वस्यापि स्वाधिकरणक्षणोत्तरक्षणे सत्त्वेन स्वपूर्वत्वमस्तीति स्वेनार्थान्तरवारणाय वस्त्वन्तरपदम्। द्वितीयसाध्ये च स्वप्रागभावत्वं स्वसमानाधिकरणप्रागभावत्वम्। स्वदेशगतत्वं च स्वसमानाधिकरणत्वे सति प्रत्यक्षत्वम्। इच्छाप्राग-
5 भावादिना अर्थान्तरवारणाय स्वप्रागभावातिरिक्तेति। आत्मत्वादिना अर्थान्तरवारणाय स्वनिवर्त्येति। स्वजनकादृष्टादिना अर्थान्तरवारणाय स्वदेशगतेति। वस्त्वन्तरपदप्रयोजनं च पूर्ववत्। विशिष्टसाध्ये च पदानां पूर्ववदेवार्थः, स्वदेशगतेत्यत्र प्रत्यक्षत्वं विवक्षितम्। इच्छादिप्रागभावेनार्थान्तरवारणाय प्रथमविशेषणम्। स्वजनकादृष्टवारणाय द्वितीयम्[1]। आत्मत्वा-
10 दिवारणाय तृतीयम्[1]। चिकीर्षादिद्वारा स्वजन्यतन्तुसंयोगादिप्रागभावेनार्थान्तरवारणाय चतुर्थविशेषणम्। प्रथमहेतौ च धारावाहिकद्वितीयादिज्ञाने व्यभिचारवारणाय स्थितिकेत्यन्तम्। असिद्धिसाधनवैकल्यपरिहाराय निर्विकल्पके व्यभिचारवारणाय च सविकल्पकेत्यादि। सुखादिप्रत्यक्षे व्यभिचारपरिहाराय चाक्षुषपदम्। द्वितीयहेतौ च देशान्तरीयद्वितीयादिप्रभायां
15 व्यभिचारवारणाय एतद्विषयसंबन्धित्वादिति, धारावाहिकद्वितीयादिज्ञाने व्यभिचारवारणाय एतदज्ञानोत्पत्तिसमय इति, एतद्धेतुनिर्विकल्पके व्यभिचारवारणाय प्रत्यक्षत्वे सतीति। तद्विषयकपरकीयानुमित्यादौ व्यभिचारवारणाय अन्धकारस्थितिसमयास्थितिकेति। तच्चान्धकारस्थितिसमयस्थित्यभावप्रयोजकरूपवत्त्वम्, तच्चालोके आलोकत्वं ज्ञाने चाक्षुषत्वमस्ति। अनुमितौ
20 तु न किञ्चिदस्तीति न तत्र व्यभिचारः। पक्षीकृतज्ञानस्यापि देशान्तरीयान्धकारसमानकालीनतया असिद्धिवारणाय एतज्ज्ञानविषयदेशीयेति। अस्मिन् हेतुद्वयेऽपि द्वितीयसाध्यविवक्षायां धारावाहिकद्वितीयादिज्ञानव्यावर्तकविशेषणमनुपादेयम्। तत्र पूर्वज्ञाननिवर्तकत्वेन साध्यसत्त्वेन व्यभिचाराभावात्॥

25 तृतीयहेतौ च घटादौ व्यभिचारवारणाय सत्यन्तम्। ईश्वरादौ व्यभिचारवारणाय मात्रपदम्। तेषामेतदज्ञानाविषयरसाद्यावारकस्यापि निवर्त-

---

१ सर्वत्र पदस्थाने विशेषणमित्यस्ति—

कतया एतद्विषयावारकमात्रनिवर्तकत्वाभावात् । अन्धकारे व्यभिचारवारणायावारकान्यत्वादिति ॥

चतुर्थहेतौ च परकीयानुमित्यादौ व्यभिचारवारणाय सत्यन्तम् । धारावाहिकद्वितीयादिज्ञाने व्यभिचारवारणाय तदावरणनिवर्तकत्वादिति ॥

नचैतेषां हेतूनामप्रयोजकत्वम् प्राथमिकज्ञानविषये पूर्वमज्ञातत्वस्य भाव- 5 रूपाज्ञानाभावे निर्वक्तुमशक्यत्वात् ज्ञानप्रागभावरूपत्वे प्राथमिकज्ञानानन्तरमपि अज्ञानत्व[1]व्यवहारप्रसङ्गात् इति विपक्षे बाधकस्तर्कः एकः । अप्रकाशशब्दस्य लाघवेन भावरूपाप्रकाशपरत्वस्योचितत्वादिति द्वितीयस्तर्कः । इदं च तर्कद्वयं चतुर्णामपि हेतूनां साधारणम् । प्रागभावस्य स्वनिवर्त्यत्वासंभवेन आवरणनिवर्तकत्वरूपहेतूच्छेदः अन्त्यहेतुद्वयस्याधिकस्तर्कः । 10 एवञ्च तर्कानुगृहीतैर्हेतुभिर्भावरूपाज्ञानसिद्धौ न विरोध इति ॥

अत्र ब्रूमः—यदुक्तं जन्यसविकल्पकेत्यादि पक्षतावच्छेदकं तदसत्; भ्रमस्याधिष्ठानसविकल्पकजन्यत्वे प्रथमविशेषणेनैव तद्व्यावृत्तिसिद्धेः, अजन्यत्वे च शुक्तिगतरूप्यादिविषयतया तदज्ञाननिवर्तकत्वेन साध्यसत्त्वात् तद्व्यावर्तकप्रमाणपदवैयर्थ्यात् । प्रमाणत्वमपि तद्वति तत्प्रकारकत्वं वा, 15 अबाधितार्थकत्वं वा, अन्तःकरणवृत्तिरूपत्वं वा । नाद्यः; भ्रमस्यापि तथात्वेन प्रमाणपदेन तद्व्यावृत्त्यसिद्धेः । नद्वितीयः, सर्वस्यापि ज्ञानस्य त्वन्मते बाधितार्थकत्वेनाप्रसिद्धेः । अधिष्ठानांशमादायाबाधितत्वं भ्रमेऽपि संभवतीति न तद्व्यावृत्तिः । नापि तृतीयः; परमते अन्तःकरणवृत्त्यसिद्ध्या आश्रयासिद्धेः । किञ्च चाक्षुषत्वमपि ज्ञानस्यासिद्धम्; चैतन्यस्य चाक्षुषत्वानभ्यु- 20 पगमात्, वृत्तेस्तदवच्छिन्नस्य वा चाक्षुषत्वे आश्रयासिद्धेः, वृत्तेः ज्ञा[2]ततया अज्ञानानिवर्तकत्वेन बाधश्च । अत एव अन्धकारेत्यादिपक्षनिर्देशोऽप्यनुपपन्नः । प्रथमसाध्यं चा[3]नुपपन्नम्; स्वविषयावरणपदवैयर्थ्यात्, तद्व्यावर्तनीयस्य स्वप्रागभावस्य स्वनिवर्त्यपदेनैव व्यावृत्तिसिद्धेः । प्रागभावनिवृत्तेः प्रतियोग्यतिरेकेऽपि प्रतियोगिप्रागभावयोरेककालत्वविरोधेन स्वोत्प- 25 त्तिकाल एव प्रागभावनिवृत्त्युत्पादेन स्वनिवर्त्यत्वासिद्धेः । किञ्च इच्छाप्राग-

---

१ अज्ञातत्व । २ जडतया । ३ चायुक्तम् ।

भावेनार्थान्तरम्; उक्तरीत्या इच्छोत्पत्तिकाल एव तत्प्रागभावनाशावश्य-
कतया तस्यापि स्वनिवर्त्यत्वात्। द्वितीयसाध्यं चायुक्तम्; स्वोत्पादकादृष्टे-
नार्थान्तरत्वात्, तस्याप्यलौकिकप्रत्यक्षविषयत्वात्। नच लौकिकप्रत्यक्षत्वं
विवक्षितमिति वाच्यम्; तद्धि लौकिकप्रत्यासत्तिजन्यत्वं वा, अलौकिकप्रत्या-
5 सत्त्यजन्यत्वं वा। नाद्यः; अज्ञानस्य नित्यसाक्षिचैतन्यविषयत्वेन लौकिक-
प्रत्यासत्तिजन्यप्रत्यक्षविषयत्वाभावेन पक्षे साध्यबाधात्। न द्वितीय; स्वोत्पा-
दकादृष्टस्य तादृशेश्वरप्रत्यक्षविषयत्वेन अर्थान्तरतापत्तेः, जन्यत्वेन प्रत्यक्ष-
विशेषणे च पुनरपि बाधप्रसङ्गात्, अज्ञानसाक्षिचैतन्यस्याजन्यत्वात्। किञ्च
साध्यद्वयेऽपि यत्राभिमतानभिमतविषयसमूहालम्बनं अभिमतांशे सवि-
10 कल्पकं इतरांशे निर्विकल्पकम्, ततोऽभिमतविषयकेच्छा, ततोऽनभिमत-
सविकल्पकम्, तत्र विरोधिगुणत्वेन स्वनिवर्त्येच्छापूर्वकत्वेऽर्थान्तरता;
इच्छासामग्रीबलवत्त्वेन अनभिमतसविकल्पकात्पूर्वमभिमतविषयेच्छाया एव
भावात्॥

किञ्च घटत्वं पटत्वं च स्मृतवतः पुंसो यत्र क्रमेण घटपटप्रत्यक्षं तत्र
15 पूर्वप्रत्यक्षस्य विरोधिगुणत्वेन स्वनिवर्त्यतया तत्पूर्वकत्वेनार्थान्तरता। एवं
तत्तद्विषयज्ञानस्यापि साध्यपर्यवसानेनार्थान्तरता दुष्परिहरा। एतेन तृतीय-
साध्यमपि निरस्तम्॥

एवं साध्यगतविशेषणानि सर्वाण्यप्युद्देश्यसिद्ध्यर्थानीति न वैयर्थ्यमिति
पक्षोऽप्ययुक्तः। तथासति भावत्वस्वनिवृत्यत्वयोरेवोद्देश्यतया अभावाति-
20 रिक्तस्वनिवर्त्यवस्तुपूर्वकं, स्वनिवर्त्यभावपूर्वकमिति वा साध्यनिर्देशेनापि
उद्देश्यसिद्धौ शेषवैयर्थ्यात्। स्वविषयावरणत्वस्वदेशगतत्वादिकं त्वज्ञानस्य
पक्षद्वयेऽपि सिद्धमिति न साध्यतयोपादेयम्। भावत्वमेव हि साध्यतयोद्दे-
श्यमिति भावपूर्वकमित्येव साध्यनिर्देशो युक्तः। परंतु येन विशेषणेन विना
भावरूपाज्ञानं न सिध्यति तदेवोपादेयमिति विशेषणान्तरवैफल्यमेव॥

25 किञ्च प्रथमहेतोः पटादिज्ञानव्यवहितद्वितीयघटादिज्ञाने पटाविषयके
व्यभिचारः। नच तस्य पटज्ञानध्वंसोत्पत्तिसमयाधारस्थितिकत्वेन हेत्वभा-
वादेव न व्यभिचार इति वाच्यम्; स्वसमानाधिकरणज्ञानस्य समानविष-

यकत्वेनापि विवक्षणीयत्वात् । अन्यथा भिन्नविषयकज्ञानानन्तरोत्पन्नघटादि-
चाक्षुषज्ञानस्यापि पक्षतावच्छेदकाक्रान्ततया तत्र हेतोः स्वरूपासिद्ध्यापत्तेः ।
नच भिन्नविषयकज्ञानाव्यवहितत्वमपि हेतुविशेषणमिति वाच्यम् ; तथा सति
घटज्ञानेच्छाऽव्यवहितद्वितीयघटज्ञाने व्यभिचारात्, घटज्ञानेच्छाया द्वितीय-
5 घटादिज्ञानहेतुत्वेन स्वजननस्वरूपायोग्यत्वरूपस्वविषयावरणत्वस्याभावात् ॥

नच विजातीयाव्यवहितत्वं हेतुविशेषणम्, तथासति घटादिचाक्षुष-
ज्ञानस्य इन्द्रियसन्निकर्षव्यवहितत्वेन हेतोः स्वरूपासिद्ध्यापत्तेः । द्वितीय-
हेतोश्च द्वितीयालोकेन यत्र प्राथमिकघटचाक्षुषज्ञानं तत्र द्वितीयालोके व्य-
भिचारः, तस्य तद्ज्ञानविषयदेशीयान्धकारस्थितिसमयास्थितिकत्वात् । नच
10 प्राथमिकालोकमात्रजन्यत्वं पक्षविशेषणमिति हेतावेतत्पदेन तस्यैव पराम-
र्शात् हेत्वभावान्न व्यभिचार इति वाच्यम्; तथापि जालसूर्यमरीचिकामा-
त्रजन्यत्रसरेणुप्रत्यक्षकाले[1] तदनन्तरभाविनि दीपालोके व्यभिचारात् ॥

नच द्वितीयपक्षतावच्छेदकाभिप्रायेणायं हेतुरिति वाच्यम्; तथापि यत्र
प्रथमालोकद्वितीयक्षणे द्वितीयालोकान्धकारनिवृत्त्योरुत्पत्तिः तृतीयक्षणे
15 घटज्ञानं तत्र द्वितीयालोके व्यभिचारात् । किञ्चैतद्विषयसंबन्धित्वं किमे-
तद्विषयकत्वं एतद्विषयसंबन्धमात्रं वा । नाद्यः; दृष्टान्ते साधनवैकल्यात् ।
न द्वितीयः; अन्धकाराभावे व्यभिचारात् ॥

किञ्च जन्यसविकल्पकाजन्यचाक्षुषघटज्ञानविषयदेशीयान्धकारस्थितिस-
मयास्थितिकमप्रसिद्धम्, एतच्छब्देन पक्षीभूतज्ञानाभिधानात् । तृतीयहेतु-
20 रपि स्वरूपासिद्धः, एतदज्ञानावारकनिवर्तकत्वस्य भावरूपाज्ञानसिद्धेः पूर्व-
मसिद्धत्वात् । पक्षीभूतज्ञानजनकद्वितीयालोके व्यभिचारश्च, अन्धकारस्य
तन्निवर्त्यत्वाभावात्, अज्ञातत्वस्य तन्निवर्त्यत्वेऽपि स्वदेशगतत्वाभावात् ।
एतेन तुरीयहेतुरपि निरस्तः; पक्षीभूतज्ञानजनकद्वितीयालोके व्यभिचारात् ।
अनुकूलतर्काभावेनाप्रयोजकाश्चैते हेतवः ॥

25 ननूक्ता एव तर्का इति चेदुच्यते—नतावदाद्यस्तर्कः; अज्ञातत्वं नाम
देवदत्तीययावद्ज्ञानप्रतियोगिकविषयविषयिभावावच्छिन्नाभावकूट[2] इति

---

१ कालीने तदनन्तरभाविनि । २ विषयिभावसंसर्गावच्छिन्नाभावकूट ।

सामान्याज्ञातत्वस्य देवदत्तीयतद्विषयकयावद्ज्ञानप्रतियोगिकसंसर्गावच्छिन्ना-भावकूटस्तद्विषयाज्ञातत्वमिति विशेषाज्ञातत्वस्य च निर्वक्तुं शक्यत्वेन भावरूपाज्ञानं विना अशक्यनिर्वचनत्वस्याभावात् ॥

नापि द्वितीयस्तर्कः; अप्रकाशपदस्य वाक्यरूपत्वेन पदद्वयार्थसंसर्ग-परतया लोकव्युत्पत्त्यनुसारेण ज्ञानाभावपरत्वस्यैव युक्तत्वेन लाघवानव- 5 तारात् । किञ्च ज्ञानाभावस्य गौरवं न तुलाग्राह्यं किन्तु प्रतियोगिनिरू-पणाधीननिरूपणत्वम् । तच्चाभावरूपाज्ञानेऽपि ज्ञानविरोधित्वेन निरूपणेऽपि तुल्यमेवेति कुतो लाघवम् । किञ्च शरीरलाघवं ज्ञानाभावस्यैव, तच्छरीरं च ज्ञानत्वाभावत्वमात्रघटितम्, भावरूपाज्ञानशरीरं च ज्ञानजन्यनिवृत्तिप्रति-योगित्वघटितमिति तत्रैव गौरवम् ॥ 10

नापि तृतीयस्तर्कः; ज्ञानप्रागभावनिवर्तकत्वेनापि हेतुसिद्धेर्हेतूच्छि-त्तेरभावात् । नच प्रागभावनिवृत्तेः प्रतियोगिरूपत्वेन तन्निवर्तकत्वाभावेन हेतूच्छेद एवेति वाच्यम्; तथापि प्रागभावनिवृत्तेः प्रतियोग्यतिरिक्तत्व-सिद्ध्यापि हेतुसिद्धेः । भावरूपाज्ञानं विना हेतूच्छित्तेरभावात् । तथाचानु-कूलतर्काभावादेते हेतवोऽप्रयोजका एव ॥ 15

यदपि नवीनकल्पितम्—इच्छाद्वेषप्रयत्नासमानकालीनसामग्रीजन्यप्रत्य-क्षभावधर्माजनकस्वसामग्रीकालीनजन्यविशिष्टज्ञानाविषयविषयकघटादिप्र-त्यक्षप्रमा पक्षः, ज्ञानातिरिक्तप्रत्यक्षनिवर्तिकेति साध्यम्, स्वसामग्रीकालीन-जन्यविशिष्टज्ञानाविषयविषयकबाह्यविषयजन्यप्रमात्वादिति हेतुः, स्ववि-षयध्वंसजनकप्रतियोगिप्रत्यक्षं दृष्टान्तः । अत्र पक्षे परोक्षप्रमायां बाधवार- 20 णाय प्रत्यक्षेति पदम् । स्वमते शब्दजनिताहमाकारापरोक्षवृत्तौ बाधवारणाय घटादीति । धारावाहिकद्वितीयादिज्ञाने बाधवारणाय स्वसामग्रीकालीने-त्यादि । इच्छादिप्रागभावनिवर्तकतया अर्थान्तरवारणाय धर्माजनकेति । संस्कारजनकतया असंभवव्यावृत्तये प्रत्यक्षेति । स्वध्वंसजनकतया असंभवो

---

१ ज्ञानप्रतियोगिकविषयविषयिभाव संसर्गा । २ मैसूरुमातृकायां नच प्रागभाव इत्यादि 25 हेतूच्छित्तेरभावात्-इत्यन्तं गलितं श्रीनिवासाचार्यप्रेषितकोशेपि नचेत्यादिवाक्यं गलितम् ।

मा भूदिति भावपदम् । इच्छाद्यनन्तरभाविघटादिप्रमायास्तन्निवर्तकतयार्था-
न्तरता मा भूदिति इच्छेत्यादि । साध्ये च संस्कारप्रागभावेन अर्थान्तरता
मा भूदिति प्रत्यक्षेति । स्वनिवर्तकतया विशेषणज्ञानादिनिवर्तकतया चार्था-
न्तरता मा भूदिति ज्ञानातिरिक्तेति । हेतौ च परोक्षप्रमायामुक्ताहमाकार-
5 वृत्तौ द्वितीयादिज्ञाने च व्यभिचारवारणाय विषयजन्यपदम्, बाह्यपदं
स्वसामग्रीकालीनेत्यादि विशेषणं च । यद्वा सामग्रीजन्यान्तं विहायैव पक्षः
कार्यः । स्वसमानाधिकरणातिरिक्तप्रत्यक्षनिवर्तकत्वं साध्यम् । पूर्वोक्तावेव
हेतुदृष्टान्तौ । अत्र साध्ये प्रत्यक्षपदकृत्यं पूर्ववत् । ज्ञानेच्छादिनिवर्तकतया
अर्थान्तरवारणाय स्वसमानाधिकरणातिरिक्तेति । अज्ञानस्यापि स्वसमानाधि-
10 करणतया बाधवारणाय कार्येति । यद्वा कार्यत्वानधिकरणप्रत्यक्षनिवर्तकत्वं
साध्यम् । घटादिप्रागभावनिवर्तकमृदादिप्रत्यक्षं दृष्टान्तः । पूर्वोक्त एवात्रापि
हेतुः । इच्छादिनिवर्तकतया अर्थान्तरवारणाय कार्यत्वानधिकरणेति विशेष-
णम् । प्रत्यक्षपदकृत्यं पूर्ववत् ॥

यद्वा स एव पक्षः, जन्यज्ञानासहकृतसामग्रीजन्यध्वंसप्रतियोगिजातीया-[1]
15 तिरिक्तज्ञानान्यप्रत्यक्षनिवर्तकत्वं[2] वा जन्यज्ञानाजन्यध्वंसप्रतियोगिजातीया-
तिरिक्तज्ञानान्यप्रत्यक्षनिवर्तकत्वं वा गुणत्वानधिकरणप्रत्यक्षनिवर्तकत्वं वा
स्वस्थितिक्षणनियतस्वविनाशसामग्रीमद्भिन्नप्रत्यक्षनिवृत्तिचरमकारणत्वं वा
चेष्टानपेक्षज्ञानाजन्यप्रत्यक्षनिवर्तकत्वं वा चेष्टाजन्यान्यकार्यातिरिक्तप्रत्यक्ष-
निवर्तकत्वं वा चेष्टानिमित्तजातीयातिरिक्तप्रत्यक्षनिवर्तकत्वं वा अहमनु-
20 भवविषयधर्मातिरिक्तनिवर्तकत्वं वा साध्यम् । अत्र सर्वत्रापि पूर्वोक्त एव
हेतुः यथासंभवं पूर्वोक्त एव दृष्टान्तः ॥

अत्र प्रथमसाध्ये जन्येत्यादिकमतिरिक्तेत्यन्तं ज्ञानान्यत्वं च प्रत्यक्ष-
विशेषणम् । स्वजनकविशेषणज्ञाननिवर्तकतया अर्थान्तरवारणाय ज्ञाना-
न्यपदम् । इच्छादिनिवर्तकत्वेनार्थान्तरवारणाय ध्वंसप्रतियोगिजातीयातिरि-
25 क्तेति । अज्ञानस्यापि ध्वंसप्रतियोगित्वेनासंभववारणाय जन्यज्ञानासहकृत-
सामग्रीजन्येति । जन्यपदं च सर्वसामग्र्या ईश्वरज्ञानसहकृतत्वेनाप्रसिद्धि-

१ सामग्रीजन्यज्ञानजन्यध्वंस । २ निवर्तकत्वं वा गुणत्वानधिकरणजन्य ।

वारणाय । इच्छानन्तरभाविज्ञाने पुनरपीच्छानिवर्तकत्वेनार्थान्तरवारणाय जातीयेति ॥

नच प्रतियोगिध्वंसजनकप्रतियोगिप्रत्यक्षे साध्यवैकल्यम्, घटस्यापि सत्तादिना तादृशध्वंसप्रतियोगिजातीयत्वादिति वाच्यम्; तादृशध्वंसप्रति-
5 योगिवृत्तिबाह्यावृत्तिजातिमत्त्वस्य विवक्षितत्वात् विशिष्टाभावस्यान्यत्वान्न वृत्तीत्यन्तवैयर्थ्यम् । द्वितीयसाध्ये स्वेनार्थान्तरवारणाय ज्ञानान्यपदम् । विशेषणान्तरप्रयोजनं च पूर्ववत् ॥

तृतीयसाध्ये इच्छादिनिवर्तकत्वेनार्थान्तरवारणाय गुणत्वानधिकरणेति । चतुर्थे साध्ये च नियतान्तं सामग्रीविशेषणम् । भिन्नान्तं प्रत्यक्षविशेषणम् ।
10 इच्छादिनार्थान्तरवारणाय भिन्नान्तम् । स्वनिवर्तकत्वेनार्थान्तरवारणाय चरमकारणपदम् । वृत्तिरूपज्ञानस्य स्वकारणविनाशे सत्येव स्वनिवर्तकतया चरमकारणत्वाभावात् ॥

पञ्चमसाध्ये च इच्छादिनिवर्तकत्वेनार्थान्तरवारणाय ज्ञानाजन्येति । दृष्टान्तभूतप्रतियोगिप्रत्यक्षे साध्यवैकल्यपरिहाराय चेष्टानपेक्षेति । घटस्य
15 कर्तृचेष्टासापेक्षोपादानज्ञानजन्यत्वेन चेष्टानपेक्षज्ञानजन्यत्वाभावात् । षष्ठसाध्येऽप्येवमेव प्रयोजनं द्रष्टव्यम् । तत्र च चेष्टाजन्यान्यत्वं कार्यविशेषणम् । सप्तमसाध्ये च इच्छादिव्यावर्तकतया अर्थान्तरवारणाय चेष्टानिमित्तजातीयातिरिक्तेति । इच्छादेश्चेष्टानिमित्तत्वेन तदतिरिक्तत्वाभावात् । जातीयपदं च चेष्टानुत्पादकेच्छादिनिवर्तकत्वेनार्थान्तरवारणाय । अष्टम-
20 साध्ये च इच्छादिनिवर्तकतयार्थान्तरवारणाय धर्मातिरिक्तेति । अज्ञानस्यापि चैतन्यधर्मतयासंभववारणायाहमनुभवविषयेति । विषयस्य धर्म इत्यर्थः । सप्तसु साध्येषु प्रत्यक्षपदकृत्यं पूर्ववत् । एवं भावरूपाज्ञानसिद्धिरिति ॥

तदयुक्तं, तथा हि—प्राथमिकानुमाने प्रत्यक्षभावधर्माजनकेत्यत्र प्रत्यक्ष-
25 पदं व्यर्थम्; संस्काराजनकप्रमाया एव पक्षत्वसंभवात् । नच संस्काराजनकप्रमैवासिद्धेति वाच्यम्; उपेक्षाविषयाणां बहूनामनुभवेऽपि विस्मरणदर्शनेन तादृशप्रमाया एव पक्षत्वसंभवात् । तत्रापि संस्कारोऽस्तीत्यत्र मानमस्ति ॥

साध्ये च संस्कारप्रागभावनिवर्तकत्वेनार्थान्तरता; तस्याप्यलौकिकप्रत्यक्षविषयत्वात्[1] । लौकिकप्रत्यक्षविवक्षायां तस्या लौकिकप्रत्यासत्त्यजन्यत्वविवक्षायामीश्वरज्ञानमादाय पुनरप्यर्थान्तरता । लौकिकप्रत्यासत्तिजन्यत्वविवक्षायामज्ञानसाक्षिचैतन्यस्य जन्यत्वाभावेन बाधः । हेतौ च जन्यविशिष्टज्ञानाविषयकेत्यत्र यथाश्रुते यत्र घटपटोभयसन्निकर्षेऽपि घट- 5
ज्ञानमन्धकारावृतत्वान्न जातं, घटज्ञानधारा च जायते, तत्र मध्ये तमोनिवृत्तौ धारान्तःपात्येव यत् घटज्ञानं पटनिर्विकल्पकात्मकमपि जायते तस्मिन् घटज्ञानधारान्तर्गतघटज्ञाने पटनिर्विकल्पकात्मके व्यभिचारः । विशिष्टज्ञानविषयाविषयकत्वविवक्षायां तादृशपरोक्षप्रमायां शरीरविषयिण्यां व्यभिचारः; जन्यज्ञानमात्रस्य शरीरजन्यत्वेन शरीरविषयपरोक्षज्ञानस्यापि शरीरजन्य- 10
त्वात् । विषयत्वेन तज्जन्यत्वविवक्षायां बाह्यपदं व्यर्थम्; अहमाकारवृत्तेः शब्दमात्रजन्यत्वेन विषयजन्यत्वाभावात् । अन्यथा विद्यमानबाह्यविषयपरोक्षप्रमायां व्यभिचारस्य बाह्यपदेनाप्यवारणात् । द्वितीयानुमाने साध्यषट्कमपि संस्कारप्रागभावनिवर्तकत्वेन स्वप्रागभावनिवर्तकत्वेन वार्थान्तरतापत्तेरिति निरस्तम् । सप्तमाष्टमसाध्ययोरपि अजन्यप्रत्यक्षनिवर्तकं कार्या- 15
तिरिक्तप्रत्यक्षनिवर्तकमिति वा साध्यसंभवे शेषवैयर्थ्यात् ॥

नच प्रतियोगिप्रत्यक्षदृष्टान्ते साध्यवैकल्यम्; मृदाद्युपादानप्रत्यक्षस्य दृष्टान्तत्वसंभवात्, अनुमित्यादिप्रागभावनिवर्तकपरामर्शादेर्दृष्टान्तत्वसंभवाच्च । चेष्टासापेक्षविशेषणज्ञानजन्ये चेष्टाप्रत्यक्षे स्वनिवर्तकत्वेनार्थान्तरता च । चेष्टाप्रत्यक्षस्य चेष्टाजन्यतया चेष्टाजन्यान्यकार्यातिरिक्ततया तस्य 20
स्वनिवर्तकत्वेन चेष्टाजन्येत्यादिसाध्येऽप्यर्थान्तरता । चेष्टानिमित्तेत्यादिसाध्यमप्ययुक्तम् । यथाकथञ्चित् साजात्यविवक्षायां घटादेरपि तथात्वेन साध्यवैकल्यम् । कारणतावच्छेदकरूपेण साजात्यविवक्षायां द्वेषस्यापि तज्जातीयातिरिक्ततया तन्निवर्तकत्वेनार्थान्तरता । नच शत्रुहननाद्यर्थचेष्टाया द्वेषकार्यत्वेन न चेष्टानिमित्तजातीयातिरिक्तत्वं द्वेषस्येति वाच्यम्; समानविषय- 25
केच्छाया एव प्रवृत्तिहेतुतया प्रवृत्तिरूपचेष्टायां द्वेषस्याहेतुत्वात् । निर्वि-

१ प्रत्यक्षत्वात्=लौकिकप्रत्यक्षत्वात्—लौकिकप्रत्यक्षविवक्षायां ।

कल्पकस्य चेष्टानिमित्तजातीयातिरिक्ततया तन्निवर्तकत्वेनार्थान्तरत्वाच्च । निर्विकल्पकस्याप्यलौकिकप्रत्यक्षविषयकत्वात् लौकिकप्रत्यक्षविषयत्वविवक्षायाश्च पूर्वमेव निरस्तत्वात् । अथ अहमनुभवविषयेत्यादिसाध्यमप्ययुक्तम्; आत्मनोऽप्यहमनुभवविषयतया अज्ञानस्यापि तद्धर्मत्वेन साध्यबाधात् ।
5 नच शुक्त्याद्यज्ञानं शुक्त्याद्यवच्छिन्नचैतन्यगतमिति नात्मधर्मत्वमज्ञानस्येति वाच्यम्; तथापि शरीरप्रत्यक्षे पक्षान्तर्भावे बाधात्, बहिर्भावे च व्यभिचारात् । शरीरावच्छिन्नस्यैव अन्तःकरणावच्छिन्नतयाप्यहमनुभवविषयत्वात् । किञ्चायं हेतुरनुकूलतर्काभावेन नोक्तसाध्यानि साधयतीति न कथञ्चिदपि भावरूपाज्ञानसिद्धिः ॥

10 नन्वेवमपि महाविद्याभिरप्यविद्या सिध्यति । तथा हि—अयं घटः एतद्घटाज्ञानान्यान्यभावान्यः, मेयत्वात्, पटवत् । एतद्घटाज्ञानाभ्यां यदन्यत् घटादि सर्वं ततोन्यतः एतद्घटः अज्ञानं च तादृशभावान्यत्वं च घटान्यत्वे बाधात् भावरूपाज्ञानान्यत्वे पर्यवस्यति एतद्घटान्यत्वं दृष्टान्ते धर्मः । यद्वा अज्ञानं स्वस्वेतरवृत्तित्वरहितभाववृत्तिधर्माधिकरणम्, मेय-
15 त्वात्, घटवदिति । अज्ञानान्यत्वं दृष्टान्ते धर्मः । अज्ञानतदितरवृत्तित्वरहितो धर्मः अज्ञानमात्रवृत्तिर्वा तदितरमात्रावृत्तिर्वा स्यात् । तत्र तदितरमात्रवृत्तिधर्माधिकरणत्वसाधने बाधात् स्वमात्रवृत्तिभाववृत्तिधर्माधिकरणत्वमादाय साध्यं सिध्यतीत्यज्ञानस्य भावत्वसिद्धिः ॥

यद्वा अज्ञानत्वं स्वस्वेतरवृत्तित्वरहितभाववृत्तिधर्माधिकरणं, मेयत्वात्, घट-
20 वत् । अज्ञानस्य भावत्वसिद्धिः अज्ञानत्वान्यत्वं दृष्टान्तधर्मः । यद्वा भावत्वं स्वेतरवृत्तित्वानधिकरणाज्ञानवृत्तिधर्मवत्, मेयत्वात्, घटवत् । भावत्वेतरमात्रवृत्तिधर्मस्य भावत्वे बाधात् भावत्वमात्रवृत्तिमदज्ञानवृत्तिधर्ममादायसाध्यसिद्धावज्ञानस्य भावत्वसिद्धिः । घटादौ च भावत्वघटान्यत्वादिकमादाय साध्यसत्त्वं द्रष्टव्यम् ॥ नचाप्रयोजकत्वम्; घटाद्यज्ञानाभावे तद्विषये
25 वल्मीकभ्रमानुपपत्तेः, न जानामीति विज्ञानसामान्यविरोध्यननुभवप्रसङ्गाच्चेति चेन्मैवम्; अप्रयोजकत्वादेव । नचोक्ततर्कानुगृहीततया नाप्रयोजकत्वमिति वाच्यम्; दुष्टेन्द्रियाधिष्ठानसन्निकर्षादेव वल्मीकभ्रमोपपत्तौ भाव-

रूपघटाद्यज्ञानकल्पने मानाभावेन प्रथमतर्काप्रवृत्तेः, न जानामीत्यनुभवस्याभावविषयत्वेनैव बहुश उपपादितत्वेन द्वितीयतर्काप्रवृत्तेश्च । अन्यथायं घटः एतद्धटाद्वेषान्यान्यभावान्यः एतद्धटानिच्छान्यान्यभावान्यः मेयत्वात् घटवत्, अद्वेषादिकं स्वस्वेतरवृत्तित्वरहितभाववृत्तिधर्माधिकरणम्, 5 मेयत्वात् घटवत्, अद्वेषत्वादिकं स्वस्वेतरवृत्तित्वरहितभाववृत्तिवृत्तिधर्माधिकरणम्, मेयत्वात् घटवत् । भावत्वं स्वस्वेतरवृत्तित्वानधिकरणाद्वेषादिवृत्तिवृत्तिधर्माधिकरणम्, मेयत्वात् घटवदित्यादिभिरनुमानैरद्वेषानिच्छागमनाभोजनादेरपि भावरूपतया सिद्धिप्रसङ्गात् । एवमन्यदपि यत्कल्पितं कल्पनीयं वा तत्सर्वमप्रयोजकत्वादेव निरस्तम् । तस्मान्न केनाप्यनुमानेन 10 मूलाज्ञानसिद्धिः । एतेन ब्रह्मसाक्षात्कारः स्वसमानविषयकभावरूपाज्ञाननिवर्तकः, अज्ञानविषयकसाक्षात्कारत्वात्, घटादिसाक्षात्कारवदिति मूलाज्ञानानुमानमपि प्रत्युक्तम्; मूलाज्ञानानुमानानां दुष्टत्वेन दृष्टान्ते साध्यवैकल्यात् ॥

किञ्च अज्ञानपदेन किं विवक्षितम्, किं भावरूपाज्ञानमुत ज्ञानाभावः, अथ ज्ञानाविषयत्वं, न त्रितयमपि; हेतोः स्वरूपासिद्धेः, एतदनुमानात्पूर्वं 15 भावरूपाज्ञानासिद्धेः, ब्रह्मणः सर्वदा प्रकाशमानत्वेन ज्ञानाभावस्यासिद्धेः ब्रह्मणः श्रवणादिज्ञानविषयत्वेन ज्ञानाविषयत्वस्याप्यसिद्धेश्च । ज्ञानप्रागभावविवक्षायां धारावाहिके द्वितीयादिज्ञाने व्यभिचारः । साक्षात्काराविषयत्वविवक्षायां प्राथमिकब्रह्मसाक्षात्कारे व्यभिचारः । ब्रह्मचरमसाक्षात्कारस्यैव निवर्तकत्वात् अप्रयोजकत्वं च । नच मूलाज्ञानानङ्गीकारे मोक्षशास्त्रा- 20 नर्थक्यप्रसङ्गः, आनन्दावारकाविद्यानिवृत्त्यन्यस्यापुरुषार्थत्वादिति विपक्षे बाधकसत्त्वान्नाप्रयोजकत्वमिति वाच्यम्; दुःखध्वंसस्यैव पुरुषार्थतया तस्यैव मोक्षत्वसंभवात् । सुखवद्दुःखध्वंसस्यापि पुरुषार्थत्वेन लोकसिद्धत्वात् ॥

नच दुःखप्रागभावनाशादेव मोक्षसिद्धेस्तत्त्वज्ञानवैयर्थ्यमिति वाच्यम्; तन्नाशार्थमेव तदपेक्षणात् । प्रतिकूलतर्कपराहताश्चोक्तहेतवः । घटज्ञानेना- 25 ज्ञाननिवृत्तौ कालान्तरे घटं न जानामीति प्रतीतिर्न स्यात् । अज्ञानान्तरं पुनरावृणोतीति चेत् तथा सत्यज्ञानानन्त्यकल्पनाप्रसङ्गात् ॥

किञ्च अज्ञानान्तरं किं तदानीमुत्पद्यते उत पूर्वं विद्यमानमेवावृणो-

तीति । नाद्यः; कारणाभावात् ज्ञाननिवृत्तेरज्ञानकारणत्वे प्राथमिकज्ञाना-
नन्तरं द्वितीयादिज्ञानेऽप्यज्ञानव्यवहारप्रसङ्गात् । न द्वितीयः; घटज्ञानेन
विद्यमानसर्वाज्ञाननिवृत्तावज्ञानान्तराभावात् । नियमनाभावेन एकाज्ञान-
निवर्तकत्वासंभवाच्च ॥

किञ्च अज्ञानस्य विद्यमानत्वेन घटज्ञानानन्तरमपि घटाज्ञानव्यवहार- 5
प्रसङ्गाच्च । तस्य व्यवहाराहेतुत्वे कालान्तरेऽपि तदभावप्रसङ्गः ॥

किञ्च सोपाधिकाश्चैते हेतवः । तथाहि—पक्षेतरत्वं तावत् सर्वानुमाने-
ष्वप्युपाधिः । अनुकूलतर्काभावप्रतिकूलतर्कयोः परानुमानेषूपन्यस्तत्वेनास्य
साध्यव्यापकत्वनिश्चयात् । जन्यसविकल्पकाजन्यचाक्षुषघटप्रमाणज्ञानमित्या-
दिष्वित्यर्थः । प्राचीनानुमानसमीकरणानुमानेषु प्रौढप्रकाशकतेजस्त्वमुपा- 10
धिः, अन्वयव्यतिरेकाभ्यां तमस्त्वेन तादृशतेजस्त्वेन च निवर्त्यनिवर्तक-
भावग्रहणात् । अत्र च तथा ग्रहणाभावेनोक्तोपाधेः साध्यव्यापकत्वात् ।
स्वकल्पितानुमानेऽपि ज्ञानातिरिक्तप्रत्यक्षनिवर्तकेति साध्ये निवृत्तिप्रयोजक-
रूपवत्त्वमुपाधिः । तत्प्रयोजकरूपं च प्रागभावनिवर्तकेषु प्रतियोगिजनक-
तावच्छेदकं इच्छादिनिवर्तकेषु विरोधिगुणत्वम् । ध्वंसजनकप्रतियोगि- 15
प्रत्यक्षे च प्रतियोगिविषयकत्वमन्वयव्यतिरेकाभ्यामवगतम् । इह तु तादृश-
प्रयोज्यप्रयोजकतावच्छेदकरूपाभावेन कथं निवर्त्यनिवर्तकभावः । अनन्त-
रानुमाने सर्वत्रायमेवोपाधिः । महाविद्यानुमानेपि पक्षेतरत्वोपाधिरुक्त एव ॥

बाधितविषयाश्चैते हेतवः । प्रतिपक्षानुमानैः साध्याभावस्य निश्चयात् ।
नच तुल्यबलत्वम्; अनुकूलतर्कप्रतिकूलतर्काभावाभ्यां प्रतिपक्षानुमानानां 20
प्रबलत्वात् तदभावेन परोक्तानुमानानां दुर्बलत्वात् । प्रतिपक्षानुमानानि च—
त्वदुक्तपक्षः, त्वदुक्तसाध्याभाववान्, त्वदुक्तपक्षसाध्याभाववदन्यतरत्वात्,
साध्याभाववद्वत् । एवं जन्यसविकल्पकाजन्यचाक्षुषघटप्रमाणज्ञानं स्वजन-
नायोग्यस्वजन्यध्वंसप्रतियोगिस्वव्यतिरिक्तवस्तुपूर्वकं न भवति, घटं न
जानामीत्यनुभवविषयातिरिक्तस्वाजनकानिवर्तकज्ञानत्वात्, धारावाहिक- 25
द्वितीयज्ञानवत् । ज्ञानत्वमात्रं स्वजनकज्ञानेच्छाद्यनन्तरभाविनि विरोधि-
गुणतया तन्निवर्तकज्ञाने व्यभिचारीति स्वाजनकानिवर्तकेति, तन्मात्रं पक्षे

असिद्धम्; स्वाजनकाज्ञाननिवर्तकत्वस्य सन्दिग्धत्वात्, अतः पूर्वप्रतीकम् । घटनिवर्तके घटासमवायिकारणे ध्वंसे व्यभिचारवारणाय ज्ञानत्वादिति ॥

यद्वा—स एव पक्षः स्वसमानाधिकरणप्रागभावव्यतिरिक्तस्वजन्यध्वंसप्रतियोगिस्वसमानाधिकरणप्रत्यक्षस्वव्यतिरिक्तवस्तुपूर्वकं न भवति, घटं न जानामीत्यनुभवविषयस्वान्यज्ञानातिरिक्तभिन्नप्रत्यक्षभावानिवर्तकज्ञानत्वात्, 5 आद्यनिर्विकल्पकज्ञानवत् । अनुभवविषयेत्यन्तमतिरिक्तविशेषणम् । द्वितीयादिज्ञाने व्यभिचारवारणाय ज्ञानातिरिक्तपदम् । स्वनिवर्तकत्वेनासिद्धिवारणाय स्वान्येति ज्ञानविशेषणम् । इच्छादिनिवर्तकज्ञाने व्यभिचारवारणाय विशेषणद्वयम् । स्वनिवर्तकत्वेनेच्छादौ व्यभिचारवारणाय विषयेत्यन्तम् । प्रत्यक्षभावानिवर्तकत्वमसिद्धम्, स्वनिवर्तक- 10 त्वात् भावरूपाज्ञाननिवर्तकत्वसन्देहेन सन्दिग्धासिद्धं चेति पूर्वप्रतीकम् । निर्विकल्पकनिवर्तकतया स्वोत्पादकादृष्टनिवर्तकतया चासिद्धिवारणाय प्रत्यक्षपदम् । धारावाहिकप्रथमज्ञाने द्वितीयादिज्ञानप्रागभावनिवर्तकतया तस्य च घटं न जानामीत्यनुभवविषयत्वसन्देहेन च सन्दिग्धासिद्धिः आद्यनिर्विकल्पके साधनवैकल्यं चेति भावपदम् । ज्ञानपदस्य 15 पूर्वोक्तमेव प्रयोजनम् । दृष्टान्ते च ज्ञानानन्तरभाविनिर्विकल्पके साध्यसाधनवैकल्यपरिहारायाद्यपदम् । यद्वा—स्वसमानाधिकरणप्रागभावातिरिक्तस्वजननायोग्यस्वजन्यध्वंसप्रतियोगिस्वदेशगतस्वातिरिक्तवस्तुपूर्वकं न भवति, घटं न जानामीत्यनुभवविषयातिरिक्तस्वाजनकाभावानिवर्तकत्वात्, धाराद्वितीयज्ञानवत् । अत्र हेतुगतविशेषणानां प्रथमसाध्यहेतुवदेव प्रयो- 20 जनानि । भावपदं तु धाराद्यज्ञाने घटं न जानामीत्यनुभवविषयतया सन्दिह्यमानस्वानन्तरभाविघटसविकल्पकप्रागभावनिवर्तकतया सन्दिग्धासिद्धिवारणाय । ( अखण्डाभावत्वाच्च न व्यर्थता ) । इच्छाद्वेषप्रयत्नासमानकालीनसामग्रीजन्यभावरूपप्रत्यक्षधर्मो जनकस्वसामग्रीकालीनजन्यविशिष्टज्ञानाविषयविषयकघटादिप्रत्यक्षप्रमाणज्ञानातिरिक्तप्रत्यक्षनिवर्तिका 25 न भवति, इच्छाद्वेषप्रयत्नसमानकालीनसामग्रीजन्यभावरूपप्रत्यक्षधर्मजनकज्ञानत्वात्, द्वितीयादिज्ञानवत् । इच्छानिवर्तकेच्छाजनके व्यभिचारवारणाय

ज्ञानत्वादिति । यद्वा प्रत्यक्षधर्माजनकस्वसामग्रीकालीनजन्यविशिष्टज्ञाना-
न्विषयविषयकघटादिप्रत्यक्षप्रमा, कार्यस्वसमानाधिकरणातिरिक्तप्रत्यक्षनिव-
र्तिका न भवति । (१) कार्यातिरिक्तप्रत्यक्षनिवर्तिका न भवति (२)
जन्यज्ञानासहकृतसामग्रीजन्यध्वंसप्रतियोगिजातीयातिरिक्तज्ञानान्यप्रत्यक्ष-
5 निवर्तिका न भवति (३) जन्यज्ञानाजन्यध्वंसप्रतियोगिजातीयातिरिक्त-
ज्ञानान्यप्रत्यक्षनिवर्तका न भवति (४) गुणत्वानधिकरणप्रत्यक्षनिवर्तिका
न भवति । (५) स्वस्थितिक्षणनियतस्वविनाशसामग्रीमद्भिन्नप्रत्यक्षनिवर्तिका
न भवति । (६) चेष्टानपेक्षज्ञानाजन्यप्रत्यक्षनिवर्तिका न भवति । (७)
चेष्टाजन्यान्यकार्यातिरिक्तप्रत्यक्षनिवर्तिका न भवति । (८) चेष्टानिमित्त-
10 जातीयातिरिक्तप्रत्यक्षनिवर्तिका न भवति । (९) अहमनुभवविषयधर्मा-
तिरिक्तनिवर्तिका न भवति । (१०) प्रत्यक्षभावधर्माजनकज्ञानत्वात्
द्वितीयादिज्ञानवत् । चेष्टानपेक्षेत्यादिसाध्यद्वये चेष्टाव्यतिरिक्तं प्रत्यक्षं
पक्षः । हेतौ च चेष्टाजन्यान्यत्वं विशेषणम् । तेन चेष्टाप्रत्यक्षे न बाध-
व्यभिचारावित्यादीनि ॥

15 एवं महाविद्याभिरप्यज्ञानस्याभावत्वसिद्धिः । तथा हि—अयं घटाभावः
एतदभावाज्ञानान्यान्याभावान्यः मेयत्वात् घटवत् । (१) अज्ञानं स्वस्वे-
तरवृत्तित्वरहिताज्ञानवृत्तिधर्माधिकरणम् मेयत्वात् घटादिवत् । अज्ञानत्वं
स्वस्वेतरवृत्तित्वरहिताभाववृत्तिवृत्तिधर्माधिकरणं मेयत्वात् घटवत् । अभावत्वं[1]
स्वस्वेतरवृत्तित्वरहिताज्ञानवृत्तिवृत्तिधर्माधिकरणं मेयत्वात् घटवदित्यादीनि
20 महाविद्यानुमानानि ॥

### इति भावरूपाज्ञानानुमाननिरासप्रकरणं

नन्वेवमपि मिथ्याभूतप्रपञ्चोत्पत्त्यनुपपत्त्या भावरूपाज्ञानसिद्धिः; मिथ्या-
भूतप्रपञ्चस्य मिथ्योपादानं विनानुपपत्तेः, आत्मन एवोपादानत्वे प्रपञ्चस्य
सत्यत्वप्रसङ्गात्, [उपादानोपादेययोः समसत्ताकत्वनियमादिति चेन्न;
25 प्रपञ्चमिथ्यात्वस्यासिद्धेः । सिद्धौ च शुक्तिरजतादेः प्रसिद्धोपादानं विना
उत्पत्तिवत्] उपादानं विना मिथ्याभूतप्रपञ्चोत्पत्तौ विरोधाभावात् । नच

१ इदं वाक्यं—अभावत्वं—घटवत् इत्यंतं(ग)कोशे न ।

मिथ्याभूतप्रपञ्चभ्रमस्य दोषजन्यतया अविद्यैव दोष इति वाच्यम्; तन्मिथ्यात्वेन तत्रापि दोषान्तरापेक्षायामनवस्थाप्रसङ्गात् । अविद्यायाः स्वपरनिर्वाहकत्वे प्रपञ्चस्यैव दोषत्वमस्तु किमविद्याकल्पनया । किञ्च घटाद्यवयवानां क्लृप्तानामेवोपादानत्वसंभवेऽविद्योपादानत्वे मानाभावाच्च ॥

नन्वेवमपि ब्रह्मणो जगदुपादानत्वानुपपत्तिरेव भावरूपाज्ञाने प्रमाणम् । 5
तथाहि—परिणामित्वं ह्युपादानत्वम् । नच निर्विकारस्य ब्रह्मणः परिणामित्वं संभवतीति परिणाम्युपादानं किञ्चिदास्थेयम् । तच्च भावरूपाज्ञानमेवेति चेत् अस्तु तावदेवम्; तावता हि ब्रह्मविशेषणभूतं ब्रह्मोपादानत्वनिर्वाहकं परिणामिद्रव्यं किञ्चित् सिध्यति । तच्चास्मदभिमता प्रकृतिरेव न भावरूपाज्ञानमिति न ब्रह्मोपादानत्वानुपपत्तिरपि तत्र प्रमाणम् ॥ 10

किञ्च ब्रह्मोपादानत्वं श्रुतिसिद्धम्, प्रपञ्चमिथ्यात्वं च प्रामाणिकतया भवदभिमतम्, तथाच उभयानुरोधेन ब्रह्मण एव मिथ्यात्वेन प्रपञ्चोपादानत्वमस्तु किमतिरिक्तभावरूपाज्ञानकल्पनया । एवं सति उपादानद्वैविध्यकल्पनागौरवमपि नास्तीति ॥

नन्वस्तु तर्हि श्रुतिरेव भावरूपाज्ञाने प्रमाणम् । तथाहि—"अनृतेन 15
हि प्रत्यूढाः, तेषां सत्यानामनृतमपिधानम्, नासदासीन्नो सदासीत् तदानीं तम आसीत्तमसा गूढमग्रे प्रकेतम्, इन्द्रो मायाभिः पुरुरूप ईयते, अविद्यायामन्तरे वर्तमानाः, अजामेकां लोहितशुक्लकृष्णां, नीहारेण प्रावृत्ता इत्यादिका ॥

अत्रोच्यते—कथमेषां वाक्यानां भावरूपाज्ञाने प्रामाण्यम्, तद्वाचक- 20
शब्दाभावात् । अनृतशब्दो हि ऋतान्यवाची ऋतशब्दश्च सत्यवाची । तथाचासत्यं वस्तु अनृतशब्देनोच्यते । तच्च न भावरूपाज्ञानम् । प्रपञ्चमात्रस्यासत्यत्वात् । तथाच प्रत्यूढा इति ज्ञानप्रतिबन्धकत्वोक्त्या तादृशमेवानृतशब्देनोच्यते तच्च शरीरसंबन्धादिकमेव ॥

वस्तुतस्तु अनृतशब्दः पापकर्मपरः, प्रत्यूढा इति ज्ञानप्रतिबन्धकत्व- 25
श्रवणात् । तच्च पापकर्मणः सुप्रसिद्धम् ॥

पापं प्रज्ञां नाशयति क्रियमाणं पुनः पुनः । इति स्मृतेः । "एष ह्येवा-

साधुकर्म कारयति तं यमधो निनीषति" इत्यादिश्रुतेश्च । तत्राधोनयनं हि तत्त्वज्ञानप्रतिबन्धेन विपरीतज्ञानजननम् । तथाच ज्ञानप्रतिबन्धकत्वं पापकर्मणः सिद्धमित्यनृतशब्दः पापकर्मपरः एव ॥

एवं तमश्शब्दस्याप्यन्धकारे प्रसिद्धस्य ज्ञानप्रतिबन्धकत्वलक्षणया पाप-
5 कर्मपरत्वं सिद्धम् । तत्रैव तमसा गूढमिति ज्ञानप्रतिबन्धकत्वस्य कण्ठोक्तेश्च । यद्वा तमश्शब्दः प्रकृतिपरः; अक्षरं तमसि लीयते तमः परे देव एकी भवतीत्यत्र तमश्शब्देन प्रकृतेरभिधानात्, इन्द्रो मायाभिरित्यत्र मायाशब्दोऽपि न भावरूपाज्ञानपरः, किन्तु 'मायां तु प्रकृतिं विद्यादि'ति श्रुत्यनुसारेण प्रकृतिपरः । नच भ्रमहेतुवाचिना मायाशब्देन कथं प्रकृतेर-
10 भिधानम्, अज्ञानस्यैव भ्रमहेतुत्वादिति वाच्यम्; प्रकृतिसंबन्धस्यापि नानाविधभ्रमहेतुत्वेन तदभिधाने विरोधाभावात् । नच मायाशब्दस्य मिथ्यावाचित्वेन भावरूपाज्ञानसिद्धिरिति वाच्यम्; तस्य मिथ्यावाचित्वासिद्धेः । विचित्रसृष्टिहेतावेव लोके मायाशब्दप्रयोगदर्शनात् । एतेन अविद्याजानीहारशब्दा अपि कर्मपरत्वेन प्रकृतिपरत्वेन वा व्याख्याताः, श्रुत्यनु-
15 ग्राहकस्मृतयश्च कर्मप्रकृतिपरत्वेन व्याख्यातप्रायाः । तस्मान्न केनापि प्रमाणेन भावरूपाज्ञानसिद्धिरिति ॥

**इति श्रीवाधूलसुदर्शनगुरुविरचितायां वेदान्तविजयमङ्गलदीपिकायां भावरूपाज्ञानप्रमाणभङ्गः ॥**

---

20 **श्रीः**

## अज्ञानस्य प्रयोजनभङ्गः ।

प्रयोजनतिरोधानस्थानलक्षणभञ्जनात् ।
प्रकाशनाशकभ्रंशान्निवृत्तेरपि खण्डनात् ।
25 अज्ञानं तस्य निस्सत्त्वं परेषामज्ञतावहम् ।
अमूलं हि कुतस्तस्यात्प्रपञ्चपरिकल्पनम् ॥

किंच प्रयोजनाभावान्नाविद्याकल्पनम्—

ननु कथं प्रयोजनाभावः? अयमित्यनुभूयमानोऽप्यात्मा परिपूर्णब्रह्मानन्दाभिन्नोऽपि स्वप्रकाशतया प्रसक्तप्रकाशः न तथा प्रकाशते, तथाच तत्स्वरूपप्रकाशाभावायाविद्याकल्पनम्, तत्कल्पने च तदावृतत्वान्न प्रकाशते, स एवाप्रकाशस्तत्प्रयोजनमिति चेन्न; कोऽयं प्रकाशः यदभावस्तत्प्रयोजनं 5 स्वरूपमतिरिक्तं वा । नाद्यः; तस्यानादित्वेनोत्पत्तिप्रतिबन्धासंभवेन ब्रह्मस्वरूपस्यैवोच्छेदप्रसङ्गात् । ब्रह्मस्वरूपमात्रप्रकाशसत्वेन तदभावाय तत्कल्पनावैयर्थ्याच्च । न द्वितीयः; स्वरूपातिरिक्तप्रकाशाभावेन अपसिद्धान्तत्वात् । किंच सच प्रकाशः अनादिस्सादिर्वा । नाद्यः; तस्योत्पत्तिप्रतिबन्धासंभवेन तदभावस्तन्नाश एव स्यादिति मोक्षकाले तत्प्रकाशानुपपत्तेः । न द्वितीयः; 10 असंभवात् । न ह्यनादिस्वप्रकाशत्वप्रसक्तप्रकाशस्य सादित्वं संभवति ॥

किञ्चातिरिक्तप्रकाशः सत्यो मिथ्या वा । नाद्यः; अद्वितीयत्वभङ्गप्रसङ्गात् । न द्वितीयः; तस्य मोक्षकालेपि सत्त्वे मोक्षत्वभङ्गप्रसङ्गात्, ब्रह्मव्यतिरिक्तसकलनिवृत्तेरेव मोक्षत्वात् । अन्यथा तदुपादानभूताविद्यावस्थानस्यावश्यकतया अनिर्मोक्षप्रसङ्गात् । मोक्षकालेऽसत्त्वे च तस्य स्वप्रकाशत्व- 15 प्रयोजकत्वाभावप्रसङ्गात् । तस्मान्नाविद्यायाः किञ्चित्प्रयोजनम् ॥

**इति श्रीवाधूलसुदर्शनगुरुविरचितायां वेदान्तविजयमङ्गलदीपिकायामविद्याप्रयोजनभङ्गः ॥**

## अथाविद्यातिरोधानभङ्गः ।

तिरोधानमप्यनुपपन्नम् । कं प्रतीदमविद्याधीनं तिरोधानम् । न ताव- 20 द्ब्रह्म प्रति; तस्याज्ञानत्वप्रसङ्गात् सर्वज्ञत्वादिश्रुतिविरोधप्रसङ्गात् अहमज्ञ इत्यहमर्थनिष्ठत्वेनाज्ञानानुभवाच्च । नाप्यब्रह्म प्रतीदं तिरोधानम्; तस्य प्रकाशाप्रसङ्गेन तन्निवृत्त्यर्थं तिरोधानकल्पनावैयर्थ्यात् ॥

नन्वन्तःकरणावच्छिन्नचैतन्यं प्रति अशनायाद्यतीतस्वरूपाप्रतीत्यर्थं तिरोधानमिति चेन्न; किं स्वप्रकाशत्वप्रसक्तप्रकाशः स्वरूपमतिरिक्तो वा । 25 नाद्यः; स्वरूपनाशप्रसङ्गात् अहमिति स्वरूपप्रकाशसत्त्वेन तदभावासंभवाच्च । न द्वितीयः; स्वप्रकाशत्वप्रयोज्यत्वाभावप्रसंगात् ॥

किञ्च किमिदं तिरोधानम्, न तावद्वैशद्यविघटनम्; उक्तदोषात्। नाप्यवधारणत्वनिवर्तकम् अनवधारणत्वापादनं वा । उभयोः स्वरूपत्वे अविद्याधीनत्वासंभवात्, अतिरिक्तत्वे तस्य सत्यत्वे अद्वैतहानिः, मिथ्यात्वे चावधारणात्मकस्वरूपसत्त्वेन तन्निवर्तनतदभावापादनयोरसंभवात् । तस्मान्न 5 कथञ्चिदपि ब्रह्मस्वरूपतिरोधानसंभवः । जडस्वरूपतिरोधानं त्वनङ्गीकार-पराहतम्, अनुपपन्नं च; कारणतदभावाभ्यामेव जडप्रकाशतदभावयो-रुपपत्तेः । घटादिप्रकाशस्य कादाचित्कत्वसिद्धये तिरोधानमित्यप्यत एव निरस्तम् । कारणकादाचित्कत्वेनैव तदुपपत्तेः ॥

यत्तु नवीनोक्तम्—अस्ति प्रकाशत इति व्यवहारयोग्यताविरहः नास्ति 10 न प्रकाशत इति व्यवहारयोग्यता वा तिरोधानम् । तथा चानन्दोऽस्ति प्रकाशत इति व्यवहाराभावान्नास्ति न प्रकाशत इति व्यवहारसत्वाच्च आन-न्दरूपेण तिरोहितं चैतन्यं चैतन्यरूपेणातिरोहितं चेति न तिरोधानानुप-पत्तिरिति तदयुक्तम्; ब्रह्मणः स्वप्रकाशत्वेन अस्ति प्रकाशत इति व्यवहार-योग्यतायाः सर्वदा सत्त्वेन तदभावासंभवात् ॥

15 यदुक्तमानन्दरूपेण ब्रह्मणस्तिरोहितत्वं चैतन्यरूपेणातिरोहितत्वमिति तदप्ययुक्तम्; आनन्दवृत्तिदशायां तिरोधानासंभवात् तदभावदशायां त्वप्र-सङ्गादेव तिरोधानकल्पनावैयर्थ्यात् । निर्विशेषब्रह्मस्वरूपे रूपभेदासंभवाच्च । आनन्दस्य स्वरूपातिरिक्तवृत्तिरूपत्वे ब्रह्मावरणमज्ञानमिति सिद्धान्तभङ्गप्रस-ङ्गात् । नापि चिदानन्दभेदाध्यासात् तिरोधानतदभावयोरुपपत्तिः । भेदा-20 ध्यासादेवानन्दस्वरूपाप्रकाशोपपत्तेस्तिरोधानकल्पनावैयर्थ्यात् ॥

किञ्च चिदानन्दभेदकल्पने किं प्रमाणम् । तिरोधानान्यथानुपपत्तिरेवेति चेन्न; तिरोधानस्यैव सन्दिग्धत्वात् । प्रत्युताज्ञानेनावृतं ज्ञानमिति चैतन्य-तिरोधानस्यैव प्रमाणसिद्धत्वाच्च । अस्तु वा भेदकल्पनम्, अथापि न तिरोधानतदभावव्यवस्थोपपत्तिः । चन्द्रभेदभ्रमेऽपि प्रकृष्टप्रकाशत्ववर्तुल-25 त्वादेस्तिरोधानतदभावव्यवस्थाया अदर्शनत्वात् चन्द्रस्वरूपावारकमेघादि-सत्वे उभयोरप्यप्रकाशनात् एकप्रकाशादर्शनाच्च । यदपि नवीनोक्तमनु-मानं अहं ब्रह्मेति स्वव्यवहारसामग्रीसंपन्नः प्रत्यगात्मा तादृशव्यवहारप्रति-

कूलधर्मवान्, तत्सामग्र्यां सत्यां तदभाववत्त्वात् तद्विपरीतव्यवहारवत्त्वाद्वा, यथा भ्रमगृहीतशुक्तिकेति । तदप्यनुपपन्नम्; पक्षविशेषणवैयर्थ्यात् । नच मुक्तव्यावृत्त्यर्थं तदिति वाच्यम्; मुक्तिकालेऽपि स्वप्रकाशतारूपसामग्रीसत्त्वेन तद्व्यावर्तनायोगात् । नच तदा वागादिसहकारिविरहात् सामग्रीवैकल्यमिति वाच्यम्; तथापि तत्त्वमस्यादिवाक्यार्थज्ञानकाल एव तत्सा- 5 मग्रीसत्त्वेन तदानीं हेत्वसिद्धेः ॥

किञ्च अद्वैतसाक्षात्कारपर्यन्तमविद्यावरणयोरनुवृत्तिर्हि भवदभिमता । व्यवहारश्च श्रवणमारभ्यास्तीति तदानीमेवावरणनिवृत्तिरङ्गीकार्या; आवरणस्य व्यवहारप्रतिकूलत्वोक्तेः । तथाचापसिद्धान्तः । दृष्टान्तोऽपि साध्यसाधनविकलः; शुक्तिपदेन स्वरूपविवक्षायां शुक्तिस्वरूपस्येदमिति व्यवहारात् 10 स्वरूपव्यवहारप्रतिबन्धासिद्धिश्च । शुक्तित्वविवक्षायामपि तथैव शुक्तित्वज्ञानाभावेनैव तद्व्यवहाराभावोपपत्तौ व्यवहारप्रतिबन्धककल्पनावैयर्थ्याच्च ॥

वस्तुतस्तु आनन्दमयब्रह्मस्वरूपाभेदोपस्थापकं किञ्चिदङ्गीक्रियते न वा । आद्ये तदभावादेव तादृशब्रह्मस्वरूपाप्रकाशोपपत्तौ तिरोधानकल्पनं व्यर्थम् । द्वितीये कदापि तिरोधाननिवृत्त्यभावेनानिर्मोक्षप्रसङ्गात् । नच स्वप्रकाशत्व- 15 प्रसक्ततादृशब्रह्मस्वरूपप्रकाशाभावार्थं तिरोधानमिति वाच्यम्; तादृशसामग्रीविरहादेव स्वप्रकाशत्वप्रसक्तप्रकाशाभावस्यैव कल्पयितुमुचितत्वात् ॥ इयांस्तु विशेषः । स्वप्रकाशत्वेन प्रसक्तस्यापि प्रकाशस्य त्वन्मते अविद्यातिरोधानेनाभावः अस्मन्मते तु सामग्र्यभावेनेति । नच स्वप्रकाशत्वप्रसक्तप्रकाशस्य नित्यतया तत्त्वमस्यादिवाक्यं कथं जनकं भवेदिति 20 वाच्यम्; अज्ञानस्यापि तादृशप्रकाशाभावापादकत्वासंभवात् । यदिच कथञ्चित् तत्संभवोपपादनं तदास्माकमपि तुल्यमिति तत्त्वम् ॥

**इति श्रीवेदान्तविजयमङ्गलदीपिकायां अज्ञानस्य तिरोधानभङ्गस्तृतीयः ॥**

श्रीः

## अविद्यालक्षणभङ्गः प्रारभ्यते ।

किञ्चाज्ञानस्याश्रयोऽपि दुर्वचः ॥

5 अत्र केचिदाहुः—घटाद्यज्ञानं घटादिचैतन्यनिष्ठमेव, अन्यथा तत्र वल्मीकादिविक्षेपासंभवात्, दृश्यते च घटादौ वल्मीकादिविक्षेपः, उपादानं हि स्वाधिकरण एव कार्यं जनयति, मृत्पिण्डादौ तथा दर्शनात् । तथाच घटाद्यज्ञानमपि तन्निष्ठमेव सत्तद्गतवल्मीकाद्युपादानं भवति, नच कथं तर्हि अहमिदं न जानामीत्यहमर्थगताज्ञानप्रतीतिरिति वाच्यम्; अह-10 मर्थगतमूलाज्ञानाभेदेन तत्प्रतीत्युपपत्तेरिति । तदयुक्तम्; सर्वं प्रपञ्च-विवर्तोपादानस्यैवाज्ञानस्य रजतोपादानत्वसंभवे शुक्त्यज्ञानस्य तदुपादानत्व-कल्पने मानाभावात् । प्रमातृगतस्यैव शुक्त्यज्ञानस्य वृत्त्या सह शुक्त्यादौ निर्गतस्य रजताद्युपादानत्वसंभवाच्च । किञ्च यदि शुक्तिगतमेवाज्ञानं रजत-विक्षेपकरं तदा देवदत्तस्य रजतविक्षेपदशायां यज्ञदत्तस्यापि तत्प्रसङ्गः । 15 तथाच देवदत्तगतमज्ञानं देवदत्तस्य विक्षेपकरम्, नतु यज्ञदत्तस्येति कल्प-नीयम् । तथाच कथं घटादिचैतन्यगताज्ञानसिद्धिः, घटादिचैतन्यगताज्ञानस्य कथमिदमहं न जानामीत्यहमर्थगतत्वे प्रतीतिः । नचावस्थातद्वतोरभेदेन प्रतीत्युपपादनम्; शुक्त्याद्यज्ञानानामनादित्वेनावस्थात्वासिद्धेः ॥

अपरे तु—अज्ञानानुभवे अधिष्ठानचैतन्यप्रमातृचैतन्ययोर्वास्तवाभेद एव 20 प्रयोजकः, विषयचैतन्याश्रितस्याप्यज्ञानस्य प्रमातरि स्वरूपसंबन्धविशेषेण शाखाग्रे चन्द्रमा इतिवन्मय्यज्ञानमिति प्रतीतिरुपपद्यत इति । तदप्य-युक्तम्; शुक्त्यज्ञानस्य प्रकाशासंभवप्रसङ्गात् । शुक्तिचैतन्यप्रमातृचैतन्ययो-र्भेदात् । वास्तवाभेदात् तत्प्रकाशे विश्वप्रकाशप्रसङ्गः ॥

किञ्च वास्तवाभेदेनाज्ञानप्रकाशे अहमज्ञ इति कथमज्ञानस्य स्वगतत्वेन 25 प्रतीतिः । यदि च वास्तवाभेदेन तस्याप्युपपादनम्, तदा यज्ञदत्तस्य शुक्त्यज्ञाने देवदत्तस्य शुक्तिज्ञाने यज्ञदत्तस्य शुक्तिं जानामीति प्रतीति-प्रसङ्गः । देवदत्तस्य शुक्तिं न जानामीति प्रसङ्गश्च । यदुक्तं शाखाग्रे

चन्द्रमा इति न्यायेन अहं न जानामीति प्रतीतिरिति—तदपि न युक्तम्; तत्र शाखापदस्य देशविशेषलक्षकत्वेन देशविशेष एव तत्प्रतीत्या शाखायां तदभावेन तन्न्यायाप्रवृत्तेः ॥

ननु मास्तु तन्न्यायः, उक्तरीत्या स्वरूपसंबन्धविशेषणतया प्रतीतिः संभवतीति चेन्न; मय्यज्ञानमित्यज्ञानाश्रयत्वप्रतीत्यनुसारेण स्वनिष्ठस्यैव मूला- 5 ज्ञानस्य विषयावारकत्वस्याध्यासोपादानत्वस्यासाधारणार्थोत्पादनसामर्थ्यस्य च स्वप्नार्थानुसारेण संभवे विषयचैतन्यगताज्ञानकल्पने मानाभावात् ॥

एके तु शुक्त्याद्यज्ञानस्याहमर्थचैतन्यमाश्रयः, शुक्त्यवच्छिन्नचैतन्यं विषयः, रजतादिकं चाज्ञानचैतन्यविवर्तः नाज्ञानविवर्त इति—तदप्ययुक्तम्; चैतन्यस्याधिष्ठानत्वेऽपि परिणामित्वासंभवात् । परिणाम्यनपेक्षायां 10 मिथ्यात्वानुपपत्त्या अज्ञानकल्पनं न स्यात् । परिणामिनमनपेक्ष्यापि अनिर्वचनोत्पत्तिकल्पनायामिन्द्रियार्थसन्निकर्षाभावेऽपि भ्रमोत्पादः कुतो न स्यादित्यनिर्वचनोच्छेदप्रसङ्गो दुर्वारः ॥

अपरे तु शुक्त्याद्यज्ञानं शुक्त्याद्यवच्छिन्नचैतन्यनिष्ठमहङ्कारावच्छिन्नचैतन्यनिष्ठं च, शुक्त्याद्यवच्छिन्नचैतन्यनिष्ठत्वात्तत्राध्यास उपपद्यते, अह- 15 ङ्कारावच्छिन्नचैतन्यनिष्ठत्वादहं न जानामीति प्रतीतिश्चोपपद्यत इति, तदप्ययुक्तम्; प्रपञ्चोपादानस्यैवाज्ञानस्य रजतोत्पादकत्वसंभवे शुक्त्याद्यवच्छिन्नचैतन्यगतत्वकल्पने मानाभावात् ॥

इतरे तु शुक्तिमहं न जानामीत्यनुभवो मूलाज्ञानविषयः, शुक्त्यनवच्छिन्नचैतन्यस्यैवाज्ञानविषयत्वेऽपि शुक्त्यवच्छिन्नचैतन्यस्य तदभिन्नतया 20 शुक्तेरप्यज्ञानविषयताप्रतीतिरुपपद्यते, रजताद्युपादानमज्ञानं तु कार्यानुपपत्तिकल्प्यम्, कार्यं च रजताध्यासः, ज्ञानेनाज्ञानं निवृत्तमित्यनुभवो वेति, तदप्ययुक्तम्; मूलाज्ञानस्यैवाहमज्ञ इति प्रतीतिविषयत्वे विषयगताज्ञानाप्रसिद्धिप्रसङ्गात् । मूलाज्ञानस्यैव रजताध्यासहेतुत्वसंभवात् । ज्ञानेनाज्ञानं निवृत्तमित्यनुभवो नाज्ञानकल्पकः; तस्य परोक्षज्ञानसाधारणतया ज्ञानाभाव- 25 विषयतावश्यम्भावात् । नच ज्ञानप्रागभावो न ज्ञाननिवर्त्यः, ज्ञानस्यैव

प्रागभावनिवृत्तिरूपत्वादिति वाच्यम्; घटेन घटाभावो निवृत्त इतिवत् तादधीन्यमात्रेण तत्प्रतीत्युपपत्तेः ॥

किञ्च किं मूलाज्ञानं विषयावच्छिन्नचैतन्यावारकं उत न? आद्ये तत एव विक्षेपोपपत्तौ विषयगताज्ञानकल्पने मानाभावः। द्वितीये तद्विषयत्वानु-
5 भवविरोधः, किमपि न जानामीत्यनुभवात् ॥

नच मूलाज्ञानविषयब्रह्माभिन्नतया घटावच्छिन्नचैतन्यस्य तद्विषयताप्रतीतिरिति वाच्यम्; घटज्ञानकालेऽपि घटं न जानामीत्यनुभवप्रसङ्गात्। किञ्च न जानामीति प्रतीयमानस्य मूलाज्ञानस्य किमन्तःकरणमाश्रयश्चैतन्यं वा? नाद्यः; जडत्वादेव तदप्रकाशोपपत्तौ तत्कल्पने मानाभावात्। न द्वि-
10 तीयः; स्वयं प्रकाशमानस्य स्वगोचराज्ञानवत्त्वायोगात्। न चान्तःकरणावच्छिन्नचैतन्यमाश्रयः; स्वरूपस्य प्रकाशमानतया तदप्रकाशाय तत्कल्पनायोगात्। अखण्डानन्दस्वरूपाप्रकाशाय तत्कल्पनं दूषितमेव ॥

यत्तु नवीनोक्तम्—भासमानेऽप्यात्मन्यज्ञानं सर्वैरभ्युपगन्तव्यम्; अन्यथा शरीराद्यभेदभ्रमानुपपत्तेः, एवमनभ्यासदशापन्नजलादिज्ञाने सत्यपि
15 संशयानुरोधेनाज्ञानमङ्गीकरणीयम्, यदि सत्तानिश्चयरूपत्वाभावेन तत्राज्ञानमविरुद्धम् तदा ब्रह्मण्यपि तुल्यम्, पूर्वं ब्रह्मज्ञानस्य सत्तानिश्चयरूपत्वाभावेनाज्ञानाश्रयत्वाविरोधादिति—

तदप्ययुक्तम्; सत्तानिश्चयरूपज्ञानस्य सामग्रीविशेषलभ्यत्वेन तदभावादेव तदभावोपपत्तौ आवरणकल्पनावैयर्थ्यात्। नचानवधारणेनानन्दस्वरूप-
20 ब्रह्मज्ञानेन तद्व्यवहारप्रसङ्गवारणाय तदिति वाच्यम्; अनवधारणेनापि जलादिज्ञानेन तद्व्यवहारदर्शनेन सत्यप्यावरणे तद्व्यवहारस्यावर्जनीयत्वात्। न ह्यावरणं व्यवहारप्रतिबन्धकम्; आवरणस्य व्यवहारजनकज्ञानविघटकतयैव प्रतिबन्धकत्वस्य लोके दृष्टत्वात् ॥

किञ्च स्वरूपं किं अवधारणात्मकमनवधारणात्मकं वा? नाद्यः; अज्ञान-
25 तत्कार्ययोरसंभवादवधारणस्य तद्विरोधित्वात्। न द्वितीयः; कदाप्यज्ञानानिवृत्तिप्रसङ्गात् ब्रह्मस्वरूपस्य नित्यत्वात्। नचानवधारणत्वेऽपि वृत्त्यापादि-

तमवधारणत्वं तस्य संभवतीति तदानीमज्ञाननिवर्तकत्वमिति वाच्यम्; तथा सत्यावरणकल्पनावैयर्थ्यात् ॥

किञ्च स्वरूपस्यानवधारणात्मकत्वे चैतन्यस्वरूपेऽपि तथात्वेन तद्व्यवहारस्याप्यभावप्रसङ्गात् । निरंशत्वेन ब्रह्मण्यंशभेदासंभवात् ॥

यत्तु अविद्याया अनुपपत्तिपरिष्कृतत्वात् प्रकाशमानेऽपि चैतन्ये अनुप- 5 पन्नमप्यज्ञानाश्रयत्वं संभवतीति । तदत्यन्तासङ्गतम्; अविद्यामाहात्म्येनानुपपन्नार्थानां सर्वेषामपि बाधरूपप्रतिबन्धकरणमुन्मादमूलं स्यात् । किञ्चाज्ञानस्य चैतन्यमात्राश्रयत्वे जीवे संसारहेतुता न स्यात् वैयधिकरण्यात् । नच चैतन्यस्यैव जीवेशविभागात् सामानाधिकरण्यमिति वाच्यम्; ईश्वरस्यापि संसारप्रसङ्गात् ॥ 10

अत्र केचिदाहुः—अन्तःकरण एव सुखदुःखानुभवरूपो बन्धः । तस्य चैतन्याध्यस्ततया तदभेदेन तद्धर्मानुभवस्तत्र न विरुद्धः । नच चैतन्यस्य संसारित्वानुपपत्तिः—तदध्यासाधिष्ठानत्वस्यैव बन्धरूपत्वात्, तत एव तस्यानर्थाश्रयत्वाभिमानोऽपीति—तन्न; चेतनस्य संसारित्वानुपपत्तेः । अन्तःकरणतादात्म्याध्यासेन स्वस्मिन्ननर्थाश्रयत्वाभिमाने तस्यैव दोषत्वेन अन्तः- 15 करणे संसाराङ्गीकारवैयर्थ्यात् "ह्रीर्धीर्भीरित्येतत्सर्वं मन एवे"ति वाक्यं तत्कार्यपरत्वान्न तस्य संसारित्वे प्रमाणम् ॥

अन्ये तु अन्तःकरणगतचैतन्यप्रतिबिम्बरूपो बिम्बाद्भिन्नोऽसत्यश्चिदाभासो बन्धाश्रयः, नच बन्धमोक्षयोर्वैयधिकरण्यम्; अन्तःकरणावच्छिन्नस्वरूपस्यैव संसारिणः परमार्थतो मुक्त्यन्वयित्वेन तदभावादिति, तद- 20 प्युक्तदोषेणैव निरस्तम्—चैतन्यस्यैवानर्थाश्रयत्वाभिमानोक्तेः ॥

परे तु अन्तःकरणविशिष्टो जीवः तत्रैव संसारः । नच बन्धमोक्षयोर्वैयधिकरण्यम्, विशिष्टस्य संसारात् शुद्धस्य मुक्तेरिति वाच्यम्; विशेष्यस्वरूपैक्येन तदभावादिति, तदप्ययुक्तम्; विशेष्ये संसाराङ्गीकारे विशेषणे तदङ्गीकारवैयर्थ्यात् । नच 25

आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ।

इति वचनात् विशिष्टे संसार इति वाच्यम्; तस्य भोगसहकारिप्रतिपाद-
नपरत्वात्। अन्यथा इन्द्रियविशिष्टस्यापि संसारप्रसङ्गात् ॥

अपरे तु केवलश्चेतन एव कर्तृत्वादिबन्धाश्रयः कर्तृत्वाद्याश्रयान्तःकर-
णसन्निधानात् कर्तृत्वान्तराध्यासोपपत्तेः। नच चैतन्यस्यैकत्वात् व्यवस्था-
5 नुपपत्तिः; शाखाग्ररूपोपाधिभेदेन संयोगतदभावव्यवस्थावदुपाधिभेदेन तदु-
पपत्तेरिति, तदप्ययुक्तम्; अहमित्यन्तःकरणतादात्म्याध्यासस्यावश्यक-
तया तत एव कर्तृत्वाभिमानोपपत्तौ कर्तृत्वान्तराध्यासकल्पनावैयर्थ्यात् ॥

इतरे तु चेतन एवोपाधिवशात् भेदकल्पना। तत एव व्यवस्था।
मणिकृपाणाद्युपाधिकल्पितेन भेदेन मुखे श्यामावदातवर्तुलदीर्घत्वादिधर्माणां
10 व्यवस्थादर्शनात्, चन्द्रे अङ्गुल्यवष्टम्भोपाधिकल्पितेन भेदेन औत्तरत्वदा-
क्षिणात्यत्वादिधर्माणां व्यवस्थादर्शनाच्चेति, तदपि न युक्तम्; भेदाध्या-
सेऽपि धर्म्यैक्येन व्यवस्थानुपपत्तेः ॥

वयं तु विवेचयामः। किं चैतन्यमज्ञानाश्रयः तद्भिन्नं वा? नाद्यः;
स्वप्रकाशरूपचैतन्ये तदसंभवात्। नच विशिष्टे तत्संभव इति वाच्यम्;
15 विशिष्टं हि विशेषणं विशेष्यं च, तत्र विशेषणमात्रगतत्वे चैतन्यगत-
त्वभङ्गः, उभयगतत्वे पूर्वोक्तासंभवस्तदवस्थः ब्रह्मणोऽज्ञत्वप्रसङ्गश्च। नच
तत्र ब्रह्मगतत्वेऽप्यज्ञानस्य तत्कार्यमन्तःकरणस्यैवेति नाज्ञानकृतदोषो ब्रह्मण
इति वाच्यम्; तथासति तत्राज्ञानाङ्गीकारवैयर्थ्यात् अन्तःकरण एव
तदङ्गीकारस्य युक्तत्वाच्च ॥

20 नचानाद्यज्ञानस्यानादिभूतं ब्रह्मैवाश्रयः नान्तःकरणमिति वाच्यम्;
तावता प्रवाहानादित्वमस्याभ्युपगन्तुं युक्तत्वात्। नच जडत्वान्नान्तःकरणम-
ज्ञानाश्रय इति वाच्यम्; तावता आकाशादिवन्निरधिकरणस्यैवाज्ञानस्या-
भ्युपगन्तुं युक्तत्वात्। न द्वितीयः, अपसिद्धान्तात्। प्रकाशप्रसङ्गाभावेन
तत्राज्ञानाङ्गीकारवैयर्थ्याच्च। तस्मात् स्वप्रकाशब्रह्मचैतन्यभिन्नं चैतन्यं
25 किञ्चिदज्ञानाश्रयत्वेनाभ्युपगन्तव्यम्। ततश्च जीवब्रह्मभेदोऽकामेनाप्यङ्गी-
करणीय इति ॥

**इति श्रीवेदान्तविजयमङ्गलदीपिकायां अज्ञानाश्रयभङ्गः ॥**

श्रीः

## अथ अविद्यास्वरूपभङ्गः प्रारभ्यते ।

किञ्च अविद्यास्वरूपमपि दुर्वचम् ॥

तथाहि—अविद्या किं पारमार्थिकी व्यावहारिकी प्रातिभासिकी वा ? 5
नाद्यः; अद्वैतहानिप्रसङ्गात्, भिन्नसत्ताकत्वेन प्रपञ्चोपादानत्वानुपपत्तेश्च ।
न द्वितीयः, प्रातिभासिकोपादानत्वानुपपत्तेः । न तृतीयः, व्यावहारि-
कोपादानत्वानुपपत्तेः । भिन्नसत्ताकस्याप्युपादानत्वे ब्रह्मण एव प्रपञ्चोपा-
दानत्वसंभवे अविद्याकल्पनावैयर्थ्यात् ॥

ननु तर्हि कथमसत्यादेव रजतादेर्हर्षो जायते रज्जुसर्पादेर्भीतिः शङ्का 10
विषान्मरणं भावितगरुडात् गरलहरणमिति चेन्न; सर्वत्र ज्ञानस्यैव हेतु-
त्वात् । नच ज्ञानमात्रस्य हेतुत्वेऽतिप्रसङ्गाद्विषयावच्छिन्नस्य हेतुत्वमिति
विषयस्यापि हेतुतेति वाच्यम्; विषयस्यावच्छेदकतया हेतुत्वाभावात् ।
अन्यथा दण्डत्वस्यापि हेतुत्वापत्तेः । अविद्यायाः परिणामित्वाङ्गीकारेण
कार्यपरिणामिनोरभेदेन च भिन्नसत्ताकाविद्याया उपादानत्वासंभवाच्च ॥ 15

किञ्च अविद्यालक्षणमपि दुर्वचम् ॥

यत्तावदनादित्वे सति स्वजन्यानपेक्षज्ञाननिवर्त्यत्वमविद्यात्वम्, अत्र
स्मृतिनिवर्त्यसंस्कारेऽतिव्याप्तिवारणाय सत्यन्तम्, ब्रह्मण्यतिव्याप्तिवारणाय
ज्ञाननिवर्त्यत्वमिति, अविद्याकार्येऽतिव्याप्तिवारणाय स्वजन्यानपेक्षेति, तस्य
स्वजन्याविद्यानिवृत्तिसापेक्षज्ञाननिवर्त्यत्वात् तन्निरासः इति—तन्न; असं- 20
भवात् । ज्ञाननिवर्त्यत्वं हि ज्ञानजन्यनिवृत्तिप्रतियोगित्वम् । नचा-
विद्यायामेतदस्ति । ब्रह्मण एवाविद्यानिवृत्तित्वेन तस्य ज्ञानजन्यत्वाभावात् ।
नच ज्ञानजन्यत्वं हि ज्ञानसाध्यत्वम्, तच्च ब्रह्मणोऽस्तीति वाच्यम्;
ब्रह्मसाध्यत्वस्यास्यानन्तरमेव निरसिष्यमाणत्वात् अविद्यासंबन्धे अतिव्या-
प्तिश्च । अविद्यातत्संबन्धनिवृत्त्यामपि ब्रह्मस्वरूपत्वेन आत्माश्रयप्रसङ्गेन 25
अविद्या(संबन्ध)निवृत्तेः ज्ञानजन्याविद्यानिवृत्तिरूपब्रह्मस्वरूपानपेक्षणात् ॥

किञ्च ज्ञानपदेन किं चैतन्यं विवक्षितं वृत्तिर्वा? नाद्यः; स्मृतिजनकसंस्कारस्य वृत्तिरूपस्मृतिनिवर्त्यत्वेन ज्ञाननिवर्त्यत्वविशेषणेनैव तद्वारणेन आदिपदवैयर्थ्यात्। न द्वितीयः; वृत्तेरावरणनिवर्तकत्वं चैतन्यस्य अविद्यानिवर्तकत्वमिति मते असंभवादावरणे अतिव्याप्तिश्च। मतान्तरेऽप्येका-
5 ज्ञानपक्षे इदं लक्षणं नानाज्ञानपक्षे वा? नाद्यः; घटादिज्ञानानामज्ञाननिवर्तकत्वाभावेनावरणनिवर्तकत्वादावरणनिवृत्तेरज्ञाननिवृत्त्यनपेक्षत्वादावरणे अतिव्याप्तिः। न द्वितीयः; यदज्ञानं स्वसमानविषयकज्ञानानुदयेनानिवृत्तं अखण्डसाक्षात्कारजन्याखण्डाज्ञाननिवृत्त्या निवर्तते, तत्रातिव्याप्तेः॥

नच तस्याप्यनादित्वेनाखण्डाज्ञानानुपादानत्वेन तेन सहैव निवृत्तिरिति
10 वाच्यम्; तथासत्यावरणस्याप्यजन्यतया अखण्डाज्ञाननिवृत्त्यनपेक्षनिवृत्तित्वेन तत्रातिव्याप्तेः। यदिच तस्य तदधीनत्वात् तन्निवृत्त्यधीननिवृत्तिकत्वम्, तदा कृत्स्नस्याप्यखण्डाज्ञानाधीनत्वेन तन्निवृत्त्यधीननिवृत्तिकत्वमेवेत्यव्याप्तिः। अखण्डाज्ञानेन ब्रह्मस्वरूपावरणाभावे अध्यासस्यैवासंभवेन कृत्स्नस्याप्यखण्डाज्ञानाधीनत्वात्। यत्तु ज्ञानत्वेन स्वजन्यानपेक्षज्ञाननिव-
15 र्त्यत्वमविद्यात्वम्, अत्र संस्कारे अतिव्याप्तिवारणाय ज्ञानत्वेन निवर्तकत्वं विवक्षितमिति तन्न; परोक्षज्ञानस्याज्ञानानिवर्तकतया ज्ञानत्वस्य निवर्तकत्वावच्छेदकत्वाभावेनासंभवापत्तेः। ननु ज्ञानत्वेन चित्सामान्यरूपेण यत्स्वजन्यं तदनपेक्षं यत् ज्ञानं तेन रूपेण तन्निवर्त्यत्वमज्ञानत्वमित्यर्थः, आवरणनिवर्तकसाक्षात्काररूपवृत्त्यपेक्षत्वेनासंभववारणाय ज्ञानत्वेन जनकत्वं
20 विवक्षितम्, "तदा विद्वान्नामरूपाद्विमुक्त" इत्यादिशास्त्रेणाज्ञानकार्यस्यापि शास्त्रज्ञाननिवर्त्यत्वावगमेन तत्रातिव्याप्तिवारणाय स्वजन्यानपेक्षेति, ज्ञानं हि स्वजन्याविद्यानिवृत्तिसहकृतमेव तत्कार्यं निवर्तयतीति न तत्रातिव्याप्तिः, स्मृतिनिवर्त्यसंस्कारेऽतिव्याप्तिवारणाय ज्ञानत्वेन निवर्तकता विवक्षितेति चेन्न; तथा विद्वानित्यज्ञानकार्यस्यापि साक्षादेव ज्ञाननिवर्त्यत्वश्रवणेन
25 तत्रातिव्याप्तेर्दुष्परिहरत्वात्। यच्च स्वसमानविषयकज्ञानप्राक्कालनियतसत्ताकत्वे सति तादृशज्ञाननिवर्त्यत्वमविद्यात्वम्, अत्र संस्कारेऽतिव्याप्तिवारणाय सत्यन्तम्; घटाद्यज्ञानादौ घटादिज्ञानप्राक्कालनियतसत्ताकत्वाभावे-

नाव्याप्तिवारणाय स्वसमानविषयकेति, पुनः संस्कारनिरासाय नियतेति, भिन्नविषयकज्ञाननिवर्त्यत्वाभावेनासंभववारणाय तादृशेति, तन्न; पूर्वपूर्वज्ञानेऽतिव्याप्तेः, तस्योत्तरोत्तरज्ञाननिवर्त्यत्वात् । पूर्वपूर्वज्ञानसत्तायाः परब्रह्मस्वरूपत्वेन उत्तरोत्तरज्ञानप्राक्कालनियतत्वाच्च ब्रह्मावरणेऽतिव्याप्तेर्ज्ञानपदद्वयवैयर्थ्याच्च । किञ्च ज्ञानपदेन चैतन्यरूपं ज्ञानं विवक्षितं वृत्तिरूपं 5 वा । नाद्यः, असंभवात् । ब्रह्मस्वरूपचैतन्यस्याविद्याविषयब्रह्मविषयत्वासंभवात्, स्वस्य स्वविषयत्वायोगात्, अविद्यायाः ब्रह्मस्वरूपचैतन्यप्राक्कालनियतसत्ताकत्वासंभवाच्च । न द्वितीयः; असंभवादेव, वृत्तेरज्ञानत्वेनानिवर्तकत्वात् । तदवच्छिन्नचैतन्यविवक्षायां घटाद्यज्ञानेष्वव्याप्तेः । घटावच्छिन्नचैतन्यस्यैवाविद्याविषयत्वात् तस्यैव चैतन्यस्य घटाकारवृत्त्यवच्छि- 10 न्नचैतन्यत्वात् । तस्य घटावच्छिन्नचैतन्यविषयत्वासंभवेन स्वसमानविषयकज्ञानप्राक्कालव्यापित्वतन्निवर्त्यत्वयोरभावात् । घटावच्छिन्नस्यैव वृत्तौ प्रतिबिम्बाङ्गीकारात् । आरोपितभेदेन विषयत्वोपपत्तिरित्यपि दुर्वचम्; प्रमातृसंबन्धाभावप्रसङ्गात् । नहि घटावच्छिन्नचैतन्यप्रतिबिम्बस्य प्रमातृतासंभवः ॥

ननु घटाद्यवच्छिन्नचैतन्यस्य वृत्तिव्याप्त्या तदवच्छिन्नचैतन्येनाभेदात् 15 प्रमातृभेदः तत्प्रतिबिम्बस्य तद्विषयत्वमपि युज्यत इति चेन्न; प्रतिबिम्बस्य प्रमातृभेदसंबन्धघटकत्वाभावेन तदङ्गीकारवैयर्थ्यात् ॥

यदपि अव्यवधानत्वेन ज्ञानत्वेन ज्ञानसाध्यनिवृत्तिप्रतियोगित्वमविद्यात्वम् । अत्राविद्याकार्येऽतिव्याप्तिवारणायाव्यवधानेनेति, तद्धि अविद्यानिवृत्तिव्यवधानेन ज्ञाननिवर्त्यत्वमिति तन्निरासः, संस्कारेऽतिव्याप्तिवार- 20 णाय ज्ञानत्वेनेति, तदपि न सम्यक्; असंभवात्, अविद्यासंबन्धनिवृत्तेरेवाविद्यानिवृत्तित्वात्, तस्याश्चाविद्यानिवृत्तिसाध्यत्वोक्त्या ज्ञानसाध्यत्वाभावादतिरिक्ताविद्यानिवृत्तेश्च दूषितत्वात् । सर्वस्यापि ज्ञानस्य स्वध्वंसजनकत्वेनातिव्याप्तेश्च । यदपि ज्ञानातिरिक्तागन्तुकानपेक्षज्ञाननिवर्त्यत्वमविद्यात्वम्, अत्र चाविद्याकार्येऽतिव्याप्तिवारणायागन्तुकानपेक्षेति, श्रवणादिसापेक्षापरो- 25 क्षज्ञाननिवर्त्यतयाऽसंभववारणाय ज्ञानातिरिक्तेति, तदपि न सुन्दरम्; अविद्यासंबन्धनिवृत्तेरविद्यानिवृत्तिसापेक्षत्वेऽपि तस्या ब्रह्मस्वरूपतया आगन्तुक-

त्वाभावेनाविद्यासंबन्धेऽतिव्याप्तेः। नचागन्तुकपदेन क्षेमसाधारणसाध्यत्वं विवक्षितमिति वाच्यम्; अविद्यासंबन्धनिवृत्तेरविद्यानिवृत्तिरूपब्रह्मस्वरूपतया तस्य तदनपेक्षत्वेन तत्रैवातिव्याप्तेः। ब्रह्मस्वरूपस्य ज्ञानातिरिक्तत्वाभावेनाविद्यासंबन्धे सर्वथातिव्याप्तेश्च। नच ज्ञानपदेन वृत्तिरूपज्ञानं विवक्षितम्,
5 तथाच ब्रह्मणो वृत्तिरूपज्ञानातिरिक्तत्वान्न तत्रातिव्याप्तिरिति वाच्यम्; तथासत्यसंभवापत्तेः। अविद्यासंबन्धनिवृत्तेरेवाविद्यानिवृत्तिरूपत्वेन तस्याश्च तादृशागन्तुकानपेक्षज्ञानजन्यत्वाभावात्॥ किञ्च त्रैवर्णिकस्य भाषाजन्यज्ञाने सत्यपि भाषाजन्यदुरितप्रतिबन्धान्नाज्ञाननिवृत्तिरित्यागन्तुकदुरितध्वंससापेक्षत्वात् तादृशज्ञाने असंभवः।

10 यदन्यच्च लक्षणम्—स्वसमानविषयकज्ञानजन्यध्वंसप्रतियोगित्वमविद्यात्वम्, अत्र गरुडध्याननिवर्त्यसर्पे अविद्याकार्ये चातिव्याप्तिवारणाय स्वसमानविषयकेति—तदप्यसत्; ज्ञानमात्रेऽतिव्याप्तेः। सर्वस्यापि ज्ञानस्य स्वसमानविषयकस्वजन्यध्वंसप्रतियोगित्वात्॥

नन्वेवमप्येतानि लक्षणानि संभवन्ति। तथा हि—ज्ञानविरोधिभावत्वं वा
15 प्रपञ्चोपादानत्वं वा अध्यासहेतुभावत्वं वा अनादिविनाशिभावत्वं वा अनादिपरिणामित्वं वा चैतन्यावारकत्वं वा सद्विलक्षणादिभावत्वं वा अविद्यालक्षणम्। अत्र प्रथमलक्षणे प्रागभावेऽतिव्याप्तिवारणाय भावपदम्। ब्रह्मण्यतिव्याप्तिवारणाय ज्ञानविरोधीति। द्वितीयलक्षणे उपादानत्वमात्रं च मृत्पिण्डादौ गतमिति प्रपञ्चपदम्। प्रपञ्चकारणत्वमात्रं निमित्तकारणे गत-
20 मित्युपादानपदम्। तृतीयलक्षणे प्रागभावनिरासाय भावपदम्। चतुर्थलक्षणे घटादावतिव्याप्तिनिरासायानादिपदम्। ब्रह्मण्यतिव्याप्तिवारणाय विनाशिपदम्। प्रागभाववारणायाभावपदम्। पञ्चमलक्षणे मृत्पिण्डादिवारणायानादिपदम्। ब्रह्मण्यतिव्याप्तिवारणाय परिणामिपदम्। षष्ठलक्षणे घटाद्यावारकपटादिवारणाय चैतन्यावारकपदम्। सप्तमलक्षणे च ब्रह्मण्यतिव्याप्ति-
25 वारणाय सद्विलक्षणपदम्। घटादिव्यावृत्तये अनादीति। भावपदप्रयोजनं पूर्ववदिति। मैवम्—प्रथमलक्षणे ज्ञानविरोधित्वं किं ज्ञाननिवर्त्यत्वं ज्ञानास-

मानाधिकरणत्वं वा ज्ञानासमानकालीनत्वं वा ज्ञानोत्पत्तिप्रतिबन्धकत्वं वा । नाद्यः; जन्यज्ञानमात्रेऽतिव्याप्तेः । सर्वस्यापि जन्यज्ञानस्य स्वनिवर्त्यत्वात् भावपदवैयर्थ्याच्च । न द्वितीयः; असंभवात् ज्ञानाज्ञानयोरहमर्थगतत्वेनाज्ञानस्य ज्ञानसमानाधिकरणत्वात् भावपदवैयर्थ्याच्च । न तृतीयः; अविद्यासंबन्धेऽतिव्याप्तेः आवरणेऽतिव्याप्तेश्च । नापि चतुर्थः; तादृशाधिका- 5 रादावतिव्याप्तेः ॥

द्वितीयलक्षणमप्ययुक्तम्; सकलप्रपञ्चविवक्षायां तूलाज्ञानेऽव्याप्तेः; यत्किञ्चित्प्रपञ्चविवक्षायां मृत्पिण्डादावतिव्याप्तेः ब्रह्मण्यतिव्याप्तेश्च, परिणाम्युपादानत्वविवक्षायां प्रपञ्चपरिणामित्वेनैव सामञ्जस्ये उपादानपदवैयर्थ्यात् । तावन्मात्रं च पूर्वोक्तदोषादेव निरस्तम् ॥ 10

तृतीयलक्षणमप्यनुपपन्नम्; अविद्यासंबन्धादावतिव्याप्तेः, अधिष्ठाने काचादिदोषे चातिव्याप्तेः । चतुर्थलक्षणमपि न समीचीनम्; अविद्यासंबन्धादावतिव्याप्तेरेव । पञ्चमलक्षणमपि न सुन्दरम्; तूलाज्ञानेऽव्याप्तेः । तस्यापि परिणामित्वाङ्गीकारे मूलाज्ञानस्य प्रपञ्चपरिणामित्वाङ्गीकारवैफल्यप्रसङ्गात्; तत्तद्वस्तुनस्तत्तदज्ञानपरिणामित्वेनोपपत्तेः । षष्ठलक्षणमपि न 15 शोभते; अविद्यासंबन्धादावतिव्याप्तेरेव ॥ अत एव सप्तमलक्षणमप्यसत् । सद्विलक्षणत्वस्य मिथ्यात्वभङ्गे निरसिष्यमाणत्वाच्च । तस्मान्न कथञ्चिदपि लक्षणं सुवचम् ॥

**इति श्रीवेदान्तविजयमङ्गलदीपिकायाम् अविद्यालक्षणभङ्गः पञ्चमः ॥** 20

---

श्रीः

## अथ अविद्याप्रकाशभङ्गः प्रारभ्यते ।

किञ्च अविद्याप्रकाशोऽपि दुर्वचः ॥ 25

कोऽयमविद्याप्रकाशः अविद्यास्वरूपं वा तदतिरिक्तं वा ? नाद्यः; जड-[1]

---

१ अजडत्वसत्यत्वप्रसङ्गात् ।

त्वासत्यत्वप्रसङ्गात् । द्वितीयेऽपि ब्रह्मव्यतिरिक्तं वा ब्रह्मैव वा? आद्ये उक्तदोषः । द्वितीये ब्रह्मणोऽपि नित्यत्वेनाविद्याया अपि नित्यत्वप्रसङ्गः । मिथ्यार्थस्य प्रतिभासकालीनत्वनियमात् ॥

नन्वविद्याप्रकाशः प्रकाशभेद एव, तत्त्वज्ञानेनाविद्यानिवृत्तौ प्रकाश-5 भेदो निवर्तते; प्रकाशस्तु नित्यतया वर्तत एव, तथा चाविद्याया विनाशित्वं प्रकाशस्य नित्यत्वं चोपपद्यत इति चेन्न; अविद्याप्रकाशयोरभेदे प्रकाशवदविद्यायाः सत्यत्वस्याविद्यावत्प्रकाशस्य वा मिथ्यात्वस्य प्रसङ्गात् । नचाविद्यावच्छिन्नब्रह्मस्वरूपमेवाविद्याप्रकाशो न ब्रह्मस्वरूपमात्रमिति नोक्तदोषावकाश इति वाच्यम्; तस्याविद्याब्रह्मस्वरूपानतिरिक्ततयोक्तदोषा-10 निवृत्तेः । नचाविद्याब्रह्मसंबन्ध एवाविद्याप्रकाश इति वाच्यम्; उभयस्वरूपातिरिक्तसंबन्धानभ्युपगमात् । अभ्युपगमे वा तस्य जडत्वसत्यत्वप्रसङ्गेनाद्वैतहानिप्रसङ्गात् । तादात्म्यस्य संबन्धरूपत्वे चोक्तदोषात् ॥

नचाविद्याप्रतिफलितब्रह्मचैतन्यमेवाविद्याप्रकाश इति वाच्यम्; बिम्बप्रतिबिम्बयोः स्वरूपाभेदेनोक्तदोषात् । किञ्च अविद्याप्रतिफलितत्वं हि 15 अविद्यानिष्ठतया भासमानत्वम् । भानस्य ब्रह्मस्वरूपत्वे तदतिरिक्तत्वे चोक्तदोषात् । अविद्यानिष्ठतया भासमानत्वस्य ब्रह्मणोऽसिद्धेश्च । एतेनाविद्याकारवृत्त्यवच्छिन्नचैतन्यमविद्याप्रकाश इत्यपि प्रत्युक्तम्; वृत्तेर्जडत्वेन चैतन्यस्यैव तत्प्रकाशतया तस्य नित्यत्वेनाविद्याया अपि नित्यत्वप्रसङ्गात् । नच वृत्त्यवच्छेदेन चैतन्यं प्रकाशः, वृत्त्यभावे तु न चैतन्यमविद्याप्रकाश 20 इति नोक्तदोष इति वाच्यम्; वृत्तिकाले प्रकाशभूतचैतन्यस्य तदभावकालेऽपि सत्त्वेन वृत्तिकाल एवाविद्याप्रकाशभूतं चैतन्यं न तदभावकाल इत्यस्य नियामकाभावेन राजशासनतुल्यत्वात् ॥

ननु तथापि ब्रह्मस्वरूपमेवाविद्याप्रकाशः, नच तस्य नित्यत्वेनविद्याया अपि नित्यत्वप्रसङ्गः, मिथ्यार्थस्य प्रकाशसमानकालीनत्वनियमादिति 25 वाच्यम्; अप्रयोजकत्वात् अतीतानागतघटादौ तदभावेऽपि प्रकाशदर्शनात्; नचैवं सति प्रातिभासिकरजताद्युत्पाद किमर्थः? तदभावेऽपि रजतादिप्रकाशसंभवादिति वाच्यम्; रजतादिप्रकाशस्य इन्द्रियसन्निकर्षाधीनत्वेन

रजताद्यभावे तत्सन्निकर्षासंभवेन तदर्थं प्रातिभासिकरजतोत्पत्त्यङ्गीकारात्, प्रकृते चाविद्याप्रकाशस्य नित्यतया सन्निकर्षानपेक्षणात्, तथा च कथमविद्याया नित्यत्वप्रसङ्गः? नच मुक्तिकाले मिथ्यार्थप्रकाशानुपपत्तिः; मिथ्यार्थानुवृत्तेरेव मुक्तिविरोधित्वेन तत्प्रकाशानुवृत्तौ बाधकाभावात्, अन्यथा सकलप्रपञ्चप्रकाशरूपब्रह्मणोऽपि मुक्तिकाले अननुवृत्तिप्रसङ्गादिति 5 चेदस्तु तावदेवम्, तथापि मिथ्याभूताविद्याप्रकाशस्य भ्रमत्वनिश्चयेन मुक्तिकाले भ्रमानुवृत्तिप्रसङ्गात् । निर्दोषस्य सर्वज्ञस्य भ्रान्तत्वप्रसङ्गाच्च । तस्मान्नाविद्यायाः प्रकाशसंभव इति ॥

**इति वेदान्तविजयमङ्गलदीपिकायां अविद्याप्रकाशभङ्गः षष्ठः ॥**

10

श्रीः

## अथ अविद्यानिवर्तकभङ्गः प्रारभ्यते ।

किञ्च अविद्याया निवर्तकमपि दुर्वचम् ॥

किं तन्निवर्तकं चैतन्यमात्रं वा वृत्तिप्रतिबिम्बितचैतन्यं वा वृत्त्युपहित- 15 चैतन्यं वा वृत्त्यवच्छिन्नकारणताकचैतन्यं वा वृत्तिविशिष्टचैतन्यं वा वृत्तिमात्रं वा? नाद्यः; अविद्यास्वरूपस्यैवाभावप्रसङ्गात् श्रवणादिवैयर्थ्याच्च । न द्वितीयः, चैतन्यानधिकविषयकत्वेन चैतन्यस्यैवानिवर्तकत्वात् । श्वैत्यानुमित्यनधिकविषयत्वेऽपि तत्प्रत्यक्षस्य शङ्खपीतभ्रमनिवर्तकत्वं दृश्यत इति चेन्न; तत्रान्वयव्यतिरेकाभ्यां प्रत्यक्षत्वस्यैव निवर्तकताप्रयोजकत्वकल्पनात् । 20 प्रकृते च वृत्तिप्रतिबिम्बितत्वादेर्निवर्तकत्वाप्रयोजकत्वात्, प्रत्युत वृत्त्यसन्निधानस्यैव तत्प्रयोजकत्वात् । अत एव तृतीयचतुर्थावप्यनुपपन्नौ । नापि पञ्चमः; अन्वयव्यतिरेकाभ्यां वृत्तावेव पर्यवसानात् । नापि षष्ठः; जडत्वेन वृत्तेरनिवर्तकत्वात् ॥

ननु जडत्वेन प्रकाशकत्वाभावेपि निवर्तकत्वं संभवति, मुद्गरादौ 25 घटादिनिवर्तकत्वदर्शनात् अज्ञाने ज्ञाननिवर्त्यताव्यवहारस्तु चैतन्याभेदोपचारादिति चेन्न; वृत्तेश्चैतन्यानधिकविषयत्वे उक्तदोषात्, अधिकविषयत्वे अधिकस्य सत्यत्वे अद्वैतहानिः, मिथ्यात्वे मिथ्याज्ञानस्य मोक्षसाधन-

त्वप्रसङ्गात्, तत्त्वज्ञानस्याविद्यानिवर्तकत्वमिति भवत्सिद्धान्तात्। नच तत्त्वज्ञानत्वमप्रयोजकम्, अज्ञानजन्यभ्रमविषयविरोधिविषयकत्वस्यैवाज्ञाननिवर्तकत्वप्रयोजकत्वादिति वाच्यम्; अद्वितीयत्वस्यैव तद्विरोधित्वात्। तस्य ब्रह्मस्वरूपानतिरेकात्। अतिरेके ब्रह्मज्ञानस्याविद्यानिवर्तकत्वभङ्गः, 5 तस्य ब्रह्मसमानसत्ताकतया अद्वैतहानिश्च ॥

किञ्च अद्वितीयत्वप्रकाशस्य स्वप्रकाशत्वाप्रयोज्यतया तदभावायावरणकल्पनं व्यर्थम्। अपि च तद्ज्ञानस्य कृत्स्नप्रपञ्चविषयतया प्रपञ्चमात्रनिवर्तकतैव नाज्ञानमात्रनिवर्तकतेति कथं ज्ञानेनाज्ञाननिवृत्तिः, तन्निवृत्त्या चेतरनिवृत्तिरिति सिद्धान्तः ॥

10 यत्तु अद्वितीयत्वप्रकारकज्ञानमविद्यानिवर्तकं, अद्वितीयत्वं च स्वरूपमेवेति, तदप्येतेन निरस्तम्। किंचाज्ञानेन तत्स्वरूपमावृतं वा न वा? नाद्यः; ब्रह्मस्वरूपावरणे जगदान्ध्यप्रसङ्गात्। न द्वितीयः; तत्स्वरूपानावरणे अज्ञानस्य तद्विषयत्वाभावेन तद्ज्ञानानिवर्त्यत्वप्रसङ्गात्। अज्ञानसमानविषयकज्ञानस्यैवाज्ञाननिवर्तकत्वात्। नचाद्वितीयत्वज्ञानप्रतिबन्ध एव ब्रह्मावर- 15 णमित्युच्यत इति नोक्तदोष इति वाच्यम्; अद्वितीयं ब्रह्मेत्यादिवाक्यश्रवणाभावेनैवाद्वितीयत्वज्ञानाभावोपपत्तौ प्रतिबन्धकाज्ञानकल्पने मानाभावात् ॥ किञ्चाज्ञानं यद्यद्वितीयत्वज्ञानप्रतिबन्धकं तदा तस्मिन् सति अद्वितीयत्वज्ञानोदयः कदापि न स्यात्, न स्याच्च तेनाज्ञाननिवृत्तिः। किञ्च ब्रह्मज्ञानस्य मूलाज्ञाननिवर्तकत्वे घटादिज्ञानानामपि तन्निवर्तकत्वप्रसङ्गः ब्रह्म- 20 विषयत्वाविशेषात्। अद्वितीयब्रह्मज्ञाननिवर्त्यत्वं तु खण्डितमेव ॥

यत्तु तदज्ञानकार्यातिरिक्तविषयकत्वमेव तन्निवर्तकत्वे प्रयोजकमिति फलबलात्कल्प्यते, तथाच घटस्य मूलाज्ञानकार्यत्वाभावात् तद्ज्ञानेन तूलाज्ञाननिवृत्तिः तत्कार्यातिरिक्तघटादिविषयत्वात्, नतु मूलाज्ञाननिवृत्तिः, तस्य मूलाज्ञानकार्यघटविषयत्वेनातिरिक्तविषयत्वाभावादिति—तन्न; अज्ञा- 25 नविषयतत्त्वसाक्षात्कारस्यैवाज्ञाननिवर्तकत्वेन लोके दृष्टत्वात् तत्कार्यगोचरत्वतदगोचरत्वयोरप्रयोजकत्वात्। प्रत्युत फलबलेन मूलाज्ञानस्यैव निवृत्तिः कल्पनीया, अन्यथा घटप्रकाशासंभवात्। क्षुद्रावारकतूलाज्ञाननाशेऽपि

महावारकमूलाज्ञानस्यानिवृत्तेः क्षुद्रमहापटावृतवस्तुप्रकाशस्य उभयनाशे सत्येव दर्शनात् । अखण्डावारकाज्ञानस्य घटाद्यवच्छिन्नावारकत्वस्यावर्जनीयत्वात् भवदभिमतत्वाच्च ॥

यदपि "श्रोतव्यः श्रुतिवाक्येभ्य" इति विध्यनुसारेण वेदान्तवाक्यजन्यब्रह्मज्ञानमेव नियमादृष्टसहितं ब्रह्माज्ञाननिवर्तकमिति न घटादिज्ञानानामज्ञाननिवर्तकत्वप्रसङ्ग इति, तदप्यसत्; नियमादृष्टस्यासंभवात् । नियमादृष्टं हि स्वान्वयव्यतिरेकानुगतकार्यसिद्धय एव कल्प्यम्, अवहननादौ तथा दर्शनात् । परमापूर्वरूपकार्यस्यान्वयव्यतिरेकानुगतत्वात् । प्रकृते चाविद्यानिवृत्तिस्तदन्वयव्यतिरेकसिद्धकार्यमेवेति कुतो नियमादृष्टसिद्धिः । तस्मान्नाविद्यानिवर्तकं किञ्चिदस्ति । एतेन तत्त्वमस्यादिवाक्यजन्यं ज्ञानमभेदगोचरत्वान्मूलाज्ञाननिवर्तकम् । घटादिज्ञानं त्वभेदगोचरत्वाभावान्न निवर्तकमित्यपि प्रत्युक्तम् । स्वरूपगोचरत्वाविशेषेण घटादिज्ञानानामपि निवर्तकत्वस्यानिवार्यत्वादिति ॥

**इति श्रीवेदान्तविजयमङ्गलदीपिकायां अविद्यानिवर्तकभङ्गः ॥**

---

श्रीः

## अथ अविद्यानिवृत्तिभङ्गः प्रारभ्यते ।

अपिचाज्ञानस्य निवृत्तिरपि दुर्निरूपा । तथाहि—सा किं मिथ्या सत्या वा? नाद्यः, निवृत्त्युपादानभूताज्ञानस्य निवृत्त्या सहावस्थानस्यावश्यकतया अनिर्मोक्षप्रसङ्गात् । अविद्यासहावस्थितनिवृत्तावविद्यानिवृत्तिव्यपदेशस्य पारिभाषिकत्वप्रसङ्गाच्च । अविद्याविरोधाभावेन तस्या अविद्यानिवृत्तित्वासंभवात् । न द्वितीयः; तस्याः ब्रह्मस्वरूपातिरिक्तत्वे अद्वैतहानेः भिन्नसत्ताकतया विरोधाभावेनाविद्यावस्थानसंभवेनानिर्मोक्षप्रसङ्गाच्च । ब्रह्मस्वरूपत्वेप्यनिर्मोक्षप्रसङ्गो दुर्वारः । अनादिब्रह्मस्वरूपस्य साध्यत्वासंभवाच्च ॥

यदत्रोक्तम्—यस्मिन् सत्यग्रिमक्षणे यस्य सत्त्वं यद्व्यतिरेके चासत्त्वं तत्तत्साध्यमिति क्षेमसाधारणसाध्यत्वं ब्रह्मणः संभवत्येव । तत्त्वज्ञाने सत्यु-

त्तरक्षणे अविद्यानिवृत्तिरूपब्रह्मस्वरूपम्, तदभावे अविद्यानिवृत्तिरूपब्रह्म-स्वरूपाभावात्मिका अविद्येति; तन्न—ब्रह्मस्वरूपाविरोधिन्या अविद्याया-स्तदभावत्वासंभवात् ॥

नन्वधिष्ठानसाध्यस्य मानाभावत्वात् अभावप्रतियोगिनश्चाभावाभावत्वाद-
5 विद्याब्रह्मणोः परस्पराभावत्वमवर्जनीयमिति चेन्न; अधिष्ठानसाध्यस्य माना-भावत्वे मानाभावात् भावे वा अध्यस्यमानस्याधिष्ठानाभावत्वं कुतः स्यात्। अभावप्रतियोगिनाभावाभावत्वनियमोऽसिद्ध एव, अप्रयोजकत्वात्। घटादे-र्घटाद्यभावाद्यभावत्वं तु घटादिमति घटाभावाद्यभावव्यवहारस्य सर्वसंप्रति-पन्नत्वात् तस्य चातिरिक्तविषयत्वे गौरवात् घटादिविषयत्वं कल्प्यते, नच
10 प्रकृते तादृशव्यवहारं पश्यामः, येनाध्यस्यमानस्याधिष्ठानाभावत्वं कल्प्यते। तस्मान्नाध्यस्यमानमधिष्ठानाभावः ॥

किञ्चाविद्यासमानकालीनब्रह्मस्वरूपस्य नाविद्यानिवृत्तित्वसंभवः, तत्त्वज्ञा-नोत्तरकालीनब्रह्मस्वरूपस्य निवृत्तित्वमप्ययुक्तम्। विशेषणविशेष्यस्वरूपाति-रेकेण विशिष्टस्वरूपाभावात्। तत्रच पूर्वोक्तदोषात्। तस्मान्न ब्रह्मस्वरूपस्य
15 तत्त्वज्ञानसाध्यत्वम्। दुःखानुत्पादस्य प्रायश्चित्तसाध्यत्वं तु दुःखहेतुदुरित-विघटनद्वारेति न विरोधः ॥

वस्तुतस्तु यद्व्यतिरेके असत्त्वमित्यस्य यद्व्यतिरेके उत्तरकालावृत्तित्व-मित्यर्थो वाच्यः, न तूत्तरकाले अभाव इति, तथात्वे सर्वस्यापि नित्यस्य अनित्यसाध्यत्वप्रसङ्गात्। अनित्याभाववन्नित्याभावस्यापि सत्त्वात्, एकदेशे
20 तदभावविवक्षायां ब्रह्मणो वृत्तेश्च सर्वानित्यत्वसाध्यत्वप्रसङ्गो दुर्वारः। तथाच दुःखानुत्पादस्य प्रायश्चित्ताभावे उत्तरकालावृत्तित्वेन प्रायश्चित्तसाध्यत्वं संभवति। अविद्यानिवृत्तिरूपब्रह्मणस्तु (गगनादेः) तत्त्वज्ञानाभावेऽपि उत्तर-कालवृत्तित्वान्न तत्साध्यत्वमिति कथमविद्यानिवृत्तित्वं ब्रह्मण इति तत्त्वम् ॥ किञ्च प्रकृत्यविद्ययोरवश्यमभेदोऽङ्गीकार्यः, अन्यथा "मायां तु प्रकृतिं
25 विद्या"दिति श्रुतिविरोधात्। प्रकृतेश्च गौरनाद्यन्तवतीत्यविनाशित्वश्रव-णादविद्यानिवृत्तेरसंभवः ॥

नन्वनाद्यन्तवतीत्यत्र आद्यन्तवती नेति न समासः, किन्त्वनादिश्चासौ अन्तवती चेति कर्मधारयो वोध्यः, तथाच विनाशित्वमेवागतम्, नाविनाशित्वमिति चेन्न; नित्या सततविक्रियेति वाक्यान्तरानुसारेणाद्यन्तवती न भवतीति अनाद्यन्तवतीति नञ्समासस्यैवोचितत्वात् । अन्यथा तद्विरोधात् अजामेकामित्येकत्वश्रुतिविरोधाच्च । अन्तवत्त्वे हि प्रतिसर्गं प्रकृति 5 भेदेनैकत्वासंभवात् । किञ्चानादिरित्यत्र वहुव्रीहिसमासाश्रयणेन लक्षणाया अवश्यवाच्यत्वात् लक्षणां विनैव नञ्समासाश्रयणमुचितम्, अन्यथा निषादस्थपत्यधिकरणविरोधात् ॥

यत्तु घटादिनिवृत्तिर्हि घटनाशकानन्तरक्षणमात्रवर्ती कश्चिद्भावविकारः स न नित्यः । अन्यथा घटो न नश्यतीति वर्तमानव्यवहारप्रसङ्गात् । अत 10 एव ह्युत्पत्तिसामग्र्यनन्तरक्षणमात्रवर्तिनि भावविकार इति सर्वसंप्रतिपत्तिः । अन्यथा सर्वदा उत्पत्तेरपि सद्भावप्रसङ्गात् । एवं चाविद्यानिवृत्तिरपि ब्रह्मसाक्षात्कारानन्तरक्षणमात्रवर्ती कश्चिद्भावविकारः तस्य मुक्तावनुवृत्त्यभावान्नानिर्मोक्षप्रसङ्ग इति—तदयुक्तम्; अविद्याया नित्यत्वश्रुतिविरोधात् । किञ्चाविद्यानिवृत्त्यनन्तरमविद्यास्ति वा न वा? आद्ये अनिर्मोक्षप्रसङ्गः । 15 द्वितीये नञर्थासंभवः । ब्रह्मण एव नञर्थत्वे अविद्याकालेऽपि तदभावत्वप्रसङ्गः । अविद्यासमानकालीनस्य तदभावत्वासंभवश्च ॥

ननु अविद्यानिवृत्त्यनन्तरं नाविद्या नापि तदभावः, कालस्य प्रतियोगितदभावान्यतरवत्त्वनियमोऽसिद्ध एव, सिद्धौ वा कालस्यापि निवृत्तेर्न तन्नियमभङ्ग इति चेन्न; तथासति अविद्यानिवृत्तेरप्यभावप्रसङ्गात् । 20 अविद्यातन्निवृत्त्योरुभयोरप्यभावसंभवात् । यदुक्तं कालस्यातीतत्वान्न तन्नियमभङ्ग इति, तदपि न; शुकादेः पूर्वमेव मुक्तत्वेनेदानीं कालाभावप्रसङ्गात् । तत्सत्त्वे च प्रतियोगितदभावान्यतरवत्त्वमवर्जनीयम् । अन्यथा उक्तदोषात् ॥ किञ्च तत्त्वज्ञानं हि पुरुषार्थसाधनतया सर्वसिद्धम् । तच्च नोभयथापि संभवति । अविद्यानिवृत्तेर्ब्रह्मस्वरूपातिरिक्तत्वे तस्या अपुरु- 25 षार्थत्वात्? ब्रह्मस्वरूपत्वे तस्यासाध्यतया साधनानपेक्षत्वात् ॥

नन्वनवच्छिन्नानन्दब्रह्मस्वरूपमेव पुरुषार्थः । नच तस्यासाध्यत्वेन तत्त्व-

ज्ञानस्य न पुरुषार्थपर्यवसानमिति वाच्यम्; कण्ठचामीकरन्यायेन पुरुषार्थ-पर्यवसानसंभवात्, दृश्यते हि लोके कण्ठे चामीकराप्राप्तिं मन्यमानस्य सुहृदुपदेशेन कण्ठे तत्प्राप्त्यवगमेन पुरुषार्थलाभावगम इति चेन्न; कण्ठचामीकरसंबन्धाज्ञानवत् इहाभेदानुभवाभावासिद्धेः। प्रापकताबुद्धेस्तत्त्वज्ञान-5 कालीनत्वेन मोक्षकाले पुरुषार्थाभावप्रसङ्गाच्च। स्वरूपप्रकाशस्यैव प्राप्तताबुद्धिरूपत्वे मुक्तिसंसारयोरविशेषप्रसङ्गादिति॥

**इति वेदान्तविजयमङ्गलदीपिकायां अविद्यानिवृत्तिभङ्गः॥**

---

श्रीः

10 अमानत्वमविद्याया नैष्फल्यं च सयुक्तिकम्।
तिरोधाननिरूप्यत्वमाश्रयस्य तथैव च॥
लक्षणस्य प्रकाशस्य दुर्वचत्वं विशेषतः।
निवर्तकनिवृत्त्योश्च दुरुक्तत्वं समर्थितम्॥

**इति वेदान्तविजयमङ्गलदीपिकायां सद्विद्याविजयोपन्यासः**
15 **तृतीयः समाप्तः॥**

---

श्रीः

**श्रीमते रामानुजाय नमः।**

# अथ अद्वैतविद्याविजयोपन्यासश्चतुर्थः

20 ## तत्रायमाद्यः प्रपञ्चमिथ्यात्वभङ्गः।

ब्रह्मेतरप्रपञ्चस्य मिथ्यात्वं न च सिद्ध्यति।
परिच्छेत्तुमशक्यत्वात्प्रत्यक्षादिप्रमाणतः॥
निर्वक्तुमप्यशक्यत्वाद्व्यवहारविरोधतः।
25 आत्मज्ञानेन सर्वार्थज्ञानश्रुतिविरोधतः॥

केवलाद्वैतवादिनो वेदान्तिनो वदन्ति, ब्रह्मैव परमार्थः, तद्व्यतिरिक्तं सर्वं मिथ्याभूतमिति — तदयुक्तम्; प्रपञ्चमिथ्यात्वे प्रमाणाभावात्। न तावत्प्रत्यक्षं प्रमाणं, घटादिवन्मिथ्यात्वस्य प्रत्यक्षेणाग्रहणात् मिथ्यात्वस्यातीन्द्रियघटितत्वेन प्रत्यक्षायोग्यत्वाच्च॥

ननु माभूत्प्रत्यक्षं, अनुमानादिकं तु स्यात् । तथाहि—प्रपञ्चो मिथ्या दृश्यत्वात् व्यावर्तमानत्वात् ब्रह्मव्यतिरिक्तत्वात् परिच्छिन्नत्वात् जडत्वाच्च शुक्तिरूप्यवदित्यनुमानानां "नेह नानास्ति किञ्चन, मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति, सर्वं खल्विदं ब्रह्म, आत्मैवेदं सर्वं, एकमेवाद्वितीय"मित्यादिश्रुतीनां च विद्यमानत्वादिति चेदुच्यते—न तावदनुमानेन 5 ब्रह्मव्यतिरिक्तमिथ्यात्वसिद्धिः; बाधितत्वाविकारित्वादिभिः सोपाधिकत्वात् । नच साधनव्यापकत्वात्तेषां नोपाधित्वमिति वाच्यम्; पक्ष एव बाधितत्वविकारित्वादेरभावेन साधनाव्यापकत्वात् प्रपञ्चस्य विकारित्वादबाधितत्वाच्च ॥

नचाबाधितत्वमसिद्धम्; घटः पट इति प्रतीत्यनन्तरं नासावयं घटः पट 10 इति बाधकप्रत्ययाभावात् । नच प्रात्यक्षिकबाधाभावेऽपि "नेह नानास्ती"ति श्रुतिबाधादसिद्धमेवाबाधितत्वमिति वाच्यम्; तथा सति "नासदासीन्नो सदासीत्तदानीं तम आसी"दित्यादिश्रुतिभिर्बाधात् ब्रह्मणोऽपि बाधितत्वान्मिथ्यात्वप्रसङ्गात् । नच "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादिभिः श्रुतिभिः ब्रह्मणः सत्यत्वप्रतिपादनात् नासदासीदित्यादिश्रुतेरन्यपरत्वमिति वाच्यम्; 15 तथासति यस्यात्मा शरीरं यस्य पृथिवी शरीरं यस्य वायुः शरीरं यस्याकाशः शरीरं सदेव सोम्येदमग्र आसीदित्यादिश्रुतिभिश्चिदचिदात्मकप्रपञ्चस्य ब्रह्मशरीरत्वसत्यत्वप्रतिपादनेन सत्यत्वसिद्ध्या नेह नानास्तीति श्रुतेः स्वतन्त्रब्रह्मनानात्वनिषेधपरत्वात् ॥

किञ्च प्रपञ्चो न मिथ्या, प्रमाणजन्यज्ञानविषयत्वात्, ब्रह्मवदित्याद्यनुमा- 20 नैरुक्तानुमानानां सत्प्रतिपक्षता । प्रमाणजन्यज्ञानविषयस्यापि प्रपञ्चस्य मिथ्यात्वे ब्रह्मणोऽपि मिथ्यात्वप्रसङ्गः, प्रमाणजन्यज्ञानविषयत्वाविशेषात् । किञ्च दृश्यत्वं किं प्रत्यक्षज्ञानविषयत्वं उत ज्ञानविषयत्वं वा । उभयमपि ब्रह्मणि व्यभिचारि । घटस्सन् पटस्सन्नित्यादिप्रत्यक्षविषयत्वात्, सन्मात्रावगाहिप्रत्यक्षस्य तैरङ्गीकारात् शाब्दापरोक्षविषयत्वस्याङ्गीकाराच्च । नच ब्रह्मणो- 25 ऽवेद्यत्वेन न ज्ञानविषयत्वं प्रत्यक्षविषयत्वं वेति वाच्यम्; तथासति शश-

विषाणेन तुल्यमिथ्यात्वप्रसङ्गात्, तदुभयाङ्गीकारे तु शुक्तिरूप्यतुल्यमिथ्यात्वप्रसङ्गः, इत्युभयथापि मिथ्यात्वप्रसङ्गो वज्रलेपः ॥

ननु वृत्त्यवच्छिन्नचैतन्यविषयत्वं दृश्यत्वम्, तच्च प्रपञ्चस्यैव न ब्रह्मणः; स्वस्य स्वविषयत्वायोगात्, किन्तु वृत्तिविषयत्वमेवेति चेन्न; तथासति 5 वृत्तिमात्रस्य जडरूपत्वेनाप्रकाशकतया ब्रह्मप्रकाशाभावेनानिर्मोक्षप्रसङ्गात्। प्रकाशकत्वे तु तयैव प्रपञ्चप्रकाशसंभवेन चैतन्यविषयत्वे मानाभावेन हेतोः स्वरूपासिद्धिः। किञ्च ब्रह्मविषयिणी वृत्तिर्ज्ञानरूपा तद्भिन्ना वा। नाद्यः; ब्रह्मणो वेद्यत्वप्रसङ्गात्। नच वृत्तिरूपज्ञानं तटस्थतया ब्रह्म प्रकाशयतीति न ब्रह्मणो वेद्यत्वप्रसङ्ग इति वाच्यम्; तटस्थत्वस्यानिर्वचनात्। किं तट-10 स्थत्वमुपलक्षणत्वम्, ब्रह्मावृत्तित्वे सति ब्रह्मसमीपदेशवृत्तित्वं वा, अन्यद्वा। नाद्यः; ब्रह्मणि तदुपलक्ष्याकाराभावेन उपलक्षणत्वायोगात् तदभावेऽप्युपलक्षणत्वेऽप्यतिप्रसङ्गात्। तथा अदर्शनाच्च। न द्वितीयः; वृत्तेः कल्पितत्वेन तदध्यस्ततया ब्रह्मावृत्तित्वायोगात् अन्यदेशवृत्तित्वायोगाच्च। अध्यस्तस्य पटस्याधिष्ठानैकवृत्तित्वनियमात्। न तृतीयः; तदनिर्वचनात्। तदविषयकत्वे-15 ऽपि तत्प्रकाशकत्वं तटस्थत्वमिति चेन्न; असंभवात्, अन्यथा घटादिज्ञाने पटादेः सर्वस्य प्रकाशप्रसङ्गात् वृत्तेर्जडत्वाङ्गीकारे ज्ञानत्वाङ्गीकारेण अपसिद्धान्तश्च। ज्ञानान्यत्वरूपा वृत्तिरिति द्वितीयपक्षोऽप्यनुपपन्नः। सत्यत्वमिथ्यात्वविकल्पेन ब्रह्मणः सद्वितीयत्वमिथ्यात्वप्रसङ्गः, ब्रह्मप्रमाणभूतवृत्तेर्मिथ्यात्वेन ब्रह्मणोऽपि मिथ्यात्वावश्यंभावात्। अन्यथा शशविषाण-20 स्यापि सत्यत्वप्रसङ्गः ॥

किञ्च वृत्तौ प्रमाणाभावः; ज्ञानविषयत्वेनैव सर्वव्यवहारोपपत्तेर्वृत्तिकल्पनायां प्रमाणाभावात्। नच ज्ञानस्य नित्यत्वेन सर्वदा सर्वव्यवहारप्रसङ्ग इति वाच्यम्; तत्तद्विषयकत्वस्य प्रत्यक्षादिकारणविशेषाधीनतया तदप्रसङ्गात्। नच ब्रह्मणः स्वविषयकत्वासंभवेन ब्रह्म जानामीत्यादिव्यवहार एव

वृत्तिर्कल्पकः[1]; अन्यथा तत्त्वमस्यादिवाक्यजन्यज्ञानादेवाविद्यानिवृत्तौ मननादेर्वैयर्थ्यम् वृत्त्यङ्गीकारे तु तत्सहकृतवाक्यजन्यापरोक्षवृत्तिरिति न वैयर्थ्यमिति वाच्यम्[2]; मननादिसहकृततत्त्वमस्यादिवाक्यजन्यापरोक्षज्ञानस्यैवाविद्यानिवर्तकत्वेन तदभावात् ॥

ननु ज्ञानपदवाच्यत्वार्थं वृत्तिकल्पनम्, ज्ञानस्वरूपस्य ज्ञानपदघटित- 5 सत्यादिवाक्यार्थस्य तदेकदेशज्ञानपदवाच्यत्वासंभवादिति चेन्न; अखण्डवाक्यार्थस्य निरस्तत्वात्, ज्ञानत्वविशिष्ट एव ज्ञाने ज्ञानपदवाच्यत्वसंभवेन वृत्त्यवच्छिन्नज्ञाने तत्कल्पनायोगाच्च । वृत्तेरेव ज्ञानपदवाच्यत्वे तु दूषणं दत्तमेव । सत्यादिपदानां विशेष्यस्वरूपोपलक्षकत्वमिति सिद्धान्तव्याकोपश्च । नच वृत्त्यनङ्गीकारे अहं जानामीति विशेषणविशेष्यभावानु- 10 पपत्तिः, एकस्य ज्ञानस्वरूपस्य तदुभयायोगादिति वाच्यम्; अन्तःकरणावच्छिन्नत्वतदनवच्छिन्नत्वरूपभेदेन तदुभयाविरोधात् । नचैवं जानामीति ज्ञानव्यवहारानुपपत्तिः, समानविषयकज्ञानस्य तद्धेतुत्वात् तच्च वृत्तिरूपमेवेति वाच्यम्, प्रदीपादिवत् स्वपरनिर्वाहकत्वेन स्वरूपभूतज्ञानस्य स्वव्यवहारहेतुत्वात् स्वरूपातिरिक्तवृत्तिकल्पनातः सिद्धस्वरूपस्यैव स्वपरनिर्वाहक- 15 त्वकल्पनाया युक्तत्वाच्च । अप्रयोजकश्च दृश्यत्वहेतुः, विपक्षे बाधकाभावात् ॥

ननु हेतूच्छित्तिरेव विपक्षे बाधकस्तर्कः; मिथ्यात्वाभावे दृक्सम्बन्धानुपपत्त्या दृश्यत्वासंभवात्, दृश्यध्यस्तत्वस्यैव तत्संबन्धत्वात्, नच संयोगादिरेव तत्संबन्ध इति वाच्यम्; दृशेरद्रव्यत्वेन विषयत्वाभावेन च 20 संयोगसमवाययोरभावात्, विषयविषयिभावादिसंबन्धस्यातिप्रसङ्गभयेन तन्मूलकत्वस्यैव वाच्यत्वात् नियामकान्तराभावादिति चेन्न; अतीतानागतयोर्दृश्यध्यस्तत्वासंभवेन तदविषयकत्वप्रसङ्गात् । उक्तरीत्या वृत्तिब्रह्मणोरपि संबन्धानुपपत्तौ वृत्तिविषयब्रह्मणोऽपि वृत्त्यध्यस्तत्वप्रसङ्गाच्च ॥

---

१ वृत्तौ प्रमाणमिति । २ वाच्यम्; स्वविषयकत्वस्यापि काल्पनिकत्वेन विरोधाभावात् । 25 अत एव न सर्वदा अविद्यानिवृत्तिप्रसङ्गः; ब्रह्मविषयत्वस्य न्यायोपबृंहिततत्त्वमस्यादिवाक्याधीनतयाप्रसङ्गात् । नन्वेवं ब्रह्मविषयकत्वेन तत्त्वमस्यादिवाक्यज्ञानादेवाविद्यानिवृत्तौ मननादिवैयर्थ्यम् । वृत्त्यंगीकारे तु । एतच्चिह्नितं वाक्यं योजितमस्ति मैसूरुद्वितीयकोशे ।

किञ्च यदि दृश्यध्यस्तत्वमेव दृश्यत्वं तदा सर्वेषां सर्वदा सर्वप्रकाशप्रसङ्गः, दृश्यध्यस्तत्वस्य सार्वकालिकत्वात् । नच तदध्यस्तत्वेऽपि विषयविषयिभावः करणविशेषाधीन इति नातिप्रसङ्ग इति वाच्यम्; तथासति विषयविषयिभावसंबन्धस्याध्यासाप्रयोज्यत्वेन तत्साधकत्वाभावात्, इन्द्रि-
5 यसन्निकर्षादेरेव तत्प्रयोजकत्वोपपत्तौ अध्यासकल्पनानवकाशाच्च ॥

किञ्च अध्यस्तत्वमेव संबन्ध इत्यत्र न किञ्चिन्नियामकं पश्यामः; कार्यकारणभावादेरपि संबन्धस्य जागरूकत्वात्, तथाच कथं मिथ्यात्वसिद्धिः । व्यावर्त्यमानत्वं च किं यत्किञ्चिन्निष्ठाभावप्रतियोगित्वम्, उत सकलदेश निष्ठाभावप्रतियोगित्वम्, अथ स्वाधिकरणनिष्ठाभावप्रतियोगित्वम्, सकलज्ञानाविष-
10 यत्वं वा, अन्यद्वा । नाद्यद्वितीयौ; ब्रह्मणि व्यभिचारात्, ब्रह्मणो निरधिकरणत्वेन सकलदेशनिष्ठाभावप्रतियोगित्वात् मिथ्याभूतदेशस्य परमार्थब्रह्माधारत्वायोगात् तयोर्मिथ्यात्वं प्रत्यप्रयोजकत्वाच्च । नहि शुक्तिरजतस्य मिथ्यात्वं यत्रकुत्रचिदवर्तमानत्वेन, किन्तु स्वाधिकरणे । द्वितीयमपि न मिथ्यात्वप्रयोजकम्; अवृत्तिगगनादौ तदभावात् । न तृतीयः; घटादौ तद-
15 सिद्धेः । नच तन्मिथ्यात्वेन तत्सिद्धिरिति वाच्यम्; अन्योन्याश्रयात् मिथ्यात्वेन व्यावर्तमानत्वस्य तेन च मिथ्यात्वस्य सिद्धेर्वक्तव्यत्वात् साध्याविशेषाच्च । नापि तुरीयः; ब्रह्मणोऽपि तथात्वेन तत्र व्यभिचारात्, ब्रह्मणः प्रपञ्चमिथ्यात्वज्ञानाविषयत्वेन सकलज्ञानविषयत्वायोगात् प्रपञ्चपदादिजन्यज्ञानविषयत्वाभावाच्च । नापि पञ्चमः; तस्यानिर्वचनात् । नच प्रध्वंसप्रति-
20 योगित्वं व्यावर्तमानत्वमिति वाच्यम्; तस्य देशकालविशेषसत्त्वव्याप्यतया विरुद्धार्थसाधकत्वेन मिथ्यात्वसाधकत्वाभावात् । अन्योन्याभावादीनां प्रपञ्चान्तर्भावेन तत्र ध्वंसप्रतियोगित्वाभावेन भागासिद्धेश्च । नच तद्भिन्नप्रपञ्च एवात्र पक्ष इति न भागासिद्धिरिति वाच्यम्; तथासति तस्य सत्यत्वेन सद्वितीयत्वप्रसङ्गात् । नच तत्र हेत्वन्तरेण मिथ्यात्वं साधयितुं
25 शक्यम्; उक्तहेतुव्यतिरिक्तहेतोरनिर्वचनात् उक्तहेतूनां च दुष्टत्वात् ॥

किञ्च गगनादीनां मिथ्यात्वसाधनात्पूर्वं ध्वंसप्रतियोगित्वनिर्णयाभावेन सन्दिग्धभागासिद्धिरित्यादिकमूहनीयम् । ब्रह्मव्यतिरिक्तत्वं च न

हेतुः; अप्रयोजकत्वादेव । प्रपञ्चव्यतिरिक्तत्वेन ब्रह्मणोऽपि मिथ्यात्वस्य वक्तुं शक्यत्वात् । नच परमार्थतया ब्रह्मणस्तद्भिन्नत्वमेव साधकमस्त्विति वाच्यम्; प्रपञ्चस्यापि परमार्थतया तद्भिन्नत्वस्यापि मिथ्यात्वसाधकत्वात् । अप्रयोजकत्वादेव परिच्छिन्नत्वजडत्वादयोऽपि निरस्ताः ॥

किञ्च परिच्छिन्नत्वस्योक्तविकल्पेष्वन्यतमरूपत्वे पूर्वोक्त एव दोषः । 5 जडत्वस्य च ज्ञानान्यत्वरूपत्वे ज्ञानपदेन मुख्यार्थविवक्षायां ब्रह्मणि व्यभिचारः । लक्ष्यार्थपरत्वे हेत्वसिद्धिः । ज्ञानपदेन विषयलक्षणया प्रपञ्चस्य ज्ञानपदलक्ष्यत्वात् । ज्ञानशून्यत्वं जडत्वमित्यत्रापि ब्रह्मणि व्यभिचारः ॥

ननु तर्हि ज्ञाननिवर्त्यत्वादेव प्रपञ्चस्य मिथ्यात्वमस्त्विति[1] चेन्न; अज्ञानस्यैव ज्ञाननिवर्त्यत्वस्य त्वयाङ्गीकृतत्वेन हेतोः स्वरूपासिद्धेः । ननु चानेन 10 हेतुना अज्ञानस्य मिथ्यात्वं प्रसाध्य मिथ्योपादानकत्वेन प्रपञ्चस्य मिथ्यात्वं साध्यत इति वाच्यम्; प्रपञ्चस्याज्ञानोपादानकत्वासिद्धेः । सिद्धौ वा ज्ञाननिवर्त्याज्ञानस्य न मिथ्यात्वम्, शुक्तिज्ञाननिवर्त्यशुक्त्यज्ञानस्य मिथ्यात्वाभावात् रजतस्यैव तत्र मिथ्यात्वात् । तथाच कथमज्ञानोपादानकस्य प्रपञ्चस्य मिथ्यात्वसिद्धिः ॥ 15

किञ्चैवं दृष्टान्ताभावेनोक्तहेतूनां व्याप्यत्वासिद्धिः; सत्यरजतस्यैव दोषवशेन भासमानतया शुक्तिरूप्यस्यैवासिद्धेः प्रमाणाभावात् सिद्धरजतस्यैव भानसंभवेनातिरिक्तरजतकल्पकाभावात् । नच सिद्धरजतस्यासन्निकृष्टतया प्रत्यक्षासंभव एवातिरिक्तरजतकल्पक इति वाच्यम्; धर्मिकल्पनातो वरं धर्मकल्पनमिति न्यायेन असिद्धरजतकल्पनातः सिद्धरजतस्मरणस्यैव 20 सन्निकर्षत्वकल्पनाया उचितत्वात् ॥

महाचार्यास्तु—विशेष्यसन्निकर्ष एव विशिष्टप्रत्यक्षहेतुः, लाघवात्, नतु विशेषणसन्निकर्षोऽपि, गौरवात् । न चैवमुष्णीषाच्छन्नकुण्डलविशिष्टपुरुषप्रत्यक्षापत्तिः; तत्र कुण्डलस्यापि विशेष्यतया तत्सन्निकर्षाभावेन तद्विशिष्टप्रत्यक्षाभावात् विशेषणावच्छिन्नविशेष्यसन्निकर्षस्य लौकिकप्रत्यक्ष- 25

१ मिथ्यात्वं इत्यारभ्य इतिपर्यंतं मातृकान्तरे नास्ति ।

हेतुत्वात् तदभावादेव तद्विशिष्टप्रत्यक्षाभावाद्वा । न चैवं सर्वत्र सन्निकर्षे वह्विविशिष्टप्रत्यक्षापत्तिः; तत्रानुमितिसामग्रीप्राबल्येन तदभावात् । अन्यथा विशेषणसन्निकर्षहेतुत्वेऽपि व्यवहितरूपविशिष्टघटादिप्रत्यक्षापत्तेर्दुष्परिहरत्वात्, संयुक्तसमवायस्य विशेषणसन्निकर्षस्य सत्त्वात् । तस्मान्न शुक्तिविशेष्यकरजतप्रत्यक्षानुपपत्त्या शुक्तिरूप्यसिद्धिः; तत्र रजतत्वस्य शुक्तिविशेषणतया भानादित्यनुगृह्णन्ति ॥

उत्पादकाभावाच्च न शुक्तिरूप्यसिद्धिः, तदुत्पादकं किमविद्या, उत काचादिदोषः, अथ शुक्तिः, आहोस्वित् तदवच्छिन्नचैतन्यम्, अन्यद्वा, नाद्यः; मूलाविद्यायास्तदुत्पादकत्वे सर्वदा तदुत्पत्तिप्रसङ्गात्, मूलाविद्याया निवृत्त्यभावेन तस्यानुवृत्तिप्रसङ्गाच्च । मूलाविद्यायास्तदुत्पादकत्वे तत्र दोषः किं सहकारी उत न । आद्ये तस्यैवोत्पादकत्वसंभवे किं मूलाविद्यापेक्षया । द्वितीये दोषरहितस्यापि शुक्तिरूप्यप्रतिभासप्रसङ्गः, शुक्त्यविद्यायाः पूर्वं सत्त्वेन तया शुक्तिरूप्योत्पत्तेरवर्जनीयत्वात् । न द्वितीयः; शुक्तिरूप्यस्याविद्यकत्वभङ्गप्रसङ्गेनापसिद्धान्तापातात् । काचादिदोषोत्पन्नशुक्तिरूप्येन्द्रियसन्निकर्षेण रजतप्रतिभासात् शुक्तिरूप्यस्य प्रातिभासिकत्वभङ्गप्रसङ्गाच्च । प्रतिभासमात्रकालावस्थायित्वं हि प्रातिभासिकत्वं भवदभिमतम् । नच प्रतिभासनिवृत्तिकालानवस्थायित्वं प्रातिभासिकत्वमिति वाच्यम्; तथासति पारिभाषिकत्वापत्तेस्तस्यैवासंभवाच्च । अविद्यादोषजन्यप्रपञ्चस्येव काचादिदोषजन्यरजतस्याप्यनुवृत्तेरवर्जनीयत्वात्, अविशेषात् । नचाध्यासनिवृत्तेरेव रजतनिवर्तकतया न तदनुवृत्तिरिति वाच्यम्, अध्यासनिवृत्तेरध्यस्तनिवृत्तिमूलकतया अन्योन्याश्रयात् ॥

नचाविद्यानिवृत्तिः शुक्तिरजतत्वज्ञानं वा निवर्तकमिति नोक्तदोष इति वाच्यम् ; समवायिकारणासमवायिकारणान्यतरनाशस्यैव द्रव्यनाशप्रयोजकतया तयोरनिवर्तकत्वात् । अन्यथा अतिप्रसङ्गात्, काचादिदोषस्य चक्षुर्निष्ठत्वेन शुक्तिनिष्ठरजतोत्पादकत्वासंभवाच्च ॥

नचैतदन्यथानुपपत्त्यैव काचादिदोषसहकृततूलाविद्योपादानकत्वमिष्यत इति वाच्यम्; एवमपि तदुत्पत्त्यनन्तरभाविसन्निकर्षोत्पन्नप्रतिभासतया

प्रातिभासिकत्वभङ्गप्रसङ्गात् । न च ब्रह्मज्ञानेतरबाध्यत्वं प्रातिभासिकत्वमिति नोक्तदोष इति वाच्यम्; तत्र बाध्यत्वं स्वाधिकरणनिष्ठाभावप्रतियोगित्वं वा विनाशप्रतियोगित्वं वा । नाद्यः; ब्रह्मज्ञानेतरपदानन्वयात् । इतरपदेन तत्तज्जन्यत्वविवक्षायां चासंभवः; रजताभावस्य ब्रह्मज्ञानेतरशुक्तितत्त्वज्ञा-नाजन्यत्वात् । न द्वितीयः; घटादेरपि प्रातिभासिकत्वप्रसङ्गात् । तस्यापि 5 ब्रह्मज्ञानेतरमुद्गरादिविनाश्यत्वात् । न तृतीयः; शुक्तेश्चिरकालावस्थायित्वेन तावत्कालमनिर्वचनीयरजतोत्पत्तिप्रसङ्गात् । न च कादाचित्कदोषसहकाराद्न तथात्वमिति वाच्यम्; एवमपि शुक्तेर्व्यावहारिकतया तत्समानसत्ताकत्व-नियमेन शुक्तिरूप्यस्यापि व्यावहारिकत्वप्रसङ्गात् । अत एव न चतुर्थः; पारमार्थिकचैतन्योपादानकतया पारमार्थिकत्वप्रसङ्गाच्च । नान्त्यः; तादृश- 10 हेतोरदर्शनात् । किञ्च तद्रजतं सत्यरजतसजातीयं विजातीयं वा । नाद्यः; सत्यरजतहेतुतया क्लृप्तहेतूनामत्राभावेन तदनुत्पत्तिप्रसङ्गात् भावे वा तदनु-वृत्तिप्रसङ्गात् तद्वदेव कार्यकरत्वप्रसङ्गाच्च । न द्वितीयः; रजतार्थिप्रवृत्त्य-नुपपत्तेः । किञ्च सत्यरजतसजातीयत्वेन शुक्तिरूप्यज्ञानमुत तद्विजातीयत्वेन तज्ज्ञानम् । आद्ये सत्यरजतनिष्ठजातेरसन्निकर्षेण तद्विशिष्टज्ञानासंभवः, 15 अन्यथाख्यातेरनङ्गीकारात् । तदसंसर्गाग्रहादेव प्रवृत्त्यभ्युपगमे च शुक्तौ तदसंसर्गाग्रहादेव प्रवृत्त्युपपत्तौ किं शुक्तिरूप्यकल्पनया । अन्त्ये इष्ट-साधनतावच्छेदकप्रकारकज्ञानाभावादेव प्रवृत्त्यसंभवः । सत्यरजतनिष्ठेष्टसा-धनतावच्छेदकजातेरत्राग्रहणात् शुक्तिरूप्यनिष्ठजातेस्तदनवच्छेदकत्वात् । नहि तस्यापि तदवच्छेदकत्वं वक्तुं शक्यम्; तस्यास्तथात्वेन कुत्राप्य- 20 कल्पनात् ॥

वस्तुतस्तु अस्तु शुक्तिरूप्यस्य यथाकथञ्चिदुत्पत्तिः, तज्ज्ञानमपि यथा-कथञ्चित्प्रवर्तकम्, तथापि न शुक्तिरूप्यप्रत्यक्षसंभवः । प्रत्यक्षात्प्राग-विद्यमानेन शुक्तिरूप्येणेन्द्रियसन्निकर्षासंभवेन कारणाभावात् । नन्वविद्या-वृत्तिरेव रजततादिभ्रम इति न सन्निकर्षापेक्षा, अन्तःकरणवृत्तेरेव तत्सा- 25 पेक्षत्वादिति चेन्न; अविद्यावृत्तेरपरोक्षत्वाङ्गीकारे इन्द्रियसन्निकर्षसापेक्ष-त्वमवर्जनीयमेव । इन्द्रियसन्निकर्षजन्यस्यैवापरोक्षत्वनियमात् । यद्यविद्या-

वृत्तेरपरोक्षत्वेन सन्निकर्षापेक्षेति मन्यसे तदान्यथाख्यातिस्थले सन्निकर्षाभावेऽपि रजतप्रत्यक्षमङ्गीक्रियताम्, किमतिरिक्तशुक्तिरूप्यकल्पनया, अविद्यावृत्तेरपरोक्षत्वाभावे च रजतं साक्षात्करोमीत्यनुभवविरोधः ॥

किञ्च शुक्तिरूप्यस्य कथं मिथ्यात्वम्? तस्योत्पत्तिविनाशाभ्युपगमेन 5 घटादिवत्सत्यत्वाविरोधात्। नचाकार्यकरत्वेन मिथ्यात्वम्; उत्पन्नविनष्टपदार्थस्यापि मिथ्यात्वप्रसङ्गात् अप्रयोजकत्वात् शुक्तिरूप्यस्यापि ज्ञानरूपक्रियाकारित्वात्। नचाविकारित्वेन मिथ्यात्वम्; ब्रह्मणोऽपि मिथ्यात्वप्रसङ्गात् प्रपञ्चस्य मिथ्यात्वाभावप्रसङ्गाच्च। नच दोषजन्यज्ञानविषयत्वेन रजतस्य मिथ्यात्वम्; शुक्तौ विद्यमानरजतविषयकत्वेन ज्ञानस्य दोषजन्यत्व10स्यैवासिद्धेः। विद्यमानविषयकज्ञानस्यापि दोषजन्यत्वे ब्रह्मज्ञानस्यापि दोषजन्यत्वप्रसङ्गः। नच कस्यचिच्छुक्तिरूप्यानुभवेऽपि शुक्तितत्त्वज्ञानिनां तदनुभवाभावेन मिथ्यात्वमिति वाच्यम्; तथासति शुक्तौ रजताभावस्यैव मिथ्यात्वपदार्थत्वेन शुक्तिरूप्यस्यैवासिद्धिप्रसङ्गात्। तत्सत्त्वे च शुक्तितत्त्वज्ञानवतामपि तदनुभवस्यावर्जनीयत्वात्। किञ्चान्याननुभूतत्वमात्रेण 15 मिथ्यात्वे शुक्तिरूप्यज्ञानवतां शुक्तिज्ञानाभावेन शुक्तेरपि मिथ्यात्वप्रसङ्गः, ब्रह्मज्ञानविरहिणां ब्रह्मानुभवाभावेन ब्रह्मणोऽपि मिथ्यात्वप्रसङ्गश्च। नच तत्र कारणाभावादेव तदननुभवो न मिथ्यात्वादिति वाच्यम्; शुक्तिरूप्याननुभवेऽपि तुल्यत्वात्। तस्माच्छुक्तिरूप्याङ्गीकारे तत्र साध्यविकल्पता तदनङ्गीकारे तूक्तहेतूनां दृष्टान्तासिद्धिरिति नानुमानेन प्रपञ्चमिथ्यात्वसिद्धिः॥

20 नापि श्रुतिः; तथाहि "नेह नानास्ति किञ्चने"त्यादिभेदनिषेधश्रुतयस्तावन्न मिथ्यात्वपराः किंत्वन्यपराः। अन्यथा भेदश्रुतीनामप्रामाण्यप्रसङ्गात्। तथा च भेदश्रुतयः। कठवल्ल्यां तृतीयखण्डे—

सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्।

चतुर्थखण्डे—

25 यथोदके शुद्धे शुद्धमासिक्तं तादृगेव भवति।
एवं मुनेर्विजानत आत्मा भवति गौतम॥

पञ्चमखण्डे—

नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् ।
श्वेताश्वतरे—प्रथमे खण्डे—

पृथगात्मानं प्रेरितारं च मत्वा
जुष्टस्ततस्तेनामृतत्वमेति ।
ज्ञाज्ञौ द्वावजावीशानीशौ 5
क्षरं प्रधानममृताक्षरं हरः ।
क्षरात्मानावीशते देव एकः
भोक्ता भोग्यं प्रेरितारं च मत्वा । इति ।

चतुर्थे खण्डे—

द्वासुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते 10
तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति ।
समाने वृक्षे पुरुषो निमग्नः अनीशया शोचति मुह्यमानः ।
जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥ इति ।

पञ्चमे खण्डे—क्षरं तु विद्या ह्यमृतं तु विद्या । विद्याविद्ये ईशते यस्तु सोऽन्यः इति । षष्ठे खण्डे तमीश्वराणां परमं महेश्वरं तं देवतानां परमं 15 च दैवतम् । पतिं पतीनां परमं परस्ताद्विन्दाम देवं भुवनेशमीड्यम् ॥ इति ।

बृहदारण्यके चतुर्थाध्याये चतुर्थे ब्राह्मणे—"स यथा सैन्धवघनः··· संज्ञास्ति । इत्याद्याः । एवं गुणश्रुतीनामप्रामाण्यप्रसङ्गः । तथा च गुणश्रुतयः—नारायणानुवाके सहस्रशीर्षं देवमित्यारभ्य—

विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति । 20
पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम् । इति ।

(मुण्डकोपनिषदि) ब्रह्मकोशप्रतीकाशं सुषिरं चाप्यधोमुखम् । हृदयं तद्विजानीयात् विश्वस्यायतनं महत् ॥ इति । सुबालोपनिषदि—पञ्चमे खण्डे—यः प्राणे यो विज्ञाने य आनन्दे यो ह्याकाशे य एतस्मिन्सर्वस्मिन्नन्तरे संचरति सोऽयमात्मा, तमात्मानमुपासीत, अजरममृतमभयम 25 शोकमनन्तमिति । सप्तमे खण्डे—अन्तःशरीरे निहितो गुहायामज एको नित्यः । यस्य पृथिवी शरीरम् ॥ इति । कठवल्ल्यां द्वितीयखण्डे—"तं

दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति । अणोरणीयान्महतो महीयानात्मास्य जन्तोर्निहितो गुहायाम्" इति । यः सर्वज्ञः सर्ववित्, परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति, अपहतपाप्मा विजरो विमृत्यु-
5 र्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्प इत्याद्याः । एवं शरीरशरीरिभावश्रुतीनामप्रामाण्यप्रसङ्गः । तथा च श्रुतयः–यस्यात्मा शरीरं यस्य पृथिवी शरीरमित्याद्याः । एवं सर्वं खल्विदं ब्रह्म इदं सर्वं यदयमात्मा ऐतदात्म्यमिदं सर्वमित्याद्यभेदश्रुतीनामपि संसर्गांशे अप्रामाण्यप्रसङ्गः । किञ्च तासामभेदश्रुतीनां नीलो घट इत्यादिवत्स्वरूपाभेदे तात्पर्यम्, उत
10 रज्जुरेव न सर्प इत्यादिवत्प्रपञ्चबाधे तात्पर्यम् । नाद्यः; जडरूपप्रपञ्चस्य स्वप्रकाशब्रह्मरूपत्वासंभवात् प्रपञ्चमिथ्यात्वासिद्धिप्रसङ्गाच्च ब्रह्मप्रपञ्चयोर्मिथ्यात्वसत्यत्वान्यतरप्रसङ्गाच्च । न द्वितीयः; सर्वशब्दान्तर्भूतजीवात्मकप्रपञ्चे बाधासंभवात् । न च सर्वपदस्य जडरूपप्रपञ्चपरत्वमेवास्त्विति वाच्यम्; संकोचकाभावेन तस्यान्याय्यत्वात् चेतनात्मकप्रपञ्चपरत्वस्यैव वक्तुं शक्य-
15 त्वाच्च । तस्मात्सकलश्रुतिप्रामाण्यानुरोधेन भेदनिषेधश्रुतीनां स्वतन्त्रभेदनिषेध एव तात्पर्यवर्णनं युक्तम् ॥

न च भेदनिषेधश्रुतिप्रामाण्यानुरोधेन भेदश्रुतिसगुणश्रुतिशरीरशरीरिभावश्रुतीनां व्यावहारिकपरत्वमेवास्त्विति वाच्यम्; तथा सत्यतत्त्वावेदकतया अप्रामाण्यप्रसङ्गात् श्रुतीनां विप्रलम्भकत्वप्रसङ्गाच्च । भेदनिषेध-
20 श्रुतीनामन्यपरत्वे तु न कस्याश्चिदपि श्रुतेरप्रामाण्यं विप्रलम्भकत्वं वा । भेदनिषेधश्रुत्यर्थस्तु पूर्वमेवोक्तः । किंच किमिदं मिथ्यात्वं न तावदेकावच्छेदेन स्वसंसृज्यमानस्वाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वम्, संयोगादावतिव्याप्तिवारणाय एकावच्छेदेनेति, कालभेदेन स्वाधिकरणनिष्ठात्यन्ताभावप्रतियोगिनि घटादावतिव्याप्तिवारणाय स्वसंसृज्यमानेति । तन्न; घटादाव-
25 तिव्याप्तेः, तस्यापि स्वसंसृज्यमानस्वाधिकरणनिष्ठप्रातिभासिकघटाभावप्रतियोगित्वात् । तत्र चान्यथाख्यातिस्वीकारे सर्वत्रान्यथाख्यातिप्रसङ्गः । न च

व्यावहारिकत्वमभावविशेषणम् ; समवायसंबन्धेन घटाभावप्रतियोगित्वेन तथाप्यतिव्याप्तेः ॥

नच प्रतियोग्याधारताप्रयोजकसंबन्धारोप्यकाभावप्रतियोगित्वं विवक्षितम् , समवायसंबन्धारोप्यकघटाभावश्च न घटाधारताप्रयोजकसंबन्धारोप्यक इति न तत्रातिव्याप्तिरिति वाच्यम् ; तथा सति शुक्तिरजते असंभवापत्तेः । 5 शुक्तिरजताधिकरणताप्रयोजकाध्यासिकसंबन्धारोप्यकाभावप्रतियोगित्वाभावात् शुक्तिघटादिसाधारणरजताभावस्य तदारोप्यकत्वासंभवात् । नच रजताभावोऽप्याध्यासिकसंबन्धारोप्यक एवेति वाच्यम् ; भ्रान्ताभ्रान्तसाधारण्येन त्रैकालिकरजतनिषेधप्रतीतेरनुभवसिद्धत्वात् । नच समवायस्यैवाभावान्न तदारोप्यकाभावमादाय घटादावतिव्याप्तिरिति वाच्यम् ; समवायाभावेऽपि 10 तत्स्थानाभिषिक्तसंबन्धारोप्यकाभावमादाय तत्रातिव्याप्तेरवर्जनीयत्वात् । किञ्चेदं लक्षणं शुक्तिरजतेऽसंभवि; रजताधिकरणे तदभावासंभवात् प्रतियोगितदभावयोर्विरुद्धत्वात् । नच समानसत्ताकयोरेव विरोध इति वाच्यम्; समानसत्ताकयोरेव प्रतियोग्यनुयोगिभावदर्शनेन प्रतियोगित्वस्याप्यभावप्रसङ्गात् लाघवेन प्रतियोगित्वेनैव विरोधकल्पनाच्च ॥ 15

किञ्च समानसत्ताकयोरेव विरोधाङ्गीकारे अविद्यानिवृत्तिकाले अविद्यावस्थानप्रसङ्गो दुर्वारः; अविद्यानिवृत्तेर्ब्रह्मस्वरूपत्वेनाविद्यातन्निवृत्त्योः समानसत्ताकत्वाभावात् । ब्रह्मस्वरूपातिरिक्तत्वेन समानसत्ताकत्वे अध्यस्तानुवृत्त्या अनिर्मोक्षप्रसङ्गः ॥

ननु ब्रह्मस्वरूपस्यैवाविद्यातन्निवृत्तिसत्तारूपत्वेन तयोः समानसत्ताकत्वाद्विरोधः संभवतीति चेन्न; तथासति पारमार्थिकव्यावहारिकसत्तयोरभेदप्रसङ्गात् । नन्वस्तु सत्तावच्छिन्नप्रतियोगिताकस्वात्यन्ताभावसमानाधिकरणत्वं मिथ्यात्वम् ; शुक्तिरजतस्य रजतत्वावच्छिन्नाभावसामानाधिकरण्याभावेऽपि सत्त्वावच्छिन्नरजताभावसामानाधिकरण्याविरोधात् अधिष्ठानरूपसत्त्वस्य शुक्तिरजतेऽभावादिति चेन्न; तादृशाभावसामानाधिकरण्येन घटादेरपि मिथ्यात्वप्रसङ्गात् । लाघवेनाभावस्य प्रतियोगिनैव विरोधेन तदवच्छिन्नाभावासंभवात् । व्यधिकरणधर्मावच्छिन्नाभावाङ्गीकारे रजतवत्पेटि-

काश्रये मदीयरजतवत्पेटिकात्र नास्तीति प्रतीत्या व्यधिकरणधर्मावच्छिन्ना-
वच्छेदकताकरजतावच्छिन्नप्रतियोगिताकाभावादेरपि स्वीकारप्रसङ्गाच्च ।

नन्वस्तु स्वानधिकरणमात्रानधिकरणात्यन्ताभावप्रतियोगित्वं मिथ्यात्व-
मिति चेन्न; घटादावतिव्याप्तेः । त्वन्मते घटे घटाभावप्रतीतेर्घटरूपा-
5 त्यन्ताभावविषयत्वेन तस्य घटानधिकरणघटावृत्तित्वेन घटादेस्तत्प्रतियोगि-
त्वात् । स्वभिन्नेत्यभावविशेषणे च आकाशात्यन्ताभावेऽतिव्याप्तिः, तस्य
स्वानधिकरणस्वान्यावृत्त्याकाशरूपात्यन्ताभावप्रतियोगित्वात् । किञ्च प्रपञ्चे
साध्यमानं स्वानधिकरणानधिकरणात्यन्ताभावप्रतियोगित्वं स्वाभावस्य स्वाधि-
करणवृत्तित्वादवृत्तित्वाद्वा भवेत् । तत्र स्वाधिकरणवृत्तित्वं प्रागेव दूषितम् ।
10 अवृत्त्यभावप्रतियोगित्वं तु सत्यत्वाविरुद्धम् । आकाशात्यन्ताभावस्यावृत्त्या-
काशरूपात्यन्ताभावप्रतियोगित्वेऽपि सत्यत्वाविरोधात् ॥

ननु तर्ह्यध्यस्तत्वमेव मिथ्यात्वमस्त्विति चेन्न; अध्यासानिर्वच-
नात् । नता वत्प्रकाशोऽध्यासः; ब्रह्मण्यतिव्याप्तेः । नापि भ्रमः; अन्यथा-
ख्यातेरनङ्गीकारात् । तदभाववति तज्ज्ञानं शुक्तिरजते असिद्धम् । रजता-
15 श्रयशुक्तावेव रजतप्रतिभासात् । किञ्च भ्रमविषयत्वं न मिथ्यात्वम्; शुक्ते-
रपि मिथ्यात्वप्रसङ्गात् । नच रजतमेव विषयो न शुक्तिरिति वाच्यम्;
अधिष्ठानाभानेऽध्यस्तस्याप्यभानप्रसङ्गात् । नापि विशेषणत्वेन भ्रमविष-
यत्वं मिथ्यात्वम्; शुक्तीदन्ताया मिथ्यात्वप्रसङ्गात् । शुक्तिरजते तदभाव-
प्रसङ्गाच्च, तस्य विशेष्यत्वेनैव भानात् । नाप्यधिष्ठानकल्पितत्वमध्यस्तत्वम्
20 कल्पनायां पूर्वोक्तविकल्पे उक्तदोषग्रासात् ॥

ननु दोषकरणतानिरूपितज्ञाननिष्ठकार्यतावच्छेदकत्वमध्यस्तत्वम्, इदं
च शुक्तिरजते संभवति, रजतज्ञाने रजतविषयकत्वस्यैव दोषजन्यतावच्छेद-
कत्वात्, शुक्तौ तु नोक्तलक्षणम्; तद्विषयकत्वस्य दोषजन्यत्वानवच्छेद-
कत्वादिति चेन्न;—अविद्यायाः साक्षिभास्यत्वेन साक्षिरूपचैतन्यस्य दोषा-
25 जन्यत्वेनाविद्यायास्तदनवच्छेदकत्वेन तत्राव्याप्तेः । काचादिदोषप्रत्यक्षस्य
काचादिजन्यतया तदवच्छेदककाचादावतिव्याप्तेश्च । नच गुणनिरूपित-
कार्यतानच्छेदकत्वमध्यस्तत्वम्, अविद्यायाश्च न गुणजन्यतावच्छेदक-

त्वमिति नाव्याप्तिरिति वाच्यम् ; तथासति ब्रह्मण्यतिव्याप्तेः । तद्वारणाय जन्यत्वविशेषणे चाविद्यायामव्याप्तिः, तस्मान्न मिथ्यात्वं निर्वक्तुं शक्यम् ॥

व्यवहारविरोधादपि न प्रपञ्चमिथ्यात्वसंभवः; हानोपादानादिलौकिकसमस्तव्यवहारस्य वस्तुसत्तासाध्यत्वात्, मिथ्याभूतस्यापि व्यवहारोपयोगित्वे शुक्तिरूप्यस्यापि तथात्वप्रसङ्गः । किञ्च प्रपञ्चस्य मिथ्यात्वे आत्मविज्ञानेन 5 सर्वविज्ञानप्रतिज्ञाश्रुतिविरोधः । "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदित"मिति हि श्रुतिः । न हि परमार्थब्रह्मज्ञाने मिथ्याभूतप्रपञ्चज्ञानं संभवति; अन्यज्ञानेनान्यज्ञानायोगात् सत्यज्ञानेनासत्यज्ञानायोगाच्च । न हि घटज्ञानेन पटज्ञानं संभवति शुक्तिज्ञाने च रजतज्ञानं संभवति ॥

ननु परमार्थब्रह्मज्ञाने सर्वं मिथ्यात्वेन ज्ञातं भवतीति श्रुत्यर्थ इति चेत् 10 घटस्सन् पटस्सन्निति ब्रह्मज्ञानेऽपि प्रपञ्चस्य मिथ्यात्वेनाप्रतीतेः । नच पारमार्थिकतया अद्वितीयतया च ब्रह्मणि ज्ञाते सर्वमिदं मिथ्यात्वेन ज्ञातं भवतीति श्रुत्यर्थ इति वाच्यम् ; तथासत्यन्योन्याश्रयात् । अद्वितीयत्वे ब्रह्मणि ज्ञाते हि प्रपञ्चस्य मिथ्यात्वज्ञानं तस्य चैतज्ज्ञाने ब्रह्मण्यद्वितीयत्वज्ञानमिति । किञ्चैवं "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं 15 स्या"दिति दृष्टान्तानुगुण्येन प्रपञ्चस्य ब्रह्मविकारत्वेन तस्य तन्मयत्वेन सत्यत्वमेव स्यान्न तु मिथ्यात्वमिति । तस्मात् प्रपञ्चः सत्य एवेति सिद्धम् ॥

**इति वेदान्तविजयमङ्गलदीपिकायां प्रपञ्चमिथ्यात्वभङ्गः प्रथमः ॥**

---

**श्रीः** 20

**श्रीमते रामानुजायनमः ।**

## अथ जीवेश्वरैक्यभङ्गः प्रारभ्यते ।

एवं जीवेशयोरैक्यमयुक्तं सर्वथैव हि ।
मानाभावादयुक्तेश्च भिन्नत्वप्रत्ययादपि ॥ 25
भिन्नत्वमेव युक्तं हि प्रत्यक्षादिप्रमाणतः ।
ऐक्यप्रतीत्यभावाच्च निर्बाधं ब्रह्मजीवयोः ॥

जीवब्रह्मणोरैक्यं तावदनुपपन्नम्; प्रमाणाभावात्। न तावत् प्रत्यक्षं प्रमाणम्; अहमीश्वर इति कस्याप्यननुभवात्। नच तत्त्वमस्यादिवाक्यश्रवणानन्तरं तथानुभवोऽस्तीति वाच्यम्; तादृशवाक्यार्थानुभवस्य स्वरूपैक्यविषयत्वासिद्धेः। नाप्यनुमानम्; तद्व्याप्यलिङ्गाभावात्। नचेश्वरो जीवा-
5 भिन्नः आत्मत्वात् जीववदित्यनुमानादभेदसिद्धिरिति वाच्यम्; तद्विरुद्धधर्माभाववत्त्वेन सोपाधिकत्वात्। नचेश्वरे वास्तवतद्विरुद्धधर्मो नास्तीति वाच्यम्; तथासति घटपटादीनामपि परस्पराभेदप्रसङ्गात् ईश्वरो जीवभिन्नः तद्विरुद्धधर्मवत्त्वात् घटपटादिवदित्यादिना सत्प्रतिपक्षत्वाच्च ॥

नन्वस्तु तर्हि श्रुतिः प्रमाणम्। तथाहि बृहदारण्यके चतुर्थेऽध्याये—"इदं
10 ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमानि भूतानि इदं सर्वं यदयमात्मा" इति। तत्रैव पञ्चमे ब्राह्मणे "तेजोमयोऽमृतमयः पुरुषः अयमेव स योऽयमात्मा" इति। कैवल्योपनिषदि—

स एव मायापरिमोहितात्मा
शरीरमास्थाय करोति सर्वम्।

15 इत्यादिकेति चेदुच्यते; इदं ब्रह्मेत्यादि वाक्यं नाभेदे प्रमाणम्। तत्र सामानाधिकरण्यं बाधार्थमभेदार्थं वा। नाद्यः; अचेतनवत्सर्वेषामपि चेतनानां बाधप्रसङ्गात्। तथाचेश्वरस्य केनाभेदस्त्वया साधनीयः स्यात्। न द्वितीयः; अचेतनानामपीश्वराभेदप्रसङ्गात्। क्वचिद्बाधार्थं क्वचिदभेदार्थमिति चेन्न; संभवत्येकार्थत्वे अर्थभेदकल्पनाया अन्याय्यत्वात्। तस्मात्
20 चिदचिद्वाचकपदानां तत्प्रकारकपरमात्मपरत्वेनैव सामानाधिकरण्यं युक्तम्। "स एव मायापरिमोहितात्मे"त्यत्र तच्छब्देन जीवमनूद्य तस्य मायावश्यत्वं प्रतिपाद्यते। एवं श्रुत्यन्तराण्यप्येतत्समानार्थकतया व्याख्येयानीति न श्रुतीनां जीवेश्वराभेदे प्रामाण्यम् ॥

नन्वेवमपि भेदस्याप्रामाणिकत्वादनिर्वचनीयत्वाच्च न जीवेश्वरभेदः।
25 तथाहि न तावत् घटादिभेदे प्रत्यक्षं प्रमाणम्; तत्प्रत्यक्षस्यासंभवात्, तद्धि प्रतियोगित्वज्ञानाधीनम्, घटो न पटो नेत्येव प्रतीतेः। प्रतियोगित्वं (विरोधित्वं) सहानवस्थानलक्षणम्, तच्च भेदज्ञानाधीनमित्यन्योन्याश्रयात्।

अनिर्वचनीयश्च भेदः, स किमतिरिक्तान्योन्याभावः, उत वैलक्षण्यम्, अथवा स्वरूपम् । नाद्यः; प्रतियोगिनोऽसंभवात् । न तावद्घटः प्रतियोगी; घटात्यन्ताभावान्योन्याभावयोरभेदप्रसङ्गात् संयोगादीनां प्रतियोगिभेदेनैव भेददर्शनात् । न द्वितीयः; घटादिज्ञानेऽपि घटादिभेदव्यवहारप्रसङ्गात् । अतएव न तृतीयः; घटस्वरूपज्ञानेऽपि पटादिभेदव्यवहारप्रसङ्गादिति चेदुच्यते; 5 प्रत्यक्षादेरेव प्रमाणत्वान्न मानाभावः । घटः पटो न पटो घटो न नेयं शुक्तिः नेदं रजतमित्याद्याकारेण प्रत्यक्षादिनैव भेदः प्रतीयते । नच भेदज्ञानस्य प्रतियोगिज्ञानसापेक्षत्वात् तस्य च भेदज्ञानाधीनत्वादन्योन्याश्रय इति वाच्यम्; भेदज्ञानस्य प्रतियोगिज्ञानाधीनत्वेऽपि तस्य भेदज्ञानानधीनत्वात् । नहि प्रतियोगित्वेन प्रतियोगिज्ञानं भेदज्ञाने हेतुः; येन प्रतियोगिज्ञानस्य 10 भेदज्ञानाधीनत्वेन तदपेक्षा स्यात् । किन्तु स्वरूपेण तज्ज्ञानं, तच्च न भेदज्ञानमपेक्षत इति नान्योन्याश्रयः । नच प्रतियोगित्वज्ञानस्य तदहेतुत्वे कथं तत्प्रकारकभेदज्ञानं स्यादिति वाच्यम्; प्रतियोग्यनुयोगिभावस्य संसर्गविधया भानेन भेदज्ञानस्य तदप्रकारत्वात् अभावज्ञाने पूर्वं ज्ञातयोरभावत्वप्रतियोगित्वयोरेव प्रकारत्वेन तस्य तज्ज्ञानानपेक्षत्वाच्च । अन्यथा अभाव- 15 त्वज्ञानानपेक्षाया ब्रह्मणोऽपि वक्तुमशक्यत्वात् संसर्गविधयाऽभावत्वज्ञानस्यानुभवविरोधेन च वक्तुमशक्यत्वाच्च । नच भेदस्येन्द्रियसन्निकर्षाभावान्न प्रत्यक्षत्वमिति वाच्यम्; संयुक्तविशेषणतादेरेव फलबलेन संबन्धत्वकल्पनात् । नच विशेषणतासन्निकर्षे व्यवहितप्रदेशेऽप्यभावबुद्ध्यापत्तिः; अभावावच्छिन्नाधिकरणसंयोगस्यैव हेतुत्वात् । अन्यथा व्यवहितरूपादेरपि प्रत्य- 20 क्षत्वप्रसङ्गात् । साच स्वरूपसंबन्धविशेष एवेति न चोद्यावकाशः । एवमनुमानमपि भेदे प्रमाणमूहनीयम् । नापि भेदस्यानिर्वचनीयत्वम्; अन्योन्याभावस्यैव भेदत्वात्, नच घटान्योन्याभावो न घटादिप्रतियोगिकः तस्य तदविरोधित्वादिति वाच्यम्; घटसंयोगाविरोधिनो घटस्य तदप्रतियोगित्वप्रसङ्गात् । नचाभावप्रतियोगिन्येवायं नियमः; अप्रयोजकत्वात् । तदभावावि- 25 रोधिनस्तदभावत्वं तु न संभवति । तच्च न घटादावस्ति, घटनिष्ठधर्मस्यैव घटान्योन्याभावाभावत्वात् । नचान्योन्याभावेऽपि घटादिभेदाङ्गीकारे तत्रापि

तद्भेदेनानवस्थापत्तिरिति वाच्यम्; तस्य स्वपरनिर्वाहकत्वेन स्वस्यैव स्वस्मिन् भेदव्यवहारहेतुत्वात् । अन्यथा चाक्षुषत्वप्रयोजकरूपादेः स्वस्मिंस्तदप्रयोजकत्वप्रसङ्गात् ॥

नन्वेवमपि घटान्योन्याभावघटात्यन्ताभावयोरभेदप्रसङ्गः; प्रतियोगिभे-
5 दस्यैव तद्भेदकत्वादिति चेदुच्यते; किं निरूपकाभेदो निरूप्याभेदप्रयोजकः प्रतियोग्यभेदोऽभावाभेदप्रयोजको वा । नाद्यः; एकघटनिरूप्यमाणानां संयोगसादृश्यज्ञानाभावादीनां प्रतियोग्यभेदेऽपि भेददर्शनात् । नचैकजातीयकनिरूप्याभेदप्रयोजको निरूपकाभेद इति वाच्यम्; एकघटनिरूप्यमाणानां नानापुरुषीयाणामेकपुरुषीयाणां वा ज्ञानानामभेदप्रसङ्गात् ।
10 न द्वितीयः; एकघटप्रतियोगिकानां प्रागभावादीनामभेदप्रसङ्गात् । नच तेषामेकजातीयत्वाभावान्नाभेदप्रसङ्ग इति वाच्यम्; अन्योन्याभावस्यापि तथात्वेन तदप्रसङ्गात् । तस्मात्प्रतियोगितावच्छेदकभेद एवाभेदप्रयोजको न प्रतियोगिभेदः । अनेकघटप्रतियोगिकघटत्वावच्छिन्नात्यन्ताभावस्यानन्त्यप्रसङ्गात् ॥

15 वस्तुतस्तु घटादौ पटादिभेदो घटादिनिष्ठासाधारणधर्म एव । तस्य स्वपरनिर्वाहकत्वेन नानवस्थादिदोषः । न चायं घटादिज्ञाने पटादिभेदव्यवहारप्रसङ्गः; घटादिव्यवहारस्येष्टत्वात् । घटप्रतियोगिकभेदव्यवहारस्तु पटज्ञानसापेक्ष इति तदभावान्न तद्व्यवहारप्रसक्तिः । नच विरुद्धघटादिज्ञानं भेदज्ञानाधीनमित्यन्योन्याश्रय इति वाच्यम्; घटादिवृत्तित्वाभाव-
20 रूपविरोधज्ञानस्य भेदज्ञानानधीनत्वात् । विरुद्धत्वेनाज्ञानेऽपि स्वरूपेण घटत्वादिज्ञानस्यैव भेदज्ञानत्वेन तस्य तदधीनत्वाच्च । नच प्रमेयत्वेन घटत्वादिज्ञानेऽपि भेदव्यवहारप्रसङ्गः; सामान्यधर्माप्रकारकघटत्वादिज्ञानस्यैव भेदव्यवहारहेतुत्वात् ॥

नन्वेवं भेदोऽभेदाभाव एव; तस्याभेदेनैव विरोधात्, नतु घटस्येति
25 चेन्न; घटात्यन्ताभावत्वाभावस्येष्टत्वात् तस्यैव प्रतियोगिविरोधित्वव्या-

---

१ तद्भेदे अनवस्था न चेदभेदापत्तिरिति वाच्यम् । पा.

प्यत्वात् । अन्योन्याभावत्वाभावस्तु कुतः? आपादकाभावात् । प्रतियोग्यवि-
रोधित्वमेवापादकमिति चेन्न; प्रतियोगिविरोधित्वमत्यन्ताभावत्वाभावापादकं
किं न स्यात्? प्रतियोगिविरोधिनोऽत्यन्ताभावत्वप्रतीतेर्न तदापादक-
त्वमिति चेन्न; प्रतियोग्यविरोधिनोऽन्योन्याभावत्वप्रतीतेर्न प्रतियोग्य-
विरोधित्वमपि तदापादकमिति गृहाण । अत एव प्रतियोग्यविरोधिनः 5
संयोगाभावादेस्तदत्यन्ताभावत्वं व्यधिकरणधर्मावच्छिन्नाभावस्य प्रतियो-
ग्यविरोधिनोऽपि तदभावत्वम् । यदि प्रतियोगितावच्छेदकावच्छिन्नप्रतियो-
गिविरोधित्वं तत्रास्तीति मन्यसे तदा तादात्म्यावच्छिन्नप्रतियोगिविरोधित्वं
भेदस्यापीति तुल्यम् ॥

नचैवं भेदाधिकरणानिरूपणम्; तादात्म्यरहितस्यैव भेदाधिकरणत्वात् । 10
तादात्म्याभावाधिकरणमेव किमिति चेत् किञ्चिदित्युत्तरम् । अन्यथा भावा-
धिकरणं किमित्युक्ते किमुत्तरं धत्से? तस्माद्यत्र यत्प्रतीयते तस्य तदेवा-
धिकरणम् । न चासाधारणधर्मस्य निष्प्रतियोगिकस्य कथं सप्रतियोगिक-
भेदत्वमिति वाच्यम्; निष्प्रतियोगिकदेवदत्तादेः सप्रतियोगिकपुत्रत्वानु-
पपत्तिप्रसङ्गात् । एवं तद्विलक्षणस्वरूपं तद्भेद इत्यपि पक्षो निर्व्यूढः ॥ 15

नचैवं पक्षद्वयेऽपि घटादिनिर्विकल्पके सति घटादिप्रतियोगिज्ञाने सति
घटादिभेदव्यवहारप्रसङ्ग इति वाच्यम्; भेदसविकल्पकस्यैव भेदव्यवहार-
हेतुत्वेन तदप्रसङ्गात् । कथमन्यथा अतिरिक्तान्योन्याभावादिमते तादृशध-
र्मिज्ञाने प्रतियोगिज्ञाने च सति भेदज्ञानाभावः तद्व्यवहाराभावश्च । तस्मा-
द्भेदस्य प्रामाणिकत्वान्निर्वचनीयत्वाच्च जीवेश्वरयोर्भेदो न विरुद्ध इति 20
सुस्थम् ॥

नन्वेवमपि जीवेश्वरभेदे मानाभावः; प्रत्यक्षादेरभावादिति चेदुच्यते;
नाहमीश्वर इति प्रत्यक्षमेव तत्र प्रमाणम् । नच योग्यानुपलब्ध्यभावेन प्रत्य-
क्षासंभव इति वाच्यम्; प्रतियोगिसत्त्वप्रसञ्जितोपलम्भप्रतियोगिकानुपल-
ब्धेरेवाभावज्ञानहेतुतया प्रतियोगियोग्यत्वायोग्यत्वयोरप्रयोजकत्वात् । अत 25
एव स्तम्भे पिशाचभेदः प्रत्यक्ष इति तार्किकाणां सिद्धान्तः । संभवति
च प्रकृते प्रतियोगिसत्त्वप्रसञ्जितप्रतियोगिकानुपलब्धिः; यद्ययं परिदृ-

श्यमानो जीव ईश्वरः स्यात् तदा तदात्मतयोपलभ्येतेत्यापादनसंभवात् । न चासतः प्रतियोगिसत्त्वस्य आपादकताऽसंभव इति वाच्यम्; तदसत्त्वेऽपि सत्ताप्रतियोगिसत्त्वापादनेनोपलम्भापादनसंभवात् । अन्यथा तर्कमात्रोच्छेदप्रसङ्गेन ब्रह्ममीमांसाया अनारम्भ एव स्यात् । तस्मात्तत्सहकृतं मन 5 एवेश्वरभेदे प्रमाणम् । भेदसन्निकर्षश्च पूर्वमेवोक्तः ॥

यद्वा या यत्र प्रतियोगिसत्त्वव्यतिरेकप्रयुक्तानुपलब्धिः सा तत्राभावग्राहिका, अस्ति चैषा घटादौ मनस्त्वाभावग्रहे वायौ रूपाभावग्रहे स्तम्भे पिशाचान्योन्याभावग्रहे प्रकृते च । नतु जलपरिमाणौ पृथिवीत्वाभावग्रहे वायावनुद्भूतरूपाभावग्रहे आत्मनि धर्माधर्माभावग्रहे मनसि घटत्वाभावग्रहे चास्ति ॥

10 आचार्यास्तु—परमात्मनोऽपि योग्यतया योग्यानुपलब्धिरप्यस्ति । न चैवं परमात्मनोऽपि ग्रहणप्रसङ्गः; इन्द्रियसन्निकर्षाभावात् मनसो बहिः स्वातन्त्र्याभावात् काचादिदोषोपहितचक्षुष इव रजस्तमोपहितचेतसः प्रतिबन्धाद्वा तदग्रहणोपपत्तेर्नेश्वरभेदप्रत्यक्षानुपपत्तिरित्यनुगृह्णन्ति ॥

नच प्रमाणान्तरसहकारिणो मनसो न पृथक् प्रमाणत्वमिति वाच्यम्; 15 तत्र हि प्रमाणसहकारित्वं साक्षात्परम्परौदासीन्येन प्रमाणसहकारित्वमात्रं विवक्षितं साक्षात्सहकारित्वं वा । नाद्यः; सौरभ्यविशिष्टचन्दनप्रत्यक्षसहकारिणः सौरभग्राहिणः, अनुमानसहकारिणो व्याप्तिग्राहिणः, शब्दसहकारिणः शक्तिग्राहिणश्चाप्रामाण्यप्रसङ्गात् । न द्वितीयः; स्वविषयाधिकरणकाभावप्रत्यक्षहेतुतया स्वविषयप्रतियोगिकाभावप्रत्यक्षहेतुतया संशयोत्तरप्र- 20 त्यक्षहेतुतया च परामर्शस्याप्रामाण्यप्रसङ्गात् दक्षिणवामाक्ष्णोः परस्परसहकारित्वेनाप्रामाण्यप्रसङ्गाच्च । सर्वप्रमाणसहकारित्वं चाप्रयोजकम्; किञ्चित्प्रमाणसहकारिप्रामाण्यवत्सर्वप्रमाणसहकारिप्रामाण्यस्याप्यविरोधात् विषयभेदेन सहकारित्वप्रामाण्ययोः संभवाच्च ॥

किञ्च प्रमाणसहकारित्वं प्रामाण्यस्यैवोपपादकं इतरप्रामाण्यनिर्वाहकस्य, 25 स्वप्रामाण्यनिर्वाहकत्वस्य किं पुनः, न्यायसिद्धत्वात् । अत एव विद्वत्सहकारिपुस्तकादेरविद्वत्तामात्रेण तत्सहकारिविदुषोऽपि न तथात्वम् । मनसः प्रमाणत्वाभावे अहमर्थप्रत्ययासंभवाच्च । अहमर्थस्य साक्षिभास्यत्वं विनिगमकाभावेन निरस्तम्, मनसैव तद्भानसंभवात् ॥

नच निरवयवात्मनो मनःसंयोगासंभवः; निरवयवस्य ब्रह्मणोऽविद्यासंबन्धवदुपपत्तेः निरवयवस्यापि व्याप्यवृत्तिसंयोगसंभवाच्च ॥

एवं श्रुतिरपि भेदे प्रमाणम्, यथा

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥ 5

न चान्तःकरणजीवपरत्वमेव स्यादिति वाच्यम्; सजातीयविजातीयद्वयपरत्वापेक्षया सजातीयद्वयपरत्व एव स्वारस्यात् । द्वे ब्रह्मणी वेदितव्ये परं चापरं च, पृथगात्मानमित्यादिश्रुत्यानुगुण्येन जीवेश्वरपरत्वस्यैवोचितत्वाच्च । नच तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वं, अनश्नन्नन्यो अभिपश्यतीति ज्ञ इत्यादिपैङ्गश्रुतिवाक्येनान्तःकरणजीवपरत्वमेवास्या इति वाच्यम्; 10

समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः ।
जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ।

इति समानार्थकश्रुत्यनुरोधेन सत्त्वशब्दस्य "सत्त्वमस्त्रीषु जन्तुष्वि"ति जन्तुपरत्वेन निघण्टुपाठाच्चान्तःकरणपरत्वाभावात् । जन्तोश्च—

प्राणी तु चेतनो जन्मी जन्तुजन्यशरीरिणः । 15

इति नामपाठेन चेतनत्वात् । भेदज्ञानस्यानर्थहेतुत्वप्रतिपादकश्रुतीनामन्यपरत्वेन विरोधाभावात् । तथाहि—पृथगात्मानमित्यादिना भेदज्ञानस्य मोक्षहेतुत्वम्, मृत्योः स मृत्युमाप्नोतीत्यादिना अनर्थहेतुत्वं च श्रुतिसिद्धम् । विरुद्धयोस्तयोरविरोधाय विषयभेदः कल्पनीयः । सच स्वतन्त्रपरतन्त्रभेदः । स्वतन्त्रभेदज्ञानमनर्थहेतुः परतन्त्रभेदज्ञानं मोक्षहेतुरिति । अन्यथा 20 अन्यतरश्रुत्यप्रामाण्यप्रसङ्गात्, परतन्त्रभेदश्च शरीरशरीरिभावेन, स्वतन्त्रभेदस्तु तच्छून्यतयेति ॥

तथाच श्रुतिः—यस्यात्मा शरीरं यस्य पृथिवी शरीरमित्यादिः । एतदभिप्रायकाण्येव सर्वं खल्विदं ब्रह्मेत्याद्यभेदपरवाक्यानि । अन्यथा भेदमात्रनिषेधे नेह नानास्ति किञ्चनेत्यत्र किञ्चनपदवैयर्थ्यम्, नेह नानेत्यनेनैव 25 भेदनिषेधसिद्धेः । तदयमर्थः—किञ्चन किमपि वस्तु नाना विना ब्रह्मणा विना इह नास्तीति सर्वं वस्तु ब्रह्मान्तर्यामिकमिति यावत् । नचाध्याहार-

दोषोऽपि, ततोऽपि पदवैयर्थ्यस्य जघन्यत्वात् । नच मानान्तरसिद्धभेदे श्रुतेस्तात्पर्याभावः । घटः सन् पटः सन्नित्यादिप्रत्यक्षसिद्धे सदात्मके ब्रह्मणि सर्ववेदान्तानां तात्पर्याभावप्रसङ्गात् । अनुग्राहकतया न विरोध इति यदि तदा भेदेऽपि तुल्यम् ॥

5 किञ्च मानान्तरसंवादस्य श्रुत्यर्थाश्वासकरत्वेन तात्पर्यानुकूलतया तदभावहेतुत्वाभावात् । नच प्रयोजनाभावेन श्रुतेस्तात्पर्याभावः; निष्प्रयोजनस्यापि प्रत्यक्षादेः प्रामाण्यदर्शनात् निष्प्रयोजनवाक्यस्यापि स्वार्थे तात्पर्यदर्शनाच्च । पृथगात्मानमित्यादिश्रुत्या तेनामृतत्वमेतीति भेदज्ञानस्य मोक्षरूपप्रयोजनप्रतिपादनाच्च ॥

10 किञ्च प्रत्यक्षेण जीवस्य किञ्चिज्ज्ञत्वदुःखित्वादिना भेदसिद्धावपि कर्मवश्यत्वसृज्यत्वपाल्यत्वशेषत्वनियाम्यत्वशरीरत्वादिना तद्विरुद्धसर्वज्ञत्वादिधर्मविशिष्टपरमात्मभेदप्रतिपादने भेदश्रुतीनां तात्पर्यमिति न तत्र क्षुद्रोपद्रवगन्धः ॥

किञ्च कस्याः श्रुतेर्भेदे तात्पर्याभावः? न तावत् द्वा सुपर्णेत्यादिश्रुतेः तत्र 15 भेदप्रतिपादनस्यानशनार्थत्वेन तदभावात् । नापि समाने वृक्ष इति श्रुतेः; तत्र तस्या वीतशोकतानिमित्तदर्शनविषयताप्रतिपादनार्थत्वात् । नापि पृथगात्मानमिति श्रुतेः; तत्र तस्या मोक्षोपायताप्रतिपादनार्थत्वात् । एवं श्रुत्यन्तरेऽपि द्रष्टव्यम् ॥

नच मिथ्यात्वेन भेदश्रुतीनां तात्पर्याभावः; प्रपञ्चसत्यत्वस्य समर्थि-20 तत्वात् श्रुत्यन्तरविरोधश्च पूर्वमेव परिहृतः । एतेन—

मानान्तरप्रसिद्धत्वान्मिथ्यात्वादप्रयोजनात् ।
श्रुत्यन्तरविरोधाच्च न श्रुतिर्भेदगोचरा ॥

इति नवीनोक्तं निरस्तम् ॥

किञ्च ब्रह्मणोऽहमर्थात् भेदस्तावत्परैरभ्युपगतः । अहमर्थश्च जीवा-25 त्मैवेति कथं जीवब्रह्मणोरभेद इति संक्षेपः ॥

**इति वेदान्तविजयमङ्गलदीपिकायां जीवेश्वरैक्यभङ्गः ॥**

श्रीः
हरिः ओम् ।
श्रीमत्सुदर्शनगुरवे नमः ।

# अथ अहमर्थानात्मत्वभङ्गः ।

अहमर्थो न चेदात्मा ज्ञानभोगाद्यसंभवः । 5
तच्च स्याच्चेतनस्यैव ज्ञानभोगादियोगतः ॥
जडस्याप्यहमर्थत्वे शरीरस्यैव तद्भवेत् ।
युक्तमेव च तल्लोके स्थूलोऽहमिति निश्चयात् ॥

यदाहुः—अन्तःकरणमेवाहमर्थः नतु जीवः; अहमर्थस्य सुषुप्तिमुक्त्योरननुवृत्तेः, अहमर्थस्य चात्मत्वे तस्य नित्यत्वेन सुषुप्तिमुक्त्योरनुवृत्ति- 10 प्रसङ्गादिति—तत्र ब्रूमः—

अहमर्थ एवात्मा नतु जडरूपान्तःकरणम्; अहं जानामि अहं करोमि अहं दुःखमनुभवामीति ज्ञातृत्वकर्तृत्वभोक्तृत्वाद्यनुभवविरोधात्, जडरूपस्यान्तःकरणस्य ज्ञानाद्याश्रयत्वासंभवात् । न चान्तःकरणावच्छिन्नचैतन्यमेवाहमर्थ इति न तस्य ज्ञानाश्रयत्वासंभव इति वाच्यम्; विशिष्टस्याहमर्थ- 15 त्वकल्पनातः विशेष्यचैतन्यात्मन एवाहमर्थत्वकल्पने लाघवात् । किञ्चावच्छिन्नस्य चैतन्यस्याहमर्थत्वं वदतः कोऽभिप्रायः ? किमन्तःकरणस्यापि ज्ञानाद्याश्रयत्वं संभवतीति किंवा चैतन्यस्यैवाज्ञानाद्याश्रयत्वं तत्र चान्तःकरणं नियामकमिति । नाद्यः; जडरूपान्तःकरणस्य ज्ञानाद्याश्रयत्वविरोधात् । न द्वितीयः; अन्तःकरणस्याहमर्थत्वाङ्गीकरणस्य निर्निबन्धनत्व- 20 प्रसङ्गात् । ज्ञानहेतोरप्यहमर्थत्वाङ्गीकारे शरीरस्याप्यहमर्थत्वप्रसङ्गः; स्थूलोऽहं कृशोऽहमित्यादिप्रतीत्या तस्यैवाहमर्थत्वौचित्यात् । जडत्वेन ज्ञानाश्रयत्वासंभवस्त्वन्तःकरणेऽपि तुल्यः । नच वृत्तिरूपज्ञानाश्रयत्वं जडस्यापि संभवतीति वाच्यम्; वृत्तिमात्रस्य प्रकाशभिन्नतया ज्ञानपदार्थत्वाभावात् वृत्त्यवच्छिन्नचैतन्याश्रयत्वमन्तःकरणस्यासिद्धमेव ॥ 25

नचैवमहमर्थस्यात्मत्वे सुषुप्तिमुक्त्योरनुवृत्तिप्रसङ्ग इति वाच्यम्; इष्टत्वात् । अत एव सुप्तोत्थितस्य सुखमहमस्वाप्समित्यहमर्थपरामर्शः । अत

एव च श्रुतावपि "नाहं खल्वयमेवं सम्प्रत्यात्मानं जानाति अयमहमस्मीति" इति सुषुप्तिकाले विशिष्याज्ञानानुवादः। अन्यथाहमर्थस्याप्यप्रकाशे अयमिति पदवैयर्थ्यम्। अयमित्यनेन मनुष्यत्वादिधर्मानुवादेन मनुष्यत्वादिधर्मविशिष्टोऽहमिति न जानाति किन्त्वहमित्येव जानातीति हि प्रतीयते। 5 एवं मुक्तावप्यहमर्थानुभवः श्रुतिप्रसिद्धः यथा "कश्चिद्ध वा अस्माल्लोकात् प्रेत्यात्मानं वेद अयमहमस्मीति अथ यो ह वैतमग्निं सावित्रीं वेद स एवास्माल्लोकात् प्रेत्यात्मानं वेदायमहमस्मी"ति ॥

ननु सुप्तोत्थितस्य "अहं न किञ्चिदवेदिषं मामप्यहं नावेदिष"मिति परामर्शदर्शनात् सुषुप्तावहमर्थानुभवो नास्तीति वाच्यम्; तथासति संवि- 10 दज्ञानयोरपि सुषुप्तिकाले अनुभवाभावप्रसङ्गात्। तस्मात्किञ्चिदित्यस्य अनुभूयमानाहमर्थाविद्यादिभिन्नपरत्वं मामित्यस्य मनुष्यत्वादिधर्मविशिष्टात्मपरत्वं चेति न विरोधः। एतेन "प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तर"मिति श्रुत्युक्तसुषुप्तावहमर्थाप्रकाश इति निरस्तम्; सुषुप्तावप्यहमर्थानुभवाभिलापकश्रुत्यन्तरानुसारेण तस्या अनुभूयमानव्यतिरिक्तानु- 15 भवनिषेधपरत्वात् ॥

नच मुक्तावप्यहमर्थानुवृत्तावज्ञानदुःखादेरप्यनुवृत्तिप्रसङ्ग इति वाच्यम्; संविदनुवृत्तावपि तुल्यत्वात्, निवृत्ताज्ञानस्यानुवृत्तेरशक्यवचनत्वात्, दुःखादिजनकशरीरादेरभावे दुःखानुवृत्तेरप्यशक्यवचनत्वाच्च ॥

यत्त्वहंशब्दप्रत्यभिज्ञानेनाहङ्कार एवाहमर्थः। नच नात्मानुभवितुमर्हति, 20 तस्यानित्यत्वात्, निर्ममो निरहङ्कार इत्यादिना हेयतया प्रतिपादनात्—

महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च।

इत्यारभ्य—एतत् क्षेत्रमिति क्षेत्रत्वेन भगवता परिगणनाच्चेति, तन्न; बुद्धिशब्दप्रत्यभिज्ञानेन संविदोऽपि बुद्धिशब्दवाच्यमहत्तत्त्वानतिरेकप्रसङ्गात्। अध्यवसायहेतुत्वमात्रेण बुद्धिशब्दाभिधेयत्वं महत्तत्त्वस्य न संविदा- 25 त्मकत्वमिति यदि, तदा अनात्मनि देहादावहमभिमानकरत्वेनाहङ्कारपदाभिधेयत्वं न त्वहमर्थत्वमिति तुल्यम् ॥

यदप्याहुः—अहमर्थस्यात्मत्वे प्रतिशरीरं विलक्षणदुःखानुभवेनात्मभेदोऽङ्गीकर्तव्य इति गौरवम् । अहमर्थातिरिक्तस्यात्मत्वे तु नात्मभेदोऽङ्गीकर्तव्य इति लाघवम् । नचैवमहमर्थातिरिक्तात्मकल्पने गौरवम्; आत्मनः अन्तःकरणानां चोभयवादिसिद्धत्वेनातिरिक्तकल्पनाभावात् । अहंबुद्धिविषयस्यात्मत्वे हि विवादः । नचैवमन्तःकरणस्याहमर्थत्वे अहं जानामीति 5 ज्ञानाश्रयत्वानुपपत्तिः; ज्ञानादीनामात्मधर्मत्वे प्रमाणाभावात् । रूपादीनामिव ज्ञानादीनामप्यात्मकर्तृकज्ञानविषयत्वेनात्मधर्मत्वासंभवाच्च ॥

किञ्च मामहं जानामीत्यात्मनो ज्ञानविषयत्वं प्रतीयते, तच्च ज्ञानं स्वसमवेतम्, त्वन्मते आत्मभिन्नस्य ज्ञानाश्रयत्वासंभवात् । तच्च ज्ञानं नित्यमनित्यं वा? नाद्यः; आत्मातिरिक्ते नित्यज्ञाने प्रमाणाभावात् । न 10 द्वितीयः; कारणाभावेन तत्र ज्ञानोत्पत्त्यसंभवात् । नचात्ममनस्संयोग एव कारणमिति वाच्यम्; निरवयवात्मन्यव्याप्यवृत्तिसंयोगासंभवात् । किञ्च स्वमपीतो भवतीति सुषुप्तिकाले अहमर्थस्य लयः श्रूयते; स चाहमर्थस्यात्मत्वे न संभवति; आत्मनो नित्यत्वेन लयासंभवात् । नच ज्ञानस्यैव तत्र लयप्रतिपादनमिति वाच्यम्; यत्रैतत्पुरुषः स्वपिति नामेत्युपक्रान्तपुरु- 15 षस्यैव स्वमपीतो भवतीति लयप्रतिपादनात्, सचाहमर्थोऽन्तःकरणमेव । सुषुप्तावहमर्थस्य लयानङ्गीकारे तदा अहमर्थानुभवप्रसङ्गः । तत्र चेष्टापत्तौ सुप्तोत्थितस्याहमित्यभिमन्यमान एवास्वाप्समिति परामर्शप्रसङ्गः ॥

नन्वेवं सति पूर्वेद्युरनुभूतानां पदार्थानां परेद्युः सुप्तोत्थितस्यास्मरणप्रसङ्गः, अन्यानुभूतेऽन्यस्य स्मरणायोगादिति चेन्न; स्थूलाकारान्तः- 20 करणस्य लयेऽपि सूक्ष्माकारान्तःकरणस्य सुषुप्तावपि सत्त्वेन तदप्रसङ्गात्, अत एव न कृतहानाकृताभ्यागमप्रसङ्गोऽपि, नच सूक्ष्मरूपान्तःकरणसद्भावे प्रमाणाभावः; "असद्वा इदमग्र आसीदि"ति श्रुतेरेव तत्र मानत्वात्, अनभिव्यक्तसूक्ष्मरूपावस्थाया एवासच्छब्दार्थत्वात्, तुच्छत्वे त्वासीदिति सद्भावोक्तिविरोधात्, तस्मादहमर्थो नात्मा, किन्त्वन्तःकरणमेवेति । 25 तत्रापि ब्रूमः—

यदुक्तमात्मभेदकल्पने गौरवमिति—तन्न; प्रामाणिकतया तस्यादोषत्वात् । नचात्मभेदे प्रमाणाभावः; सुखदुःखादिविचित्रकार्यस्यैव मानत्वात् । अन्यथा त्वन्मते औपाधिकचैतन्यभेदस्याप्युच्छेदप्रसङ्गात् । किञ्च त्वन्मते अन्तःकरणचैतन्ययोरुभयोरप्यप्रामाणिकाहमर्थत्वकल्पनमप्रा-5 माणिकचैतन्याभेदकल्पनं भेदस्यान्तःकरणाधीनत्वकल्पनं भेदप्रतीतेर्भ्रमत्वकल्पनं चेति विपरीतमेव गौरवम् । किञ्चान्तःकरणस्याहमर्थत्वेन तस्य चिरकालावस्थायितया चक्षुःसन्निकृष्टे व्यासङ्गानुपपत्तिः । तथाचान्तःकरणातिरिक्तं मनः करणि प्रतिशरीरमङ्गीकार्यम् । एतदुभयातिरिक्तचैतन्यमप्यङ्गीकार्यमिति महागौरवम् । तथाचान्तःकरणस्यात्मस्थानाभिषेक एव पर्यव-10 सन्न इति तदतिरिक्तचैतन्यस्याहमर्थत्वकल्पनं अन्तःकरणस्य सावयवत्वकल्पनं तस्य वृत्तिकल्पनं चेति निर्निबन्धनं निष्प्रामाणिकं च ॥

यदुक्तमहमर्थस्यात्मत्वे मामहं जानामीति ज्ञानविषयत्वानुपपत्तिरिति तदज्ञानात्, स्वप्रकाशत्वेन वा ज्ञानान्तरेण वा तथा प्रतीत्युपपत्तेः । अभेदेऽपि विषयविषयिभावस्य समर्थनात् । नच ज्ञानान्तरविषयत्वे सामग्र्य-15 नुपपत्तिः; आत्मनो निरवयवत्वेन मनस्संयोगासंभवेऽपि स्वरूपसंबन्धाविरोधात्, निरवयवे व्याप्यवृत्तिसंयोगस्य संभवाच्च । अथवा नित्यज्ञानमेवास्तु, अहमर्थस्य सर्वदा भासमानत्वात् । नचात्मातिरिक्तनित्यज्ञाने प्रमाणाभावः; मामहं जानामीत्यस्यैव प्रमाणत्वात् । अन्यथा त्वन्मतेऽपि किमहमर्थविषयकज्ञानं चैतन्यरूपं वृत्तिरूपं वा? आद्ये ज्ञानाश्रयत्वानुभवविरोधः । अन्त्ये 20 अहमाकारवृत्तेः सन्निकर्षाभावेन उत्पत्त्यसंभव इति पर्यनुयोगापत्तेः ॥

यच्चोक्तमहमर्थस्यात्मत्वे तस्य नित्यत्वेन सुषुप्तौ लयासंभवः, श्रूयते हि स्वमपीतो भवतीति सुषुप्तौ लय इति, तदप्ययुक्तम्; आत्मनो लयो नाम ज्ञानसङ्कोच एव, तथाच लयश्रुतेर्ज्ञानसङ्कोचपरत्वेनाप्युपपत्तेरन्तःकरणस्याहमर्थत्वकल्पने मानाभावः । तस्याहमर्थत्वेऽपि न तत्स्वरूपस्य 25 विनाशः, सूक्ष्मरूपस्य तस्य सुषुप्तावप्यहमर्थप्रकाशप्रसङ्गः, इष्टत्वात् । न चैवं सुप्तोत्थितस्याहमित्यभिमन्यमान एवास्वाप्समिति परामर्शप्रसङ्गः;

(स्वरूपस्यैवाहमर्थाभिमतिरूपतया तादृशपरामर्शासंभवात् । अहमस्वाप्समिति स्वरूपपरामर्शो विद्यत एव । नचाहमित्यभिमतिरासमिति परामर्शप्रसङ्गः ।)[1] ज्ञानत्वस्याहन्त्वप्रकारकत्वस्य च स्वरूपाप्रकाश्यत्वात् । अन्यथा त्वन्मतेऽप्य- ज्ञानमनुभवन्नेवाहमस्वाप्समिति परामर्शप्रसङ्गो दुर्वारः । किञ्चाहमनुभव- स्मरणयोर्वैयधिकरण्यप्रसङ्गः कृतहानाकृताभ्यागमप्रसङ्गश्च ॥ 5

यदुक्तं सुषुप्तावप्यन्तःकरणस्य सूक्ष्मरूपेणावस्थानमिति तन्न; तदा प्रका- शमानत्वे सुप्तोत्थितस्य तत्परामर्शप्रसङ्गः । अप्रकाशमानत्वे तदध्यासस्याभा- वेन तदवस्थानासंभवः । यदुक्तम् "असद्वा इदमग्र आसीत्" इति श्रुतिः सूक्ष्मरूपेण (अवस्थाने) प्रमाणमिति, तन्न; तस्याः कार्यावस्थाप्रहाणपरत्वो- पपत्तेः । अनभिव्यक्तरूपमसच्छब्दार्थ इति ह्युक्तम् । तच्चोक्तार्थ एवोपपद्यते, 10 कारणस्यावस्थाविशिष्टरूपेणाभिव्यक्त्यभावात् । अन्तःकरणरूपमनसः सुषुप्तौ लयोऽप्यनुपपन्नः; "यथा शकुनिः सूत्रेण प्रतिबद्धो दिशं दिशं पतित्वा अन्यत्र आयतनमलब्ध्वा बन्धनमेव उपाश्रयते एवमेव खलु सोम्य तन्मनो दिशं दिशः पतित्वा अन्यत्रायतनमलब्ध्वा प्राणमेवोपाश्रयते प्राणबन्धनं हि सोम्य तन्मन" इति श्रुत्या मनसो व्यापारोपरममात्रश्रवणात् स्वरूपाव- 15 स्थानप्रतिपादनाच्च ॥

किञ्चाहमर्थस्यात्मत्वाभावे ईश्वरस्याहंबुद्ध्यभावप्रसङ्गः । श्रूयते हीश्वरस्याहं- बुद्धिः "हन्ताहमिमास्तिस्रो देवता" इति । स्मर्यते च—अहं कृत्स्नस्य जगत इत्यादि । किञ्च

आत्मानं चेद्विजानीयादहमस्मीति पूरुषः । 20
किमिच्छन् कस्य कामाय शरीरमनु सञ्चरेत् ॥

इति निष्कृष्टात्मविषयकं ज्ञानमहन्त्वप्रकारकतयाऽभिलपन्ती श्रुतिरहम- र्थस्यानात्मत्वे विरुध्यते ॥

आत्मन्येष न दोषाय शब्दोऽहमिति यो द्विजः ।
अनात्मन्यात्मविज्ञानं शब्दो वा भ्रान्तिलक्षणः ॥ 25

इति स्मृतिश्च विरुध्यते । तत्र न दोषायेत्यत्र दोषत्वं भ्रान्ततापादकत्वम्,

१ कुण्डलितं कोशान्तरे नास्ति ।

उत्तरत्र भ्रान्तिलक्षण इत्युक्तत्वात्। शब्दोऽहमित्यत्र बुद्धिरप्यभिप्रेता, उत्तरत्र आत्मविज्ञानमित्युक्तत्वात्। किञ्च विरजा विपाप्मा भूयासं ब्रह्मलोकमभिसंभवामीति अहमर्थसंबन्धितया मुक्तेः श्रुत्या प्रतिपादनादहमर्थ एवात्मा। अत एव द्वितीयेंऽशे त्रयोदशे—

5 शब्दोऽहमिति दोषाय नात्मन्येष तथैव तत्।
अनात्मन्यात्मविज्ञानं शब्दो वा भ्रान्तिलक्षणः॥

इति आत्मैवाहंशब्दमुख्यार्थतया स्पष्टं प्रतिपादितः। किञ्चाहमर्थस्यानात्मत्वे मुक्तिदशायां तस्य विनाशावश्यंभावान्मोक्षार्थं प्रवृत्त्यनुपपत्तिः। त्वन्मते ह्यहमर्थ एव प्रवर्तको भोक्ता च। नहि स्वविनाशार्थं स्वयं 10 प्रवर्तते। एवं स्वर्गादिपुरुषार्थाय प्रवृत्त्यनुपपत्तिः। नचान्तःकरणावच्छिन्नचैतन्यस्यैव प्रवर्तकत्वं भोक्तृत्वं चेति नोक्तदोषप्रसङ्ग इति वाच्यम्; तथा सति चैतन्यमात्रस्यैवाहमर्थत्वसंभवे किमन्तःकरणस्याहमर्थत्वकल्पनया। तस्मादात्मैवाहमर्थो नान्तःकरणमिति सिद्धम्॥

**इति वेदान्तविजयमङ्गलदीपिकायां अहमर्थानात्मत्वभङ्गः॥**

15

श्रीः

## अथ अखण्डार्थत्वभङ्गः।

**सत्यज्ञानादिवाक्यस्य नाखण्डार्थत्वसंभवः।**
**20 विशिष्टार्थेषु तात्पर्यं सर्ववाक्यस्य निश्चितम्॥**
**व्युत्पत्त्यैव हि सर्वेषां तथा वाऽनुभवादपि।**
**नानुमानेन तत्सिद्धिर्दृष्टान्तादेरभावतः॥**

सत्यज्ञानादिवाक्यस्याखण्डार्थत्वं तावदनुपपन्नम्; लोके वेदे वा सर्वस्यापि वाक्यस्य समभिव्याहृतपदार्थसंसर्गपरतया व्युत्पत्तेः। स्वरूपमात्रपरत्वे 25 च तद्भङ्गप्रसङ्गः। अन्यथा ज्योतिष्टोमादिवाक्यानामपि स्वरूपमात्रपरत्वेन वैदिककर्ममात्रविलयापत्तेः। नच समानाधिकरणवाक्यानामेव स्वरूपपरत्वमिति वाच्यम्; विनिगमकाभावात् वैपरीत्यस्यापि सुवचत्वाच्च। समानाधिकरणव्यधिकरणवाक्ययोरुभयोरपि संसर्गपरत्वाविशेषात्। इयांस्तु विशेषः

समानाधिकरणवाक्ये पदार्थानामभेदः संसर्गः, अन्यत्र संबन्धमात्रमिति। नचाभेदस्य स्वरूपानतिरेकेण तत्परवाक्यस्याखण्डार्थत्वमविकलमिति वाच्यम्; अनेकविशेषणविशिष्टविशेष्याभेदस्यैव समानाधिकरणवाक्यार्थत्वेनाखण्डत्वासिद्धेः। एकेनैव पदेन स्वरूपावगमसंभवे पदान्तरवैयर्थ्यं च। नचासत्यादिव्यावृत्तिप्रतिपादनार्थं सत्यादिपदमिति वाच्यम्; अनन्तपदेन 5 इतराभेदमात्रस्य निषेधेनासत्याद्यभेदस्यापि निषिद्धत्वात्। किञ्च सत्यज्ञानादिवाक्यमयोग्यं स्यात्, पदार्थसंसर्गाबाधरूपयोग्यतायास्तत्राभावात्। नच पदार्थाबाधो योग्यतेति वाच्यम्; यत्र क्वाप्यबाधस्य वह्निना सिञ्चेदित्यादावपि सेचनसंसर्गस्य जलादावबाधितत्वेन योग्यत्वप्रसङ्गात् (सर्वत्राबाधितत्वं तु चन्द्रेऽपि नास्ति; तस्य पृथिव्यां बाधितत्वात्। तथाच प्रकृष्ट- 10 प्रकाशश्चन्द्र इति वाक्यस्यायोग्यत्वप्रसङ्गः। किञ्च एकस्वरूपमात्रस्य वाक्यार्थत्वे उद्देश्यविधेयभावानुपपत्तिः) उद्देश्यं हि ज्ञातमज्ञातं विधेयम्। नच ज्ञानाज्ञानयोरेकत्र संभवः॥

यत्तु यच्छिद्रं तत्खं यत्सत् ज्ञानमानन्दं तद्ब्रह्मेत्यादाविव भेदभ्रमादेव उद्देश्यविधेयभाव इति, तन्न; तादृशभ्रमो हि न स्वरूपभेदविषयकः; खं 15 खे न भिद्यत इति स्वरूपाभेदस्य निश्चितत्वात्। किन्तु छिद्रशब्दवाच्यत्वावच्छिन्नभेदविषय एव स वाच्यः। तथा च सत्यादिवाक्येऽपि ज्ञानं स्वरूपाभिन्नमिति निश्चयेऽपि आनन्दभिन्नमेवेत्यादिभ्रमः ज्ञानानन्दत्वादिविशिष्टभेदविषय इति आनन्दत्वादिविशिष्टाभेद एव वाक्यार्थः स्यादिति कथमखण्डार्थत्वम्। एवं च ज्ञानादिवाक्यार्थः अखण्डार्थः लक्षण- 20 वाक्यत्वात् प्रकृष्टप्रकाशश्चन्द्र इति वाक्यवदित्यनुमानमुक्तरीत्या अखण्डार्थत्वबाधेन बाधितविषयम्। किञ्च किमिदं लक्षणवाक्यत्वम्? असाधारणधर्मविशिष्टप्रतिपादकत्वं वा, स्वरूपमात्रप्रतिपादकत्वं वा, असाधारणधर्ममात्रप्रतिपादकत्वं वा, अन्यद्वा? नाद्यः; साध्यविरोधात्। असाधारणधर्मवैशिष्ट्यज्ञानजनकस्य तदगोचरज्ञानजनकत्वासंभवात्। न द्वितीयः; 25

१ 'सर्वत्र'—इत्यादि-( ) कुण्डलितपर्यन्तं कोशान्तरे नास्ति—

साध्याविशेषात् । स्वरूपमात्रज्ञानजनकत्वस्य संसर्गागोचरप्रमाजनकत्वसि-
द्ध्यधीनत्वात् । न तृतीयः; असाधारणधर्ममात्रप्रतिपादने ब्रह्मस्वरूपपरत्व-
व्याघातात् । नान्त्यः; अनिर्वचनात् । एतेन स्वरूपमात्रप्रतीतितयोच्चरितत्वं
लक्षणवाक्यत्वमिति प्रत्युक्तम्; साध्यवत्तस्यापि सन्दिग्धत्वात् । नच स्वरू-
5 पप्रश्नानुरोधेन तन्निश्चयः; ब्रह्मविदाप्नोति परमिति पूर्ववाक्यप्रतिपन्नब्रह्मस्व-
रूपस्य प्रश्नविषयत्वासंभवात् । स्वरूपातिरिक्तधर्मप्रश्ने हेत्वसिद्धिः दृष्टान्ता-
सिद्धिश्च, प्रकृष्टप्रकाशश्चन्द्र इति वाक्यस्य चन्द्रपदवाच्यसंसर्गावगाहिज्ञान-
जनकत्वात् । न चास्मिन् ज्योतिर्मण्डले कश्चन्द्र इति स्वरूपप्रश्नानुरोधेन
तस्य स्वरूपपरत्वमेवेति न दृष्टान्तासिद्धिरिति वाच्यम्; अस्मिन् ज्योति-
10 र्मण्डल इति ज्योतिर्मण्डलान्तर्भूतचन्द्रस्वरूपस्यापि प्रत्यक्षदृष्टतया स्वरूप-
प्रश्नानुपपत्तेः । ननु प्रत्यक्षेणोत्पन्नमपि चन्द्रस्वरूपज्ञानमनवधारणात्मकमिति
तस्याज्ञानसंशयनिवर्तकत्वाभावेन स्वरूपप्रश्नोपपत्तिरिति चेन्न; वर्तुलत्वसक-
लङ्कत्वप्रकृष्टप्रकाशत्वादिवैशिष्ट्येन चन्द्रस्वरूपस्यानवधारणात्मकत्वासिद्धेः ।
अन्यथा प्रकृष्टप्रकाशश्चन्द्र इति वाक्येनापि ज्ञानमनवधारणात्मकमेव स्यात्,
15 प्रत्यक्षानधिकविषयत्वात् । ततश्चाज्ञानसंशयानिवृत्तिप्रसङ्गेन कश्चन्द्र इति
पुनः प्रश्नोत्तरयोः प्रसङ्गः । नचोपदेशसहकृतप्रत्यक्षमेवावधारणात्मकज्ञान-
जनकमिति वाच्यम्; चन्द्रश्चन्द्रपदवाच्य इत्युपदेशे सति कश्चन्द्र इति
प्रश्नानुपपत्तिप्रसङ्गात् । तस्माच्चन्द्रस्वरूपस्यावधृतत्वात् कश्चन्द्र इति प्रश्नस्य
चन्द्रपदवाच्यताविषयत्वमेव युक्तम् । स्वरूपमात्रपरत्वे तु प्रकृष्टप्रकाशश्चन्द्र
20 इति स्वरूपस्य ज्ञाततया कः सोम इति पुनः प्रश्नानुपपत्तेः । तस्य वाच्य-
त्वपरत्वे तु पूर्वस्यापि तत्परत्वं तुल्यम् । किञ्च धूमपदव्युत्पन्नस्य धूमेन
वह्निमनुमिमानस्य को धूम इति प्रश्नादयो दृश्यते । नच धूमस्वरूपे अज्ञानं
वक्तुं शक्यम्; लिङ्गव्याप्तिनिश्चयाभावे अनुमित्युच्छेदप्रसङ्गात् ॥

किञ्च कटकादीष्टसाधनतावच्छेदकरजतत्वादिविशिष्टतया प्रत्यक्षेण
25 रजतावधारणे सत्यव्युत्पन्नरजतपदस्य पुंसः किं रजतमिति प्रश्नादयो
दृश्यते । नच तत्र रजताज्ञानं वक्तुं शक्यम्; कटकार्थिनस्तस्य रजते प्रवृ-
त्त्यभावप्रसङ्गात् । अपिच घटशब्दवाच्यः कश्चिदस्तीति निश्चयवतः अयं

घटो न वेति संशयः को घट इति प्रश्नश्च दृश्यते। तस्यामेव दशायां आनयेति प्रयोजकवृद्धेनोक्ते प्रयोज्यवृद्धेन तस्मिन्नानीते अयं घट इति निश्चयात् संशयादयो निवर्तन्ते । नच तेषां स्वरूपविषयत्वसंभवः, स्वरूपानवधारणे शक्तिग्रहानुपपत्तेः । ननु चन्द्रविषयप्रश्नोत्तरवाक्ययोर्न चन्द्रपदवाच्यत्वं विषयः, चन्द्रश्चन्द्रपदवाच्य इत्याप्तवाक्येन चन्द्रत्वविशिष्टे चन्द्रपदवाच्य- 5 त्वस्यापि निश्चयेन तयोस्तद्विषयत्वायोगादिति चेत्—उच्यते; आप्तवाक्येन तादृशनिश्चयः किं चन्द्रपदव्युत्पत्तिमतः पुंसः उत तद्विरहिणो वा ? नाद्यः; तस्य तादृशप्रश्नस्यैवासंभवात् । तस्य न तादृशप्रश्नोऽस्तीत्येतदनुभवसिद्धम् । नहि घटत्वविशिष्टे घटपदव्युत्पत्तिमतः को घट इति प्रश्नः संभवति । न द्वितीयः; तस्य चन्द्रपदेन चन्द्रत्वविशिष्टबोधासंभवेनासाधारणधर्मविशिष्टे 10 चन्द्रपदवाच्यत्वावधारणासंभवेन तत्र चन्द्रपदव्यवहारासंभवात्, असाधारणधर्मविशिष्टवाच्यत्वनिश्चयस्यैव व्यवहारहेतुत्वात् । अन्यथा गवयो गवयपदवाच्य इति निश्चयेन कीदृशो गवयः गोसदृशो गवय इति प्रश्नोत्तरयोरभावप्रसङ्गात् तयोरप्यखण्डार्थत्वप्रसङ्गाद्वा । न चेष्टापत्तिः; लोके वाच्यत्वविषयकप्रश्नोत्तरमात्रोच्छेदप्रसङ्गात् । नच प्रत्यक्षासन्निकृष्टविषयोऽयं 15 प्रश्न इति वाच्यम्; चन्द्रस्वरूपं किमिति जिज्ञासाया चन्द्रस्वरूपमित्युत्तरेणानिवृत्तत्वात् । प्रकृष्टप्रकाशश्चन्द्र इत्युत्तरेणानिवृत्तिप्रसङ्गात् । उभयोः स्वरूपपरत्वाविशेषात् । स्वरूपातिरिक्तप्रतिपादने चाखण्डार्थत्वभङ्गः । नच पदान्तरसमभिव्याहृतपदजन्यस्वरूपज्ञानमेव तन्निवर्तकमिति वाच्यम्; पदान्तरसमभिव्याहारस्य ज्ञाने विषयविशेषानाधायकतयाऽप्रयोजकत्वात् । नच 20 प्रकृष्टप्रकाशपदेनापाततः प्रतीतिविषयप्रकृष्टप्रकाशसंबन्धिव्यक्तिविशेष एव लक्ष्यत इति व्यक्तिविशेषोपस्थित्या संशयनिवृत्तिरुपपन्नेति वाच्यम्; व्यक्तिविशेषोपस्थितौ प्रकृष्टप्रकाशसंबन्धित्वस्य विशेषणत्वेऽखण्डार्थत्वहानिः । उपलक्षणत्वेन संशयानिवृत्तिरनिवार्या । नहि प्रकृष्टप्रकाशापातप्रतीतिरेव 25 संशयनिवर्तिका । तथा च सति प्रश्नवाक्यानुगुण्येनोत्तरस्य स्वरूपमात्रपरत्वकल्पनाप्रयासवैयर्थ्यात्, संशयनिवर्तकज्ञानविषयपरत्वकल्पनस्यैव

युक्तत्वाच्च । यः कश्चिच्चन्द्र इति वाक्येनापि संशयनिवृत्तिप्रसङ्गः, स्वरूप-
मात्रपरत्वाविशेषात् ॥

नच यद्ययं चन्द्रो न स्यात्तदा प्रकृष्टप्रकाशश्चन्द्र इत्याप्तप्रयोगवि-
षयो न स्यादिति तर्कावतारार्थं पदान्तरसमभिव्याहार इति वाच्यम्;
5 तादृशतर्कस्य प्रकृष्टप्रकाशत्वविशिष्टपरत्वकल्पनानुकूलत्वात् । उत्तरवाक्येन
प्रकृष्टप्रकाशत्वविशिष्टबोधे सत्येव तन्मूलतर्कस्य प्रवृत्तेः । अन्यथा तादृश-
प्रयोगवैयर्थ्यादेव । किञ्च करणवैशिष्ट्यसंपादको ह्ययं तर्कः किं स्वत एव
संशयं निवर्तयति, उत तत्सहकृतशब्दजन्याखण्डार्थत्वज्ञानद्वारेण? नाद्यः;
अखण्डार्थत्वकल्पनवैयर्थ्यात्, तर्कादेव प्रश्नशान्तेः । नान्त्यः; तस्य व्यक्ति-
10 विशेषोपस्थितित्वाभावेन संशयानिवर्तकत्वात् । नचोक्ततर्कानवतारेऽपि प्रकृ-
ष्टप्रकाशादिवाक्यजन्यं ज्ञानं प्रकृष्टप्रकाशव्यक्तौ चन्द्रत्वविशिष्टविषयम्, यः
कश्चिच्चन्द्र इति वाक्यजन्यज्ञानं तु न तथेति वैषम्यमिति वाच्यम्; तथा-
सति प्रकृष्टप्रकाशादिवाक्यस्य विशिष्टपरत्वप्रसङ्गात् । तादृशज्ञानस्य विशि-
ष्टार्थविषयकत्वात् ॥

15 ननु प्रकृष्टप्रकाशश्चन्द्र इति वाक्यस्य न चन्द्रपदवाच्यताविषयत्वसं-
भवः, प्रवृत्तिनिमित्तज्ञानवाच्यत्वस्य दुर्ग्रहत्वादिति चेन्न; प्रकृष्टप्रकाश-
विशिष्टव्यक्तौ चन्द्रपदवाच्यत्वग्रहणानन्तरं लाघवसहकृतप्रमाणेन चन्द्रत्वे
चन्द्रपदप्रवृत्तिनिमित्तत्वग्रहेण विरोधाभावात् । नहि प्रवृत्तिनिमित्तज्ञानान-
न्तरमेव वाच्यत्वग्रह इति नियमः; गोसदृशो गवय इत्यादौ तदभावात्,
20 किन्तु वाच्यत्वनिर्वाहकतया प्रवृत्तिनिमित्तं कल्पनीयमिति ॥

यद्वा प्रकृष्टप्रकाशपदेन प्रकृष्टप्रकाशव्यक्तिविशेषनिष्ठा चन्द्रत्वजाति-
र्लक्ष्यते । तत्पुरस्कारेण चन्द्रपदवाच्यत्वग्रह इति न काचिदनुपपत्तिः ॥

वस्तुतस्तु गोसदृशो गवय इत्यत्र सादृश्यविशिष्टव्यक्तिप्रत्यक्षानन्तरं
प्रत्यक्षदृष्टं गवयत्वं निमित्तीकृत्य यथा गवयपदवाच्यत्वग्रहस्तथा प्रकृतेऽपि
25 वाक्यश्रवणानन्तरं प्रकृष्टप्रकाशव्यक्तिगतं प्रत्यक्षदृष्टं चन्द्रत्वं निमित्तीकृत्य
चन्द्रपदवाच्यत्वग्रह इति ॥

ननु चन्द्रपदेन चन्द्रपदवाच्यत्वं किं मुख्यवृत्त्या बोध्यते लक्षणया वा ? नाद्यः; चन्द्रपदस्य तदवाचकत्वात्। न द्वितीयः; मुख्यार्थचन्द्रत्वसंबन्धित्वेन ज्ञानादुपदेशवैयर्थ्यम्, तदज्ञाने च लक्षणासंभव इति चेन्न; सामान्यतश्चन्द्रपदप्रवृत्तिनिमित्तसमानाधिकरणत्वेन ज्ञानेऽपि लक्षणासंभवात्। किञ्च भवतु प्रकृष्टप्रकाशश्चन्द्र इत्यादौ कश्चन्द्र इति स्वरूपप्रश्नानुरोधेनाखण्डार्थत्वं, सत्यज्ञानादिवाक्ये तादृशप्रश्नाभावेन कथमखण्डार्थत्वम्। नचैतदनुरोधेनात्रापि प्रश्नकल्पनेति वाच्यम्; तत्त्वप्रतिपादनपरवाक्यस्य ब्रह्मानुवादेन सत्यत्वादिगुणविशिष्टप्रतिपादनपरतया प्रश्नोत्तरत्वे प्रमाणाभावात्। सत्यं ज्ञानमनन्तं ब्रह्म, यो वेद निहितं गुहायां परमे व्योमन्, सोऽश्नुते सर्वान् कामान् सह, ब्रह्मणा विपश्चितेति, सत्यज्ञानानन्तब्रह्मज्ञानानुवादेन मोक्षहेतुत्वप्रतिपादनपरतया लक्षणवाक्यत्वासंभवाच्च ॥

किञ्च सत्यज्ञानादिवाक्यस्याखण्डार्थत्वे वाक्यत्वव्याघातः। समभिव्याहृतपदोपस्थापितसंसर्गगोचरज्ञानजनकत्वं हि वाक्यत्वम्। तदगोचरप्रमाजनकत्वं ह्यखण्डार्थत्वम्। एवं पदवाक्यविभागानुपपत्तिश्च। संसर्गगोचरज्ञानजनकत्वं वाक्यत्वं तदगोचरज्ञानजनकं पदमिति हि पदवाक्यविभागः। नहि पदसमुदाय एव वाक्यम्; घटः कुम्भः कलश इति पदसमुदायस्य घटः पटः कुड्यमिति पदसमुदायस्य च वाक्यत्वप्रसङ्गात्। नचेदं पदमेव न वाक्यमिति वाच्यम्; पक्षहेत्वोर्वाक्यपदविरोधात्। पदपक्षत्वे तु प्रत्येकं पदस्य संसर्गानवगाहिज्ञानजनकत्वेन सिद्धसाधनम्। नचापर्यायत्वे सति एकप्रातिपदिकमात्रार्थत्वम् सत्यादिपदानां स्वरूपमात्रपरत्वाविशेषेण पर्यायतया बाधात्। नच प्रातिपदिकमात्रार्थपरत्वमखण्डार्थत्वमिति वाच्यम्; सत्यज्ञानादिवाक्ये द्वितीयया कर्मत्ववैशिष्ट्यप्रतिपादनेन प्रातिपदिकमात्रार्थपरत्वासिद्ध्या प्रातिपदिकादर्थान्तरं मात्रपदव्यवच्छेद्यमिति वक्तव्यं, तथाच पारिभाषिकत्वापत्तेर्वैशिष्ट्यान्तराप्रतिपादकत्वमखण्डार्थत्वमिति किमिति न ब्रूयाः ? पारिभाषिकत्वस्योभयत्राविशेषात्। अस्तु वा तदखण्डार्थत्वं तथापि न त्वदभिमतनिर्विशेषस्वरूपसिद्धिः; कर्मत्वविशिष्टस्यैव प्रतिपादनात्। तदप्रतिपादने च ब्रह्म यो वेदेति तत्कर्मकवेदनानन्वयप्रसङ्गः। तद्री-

त्याध्याहारे स एव दोषः । तथापि तत्पदेन कर्मत्वविशिष्टबोधने न निर्विशेषस्वरूपसिद्धिः । अत एव सत्यज्ञानादिवाक्यमखण्डार्थं प्रातिपदिकार्थमात्रप्रश्नोत्तरत्वात् इत्यनुमानं निरस्तम् ॥

यदप्युक्तं तत्त्वमस्यादिवाक्यमखण्डार्थं परस्परनिरूपितकार्यकारणभावा-
5 नधिकरणद्रव्यगोचरसमानाधिकरणवाक्यत्वात् सोयं देवदत्त इति वाक्यवत् । नीलमुत्पलमिति वाक्ये व्यभिचारवारणाय द्रव्यगोचरेति । मृद्धट इति वाक्ये व्यभिचारवारणाय कार्यकारणभावानधिकरणेति । असंभवनिरासाय परस्परनिरूपितेति । नच दण्डी पुरुष इति वाक्ये व्यभिचारः; तत्र दण्डपुरुषयोः सामानाधिकरण्याभावादिनिप्रत्ययेन दण्डसंबन्धविशिष्टस्यैव
10 पुरुषसामानाधिकरण्यप्रतीतेः । दण्डसंबन्धश्च द्रव्याद्रव्यसाधारण इति न द्रव्यसमानाधिकरणत्वम् । नचैवं दृष्टान्ते साधनवैकल्यं, तत्तायां द्रव्याद्रव्यसाधारणत्वादिति वाच्यम्; तत्ताया नानात्वेन देवदत्ततत्ताया द्रव्यमात्रनिष्ठत्वेन द्रव्यगोचरसमानाधिकरणवाक्यत्वात् ॥

नचैवं द्रव्यं घट इति वाक्ये व्यभिचारः, तत्र द्रव्यघटपदार्थ-
15 योरभेदेन कार्यकारणभावानधिकरणद्रव्यगोचरसमानाधिकरणवाक्यत्वादिति वाच्यम्; तत्र वाक्यार्थप्रतीतिविषययोरभेदेऽपि पदार्थयोर्भेदेन कार्यकारणभावानधिकरणतया तदधिकरणगोचरसमानाधिकरणवाक्यत्वाभावात् यद्वा— परस्परनिरूपिताधाराधेयभावरहितपदार्थकसमानाधिकरणवाक्यत्वात्, सोऽयं देवदत्त इति वाक्यवत् ।

20 नच दृष्टान्ते साध्यवैकल्यम्; सोऽयमिति पदद्वयलक्षितस्वरूपैक्यस्य तेन वाक्येन प्रतिपादनादिति—तदप्ययुक्तम्; तथाहि—तत्र प्रथमहेतुस्तावदनुपपन्नः; अयं घट इति वाक्ये व्यभिचारात् । न चेदन्ताया द्रव्याद्रव्यसाधारणत्वेन द्रव्यगोचरत्वाभावान्न व्यभिचार इति वाच्यम्; तत्ताया इवेदन्ताया अपि नानात्वेन घटेदन्ताया द्रव्यमा-
25 त्रनिष्ठत्वात् । द्वितीयहेतुरप्ययुक्तः—कुम्भखं परिच्छिन्नं जलसूर्यः करसहस्रशाली इति वाक्ये व्यभिचारात् । त्वया यावद्धर्मोपाधिकभेदाङ्गीकारात् । समानाधिकरणवाक्ये व्यभिचाराच्च । जीवेश्वरभेदस्य

स्वाभाविकस्य समर्थितत्वेन तत्त्वमस्यादिवाक्ये हेतोः स्वरूपासिद्धेश्च । तत्र तृतीयहेतुरप्ययुक्तः; भ्रान्तोदीरितवाक्ये "दण्डी पुरुष" इत्यादौ व्यभिचारात् । किञ्च यद्येकपदविशेषणस्य पदान्तरार्थत्वाधेयत्वाभावो विवक्ष्यते, तदा दृष्टान्ते साध्यसाधनवैकल्यम् । तत्ताया इदंपदार्थाधेयत्वेन तदभावाभावात् । अत्र यदुक्तम्—किं "सोऽयं देवदत्त" इत्येतत् तत्तेदन्ते एकवृत्ती इति 5 बोधयति, किं सोऽयमित्येव प्रतीतिः एकवृत्तित्वे तात्पर्यमिति । नाद्यः; तदिदंशब्दयोस्तत्तेदन्ताविशिष्टबोधकत्वेन एकवृत्तित्वबोधकपदाभावात् । नच देवदत्तवृत्तित्वमेव बोधयतीति वाच्यम्, तथा सति तस्य देवदत्तभेदेऽप्युपपत्तौ तेन भेदभ्रमानुवृत्तिप्रसङ्गात् वृत्तिपदाभावाच्च । न द्वितीयः; एकवृत्तित्वतात्पर्यकल्पनातः अभेदरूपत एकत्व एव तात्पर्यकल्पनस्य लघु- 10 त्वात् । तस्मादभेद एव वाक्यार्थ इति न साध्यसाधनवैकल्यम् ॥

किञ्च समानाधिकरणवाक्यानामभेद एव तात्पर्यम् । तत्र च विशिष्टाभेदे विशेषणानामप्यभेदो वक्तव्यः, वाच्यैकदेशे अन्वयाव्युत्पत्तेः । तथा च प्रकृते तत्तेदंतयोरभेदासंभवेन देवदत्ताभेदावच्छेदकतया अन्वयो वक्तव्यः, स च न संभवति; तयोरवच्छेदकत्वासंभवात् । अवच्छेदकत्वं 15 ह्यवच्छेद्यान्यूनकालीनत्वम्; नच तयोस्तदस्ति; अवच्छेद्यदेवदत्ताभेदन्यूनकालीनत्वात् । नच यद्वत्तया ज्ञाते यत्प्रतीयते तत्तदवच्छेदकमिति वाच्यम्; उपलक्षणस्याप्यवच्छेदकत्वप्रसङ्गात् । विशेषणमेव ह्यवच्छेदकं, तस्मात्स्वरूपलक्षणया अभेद एव वाक्यार्थ इति, तदयुक्तम्; अभेदमात्रस्य बुभुत्सितत्वेन वाक्यार्थत्वाभावात् । पूर्वोत्तरकालीनदेवदत्तभेद- 20 भ्रमस्य ततोऽनिवृत्तिप्रसङ्गाच्च । तस्मात्तत्तेदंताश्रयाभेद एव वाक्यतात्पर्यम् । नच तत्र तयोरुपलक्षणत्वमेवेति वाच्यम्; तथासति वस्तुगत्या तत्तेदंताश्रययोस्तदभेद एव वाक्यार्थ इति पर्यवसन्नम् । न ह्यबुभुत्सितत्वेन स वाक्यार्थ इत्युक्तं तदयुक्तम् । विशिष्टाभेदपरवाक्यस्य विशेष्यमात्राभेदो न व्युत्पत्तिसिद्ध इति तदेव व्युत्पत्तिविरुद्धम् । नीलमुत्पलं नीलो घट 25 इत्यादौ एकपदप्रतिपन्नविशेष्यस्य अपरप्रतिपन्नविशेष्यमात्राभेद एव व्युत्पत्तेर्लोकसिद्धत्वात् । उभयाभेदपरत्वस्य समानाधिकरणवाक्ये क्वाप्यदर्शनात् ।

नच तर्हि विशेषणानामवच्छेदकत्वेनैवान्वय इति पर्यवसन्नम्, नहि तत्ते-
दन्तयोस्तत्संभवतीत्युक्तमिति वाच्यम् । अवच्छेदान्यूनकालीनत्वस्यावच्छेद-
कपदार्थत्वासिद्धेः । तथात्वे दण्डी पुरुषः श्यामो घट इत्यादौ दण्डादेरेवा-
वच्छेदकतयानन्वयप्रसङ्गात् । दण्डी नास्तीत्यत्र दण्डस्याभावसंसर्गानव-
5 च्छेदकत्वप्रसङ्गाच्च । तस्मादवच्छेदकत्वं स्वरूपसंबन्धविशेष एवेति तत्तेदं-
तयोरपि नावच्छेदकत्वेनान्वयानुपपत्तिः ।

अयमत्र निष्कर्षः—व्यधिकरणवाक्यानां समानाधिकरणवाक्येष्वपि
मृद्घटः नीलोत्पलं दण्डी पुरुष इत्यादिवाक्यानां च सखण्डार्थत्वमङ्गीकृत्यापि
सत्यादिवाक्ये तत्त्वमस्यादिवाक्ये च तदनङ्गीकारेणाखण्डार्थत्वमङ्गीकृत्य
10 तत्साधनाय प्रकृष्टप्रकाशवाक्ये देवदत्ताभेदवाक्ये चाखण्डार्थत्वं साधयत-
स्तव कोऽभिप्रायः ? किमौपनिषदस्य प्रधानार्थस्य सत्यादिवाक्याखण्डार्थतां
विना दुरुपपादत्वात् अखण्डार्थत्वसाधकाभावेऽपि काशं कुशं वावलम्ब्यापि
प्रयोजनगौरवात् प्रमाणविरुद्धमप्यखण्डार्थत्वं साधनीयमित्यभिप्रायः,
अथवा वस्तुनो निर्विशेषत्वात् तथाङ्गीकार्यमिति । नाद्यः; साधकाभावेना-
15 प्रामाणिकस्याखण्डार्थत्वस्य गुरुभूतप्रयोजनसाधकत्वासंभवेन तादृशप्रयोजक-
त्यागस्यैवोचितत्वात् ॥

किञ्च किं तद्गुरुभूतं प्रयोजनम् ? न तावदद्वैतसिद्धिः प्रयोजनम्; सत्यज्ञा-
नादिवाक्याखण्डार्थत्वाभावेऽपि नेह नानास्तीत्यादिभेदनिषेधश्रुतिभिरेवाद्वैत-
सिद्धेः लोकव्युत्पत्तिविरुद्धाखण्डार्थत्वकल्पनाया निर्मूलत्वात् । ननु वाक्य-
20 जन्याधिष्ठानतत्त्वसाक्षात्कारो ह्यविद्यानिवर्तकः, वाक्यजन्यस्य च तादृशत्वं
निर्विशेषब्रह्मस्वरूपमात्रविषयकत्वमेव, तादृशज्ञानजनकं हि सत्यज्ञानादि-
वाक्यं तत्वमस्यादिवाक्यं चेति चेन्न; अधिष्ठानसाक्षात्कारो ह्यविद्यानिव-
र्तकः नतु निर्विशेषिताधिष्ठानसाक्षात्कारः अतत्त्वाविषयतादृशसाक्षात्कारो
वा, गौरवात्, अन्यथा यज्ञदत्तीयशुक्तौ रजतभ्रमवतो देवदत्तीयत्वेन शुक्ति-
25 साक्षात्कारेण भ्रमनिवृत्तिप्रसङ्गात् । तादृशाधिष्ठानसाक्षात्कारश्च विशिष्टपरेण
तत्त्वमस्यादिवाक्येनापि संभवतीति नाखण्डार्थत्वसिद्धिः । चरमसाक्षात्कारस्य
तदवच्छेदकवृत्तिविषयत्वावश्यंभावेनातत्त्वविषयत्वस्यावर्जनीयत्वाच्च । यत्तु

अज्ञानकार्यविशेषविषयकज्ञानं नाज्ञानं निवर्तयति; तथासति रजतज्ञानेन शुक्त्यज्ञाननिवृत्तिप्रसङ्गादिति, तदसत्; रजतज्ञानस्य शुक्तितत्त्वसाक्षात्कारत्वाभावेनानिवर्तकत्वात् न त्वज्ञानकार्यरजतविषयत्वात्, तथात्वे शुक्तिद्वयरजतभ्रमानन्तरमेकशुक्तितत्त्वविषयकस्वान्यशुक्तिरजतसाक्षात्कारस्य एकशुक्त्यज्ञाननिवर्तकत्वप्रसङ्गात् चरमसाक्षात्कारस्याज्ञानकार्यवृत्तिविषयत्वे- 5 नाज्ञानानिवर्तकत्वप्रसङ्गाच्च । तस्मादधिष्ठानतत्त्वविरोध्यविषयकाधिष्ठानतत्त्वसाक्षात्कार एवाविद्यानिवर्तकः । रजतज्ञानं शुक्तितत्त्वविरोध्यविषयकं तादृशरजतत्वविषयकत्वात्, अतस्तन्न शुक्त्यज्ञाननिवर्तकम्, सत्यादिवाक्यजन्यं तत्त्वमस्यादिवाक्यजन्यं च ज्ञानं नाधिष्ठानतत्त्वविरोधिविषयकं तत्त्वविषयकं चेति तदविद्यानिवर्तकम्, सत्यत्वादेर्जगत्कारणत्वादेश्च ब्रह्मतत्त्वरूपतदवि-10 रोधित्वात् । विशिष्टसाक्षात्कारनिवर्तकत्वानुरोधेन तद्वाक्यप्रतिपन्नानां ब्रह्मधर्माणामज्ञानकार्यत्वाभावस्यैवाङ्गीकर्तुं युक्तत्वाच्च । तस्मान्न प्रथमाभिप्रायः ॥

नापि द्वितीयः; वस्तुनस्तादृशत्वेऽपि विशिष्टपरतया व्युत्पन्नवाक्यसजातीयस्याखण्डार्थत्वसाधनस्यासंभवात् प्रकृष्टप्रकाशवाक्ये देवदत्ताभेदवाक्ये चाखण्डार्थत्वासिद्धेः । तन्मात्रप्रश्नोत्तरत्वादिकं तु नाखण्डार्थत्वसाधकम् ।15 विशिष्टपरस्यापि वाक्यस्य स्वरूपप्रश्नोत्तरत्वे विरोधाभावात् स्वरूपप्रश्नस्य स्वरूपमात्रपरोत्तरवाक्येन शान्त्यभावाच्च । वस्तुतस्तादृशत्वमप्यसिद्धमिति निर्विशेषत्वभङ्गे प्रतिपादितम् । तन्मात्रप्रश्नोत्तरत्वमप्यसिद्धम्; प्रश्नोत्तरयोर्वाच्यताविषयत्वस्य बहुधा प्रतिपादितत्वात् । स्वरूपमात्रविषयत्वे च प्रकृष्टप्रकाशपदस्य न किञ्चित्प्रयोजनं पश्यामः । किं चन्द्रे प्रकृष्टप्रका-20 शत्ववैशिष्ट्यबोधनार्थं तत्तद्व्यक्त्यन्तरे वा अबोधकमेव चन्द्रस्वरूपनिर्णायकं वा । नाद्यः; अखण्डार्थत्वभङ्गप्रसङ्गात् । न द्वितीयः; उन्मत्तप्रलापत्वप्रसङ्गात् । नहि चन्द्रस्वरूपे पृष्टे अन्यत्र प्रकृष्टप्रकाशत्ववैशिष्ट्यप्रतिपादनमनुन्मत्तस्य संभवति । न तृतीयः; प्रकृष्टप्रकाशपदाव्युत्पन्नस्य चन्द्रस्वरूपावधारणप्रसङ्गात् व्युत्पत्त्यपेक्षायां विशिष्टबोधनमवर्जनीयमेव । व्युत्पत्ति-25 ग्रहस्यार्थबोधनद्वारेणैव चन्द्रपदानुग्राहकत्वात् ।

किञ्च लक्षणया स्वरूपाभेदपरत्वे मुख्यार्थसंबन्धित्वेन स्वरूपप्रतीति-
रस्ति न वा। आद्ये अखण्डार्थत्वभङ्गः। अन्त्ये स्वरूपविशेषप्रतीतिनियमस्या-
कस्मिकत्वप्रसङ्गः । वस्तुतस्तु भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे
वृत्तिः सामानाधिकरण्यम् । इदं च तत्त्वमस्यादिवाक्यस्याखण्डार्थत्वे कथं
5 स्यात् समानाधिकरणवाक्यत्वम् । नच मुख्यार्थबोधनदशायां भिन्नप्रवृत्ति-
निमित्तकत्वं लक्ष्यार्थबोधनदशायामेकार्थकत्वमिति वाच्यम्; एकार्थबुद्धौ
भिन्नप्रवृत्तिनिमित्तविषयकत्वस्यैव सामानाधिकरण्यप्रयोजकत्वात्। अन्यथा
विषं भुङ्क्ष्वेत्यादिवाक्यस्य अर्थवादानां च समानाधिकरणवाक्यत्वप्रसङ्गात्।
उक्तरीत्या मुख्यार्थलक्ष्यार्थप्रतीत्या भिन्नप्रवृत्तिनिमित्तकत्वस्य एकार्थकत्वस्य
10 च सत्त्वात् । तस्मात्सर्वत्र समानाधिकरणवाक्ये विशिष्टाभेद एव आर्थ-
प्रतीतिविषय इति नाखण्डार्थत्वसिद्धिः ॥

नन्वेवं सति सिद्धान्ते तत्त्वमस्यादिवाक्यस्य कथं सामानाधिकरण्यं?
जीवब्रह्माभेदानभ्युपगमादिति चेन्न; तत्त्वंपदयोरुभयोरपि ब्रह्मपरत्वेन
सामानाधिकरण्याविरोधात्, त्वंपदस्य च ब्रह्मपरत्वं, शरीरवाचिशब्दस्य
15 शरीरिपर्यन्तव्युत्पत्तेः । जीवस्य च ब्रह्मशरीरत्वं यस्यात्मा शरीरमित्यादि-
श्रुतिसिद्धम् । मध्यमपुरुषपदप्रयोगस्तु युष्मच्छब्दोपपदत्वादविरुद्ध इति
न किञ्चिदनुपपन्नम् ॥

**इति श्रीवेदान्तविजयमङ्गलदीपिकायामखण्डार्थत्वभङ्गः ॥**

---

20 **श्रीः**

## श्रीमते रामानुजाय नमः ॥

---

**प्रपञ्चस्य तु मिथ्यात्वमैक्यं जीवेशयोस्तथा ।**
**अहमर्थात्मभिन्नत्वमखण्डार्थत्वमप्यसत् ॥**
25 **सत्यज्ञानादिवाक्यस्य मायिभिः परिकल्पितम् ।**
**बहुश्रुतिविरोधेन सत्तमैरपि खण्डितम् ॥**

अयमत्र निष्कर्षः। मायिमते भेदश्रुतीनां जीवशरीरत्वजगदुपादानत्व-

प्रतिपादकश्रुतीनां तादृशस्मृतीतिहासपुराणागमसूत्राणां प्रत्यक्षादीनां चाप्रामाण्यम् । अद्वैतपरवाक्यानामपि पदार्थसंसर्गरूपवाक्यार्थपरत्वानङ्गीकारादप्रामाण्यम् । बहुषु पदेषु लक्षणा । निर्गुणश्रुतीनां वाक्यान्तरेण हेयगुणविषयत्वेऽवगते सकलकल्याणगुणविषयत्वस्यापि कल्पनायां सर्वज्ञत्वाद्यनन्तकल्याणगुणश्रुतीनामप्रामाण्यम् । अखिलहेयप्रत्यनीके परस्मिन् ब्रह्मणि 5 हेयरूपाज्ञानाश्रयत्वतत्तिरोधानजन्ममरणविविधविचित्रयातनादिसकलहेयास्पदत्वकल्पनं स्वस्य तादृशब्रह्मणि पूर्वसञ्चितानन्तस्वकीयदुरितमूलप्रद्वेषाविष्करणमित्याद्यनन्तदोषाः ॥

माध्वमते श्रुतिस्मृतिप्रतिपन्नजगदुपादानत्वभङ्गः, गुण्यतिरेकेण गुणनिराकरणेऽपि निर्गुणनिराकरणमित्यादयो दोषाः प्रादुष्युः ॥ 10

भेदाभेदवादस्तु भेदाभेदयोः परस्परविरोधादेव गर्भस्रावनिरस्तः ।

विशिष्टाद्वैतवादे तु भेदश्रुत्यभेदश्रुतिघटकश्रुतीनां तादृशस्मृतीतिहासपुराणानां प्रत्यक्षादीनां च प्रामाण्यमिति न कस्याप्यप्रामाण्यमिति । श्रीमन्नारायणस्यैव परत्वविषये वेदान्ताचार्यैरनुगृहीतम्—

आत्मैक्यं देवतैक्यं त्रिकसमधिगतातुल्यतैक्यं[1] त्रयाणा- 15
मन्यत्रैश्वर्यमित्याद्यनिपुणफणितीराद्रियन्ते न सन्तः ।
त्रय्यन्तैरेककण्ठैस्तदनुगुणमनुव्यासमुख्योक्तिभिश्च
श्रीमन्नारायणो नः पतिरखिलतनुर्मुक्तिदो मुक्तभोग्यः ॥

अत्र श्लोके अनिपुणफणिरिति वदतामयं भावः—आत्मैक्यादिकमत्यन्तानुपपन्नमिति कथमत्यन्तानुपपन्नत्वम्? उच्यते; आत्मैक्यं तावदनु- 20 पपन्नम् , यस्याकाशं शरीरं, नित्यो नित्यानां चेतनश्चेतनानां, उत्तमः पुरुषस्त्वन्यः, दासभूताः स्वतः सर्वे ह्यात्मानः परमात्मनः, इत्याद्यनन्तप्रमाणविरोधात्, बद्धमुक्तव्यवस्थानुपपत्तेः, ब्रह्मणो नित्यमुक्तत्वश्रुतिविरोधाच्च । देवतैक्यमित्याद्यनुपपन्नम्, तद्देवतानां परमं च दैवतं, स आत्मा अङ्गान्यन्या देवताः, नारायणस्य चाङ्गानि सर्वदैवानि चाभवन् इत्यादिबहुप्रमाणविरो- 25

१ त्रिकसमधिकता इति क्वचित् पाठः ।

घात्। परब्रह्मणस्त्रिमूर्त्यतिरिक्तत्वं त्रयाणां तुल्यता ऐक्यं परब्रह्मव्यतिरिक्ते चतुर्मुखे शिवे वा परत्वमिति पक्षचतुष्टयमप्यनुपपन्नम्;

नारायणपरं ब्रह्म तत्त्वं नारायणः परः।
पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः।

5 यस्मात्परं नापरमस्ति किञ्चित्, अतः परं नान्यदणीयसं हि, न तस्येशे कश्चन, पतिं विश्वस्यात्मेश्वरं, न तत्समश्चाभ्यधिकश्च दृश्यते, न त्वत्सतत्समोऽस्त्यभ्यधिकः कुतोऽन्यः।

मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय।
न वासुदेवात्परमस्ति दैवतं, न दैवं केशवात्परम्।
10 विष्णुरेव परं ब्रह्म त्रिभेदमिह पठ्यते।
नारायणः परं ब्रह्म पन्नगाशनवाहनः।
वासुदेवः परं ब्रह्म परमात्मा परात्परः।
नारायणाभिधानस्य ब्रह्मणः परमात्मनः।
वदन्ति यत्तत्त्वविदस्तत्त्वं यज्ज्ञनमव्ययम्।
15 ब्रह्मेति परमात्मेति भगवानिति शब्द्यते।

स ब्रह्मा स शिवः, स ब्रह्मा स ईशानः, ब्रह्मा च नारायणः, शिवश्च नारायणः,

यन्नाभिपद्मादभवन्महात्मा प्रजापतिर्विश्वसृड्विश्वरूपः, नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते, सर्वाणि भूतानि नारायणादेव समुत्पद्यन्ते 20 नारायणात्प्रवर्तन्ते नारायणे प्रलीयन्ते, नैवेह किञ्चनाग्र आसीत्, दिव्यो देव एको नारायणः, एको ह वै नारायण आसीत् न ब्रह्मा नेशानः, ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते ललाटात् क्रोधजो रुद्र इत्यादिबहुप्रमाणविरोधात्। त····शानिपुणफणितीः सन्तो नाद्रियन्ते आत्मैक्यादिकं नाङ्गीकुर्वन्तीत्यर्थः। सतामनभिमतत्वादेवास्याप्यनभिमतमिति भावः॥

स्वसिद्धान्तं दर्शयति—त्रय्यन्तैरिति ॥ अत्र "तं त्वौपनिषदं पृच्छामि, तं त्वौपनिषदं पुरुषं विद्धि, यश्छन्दसामृषभो विश्वरूपः, सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति" इत्यादिवाक्यानि विवक्षितानि तदनुगुणमनुव्यासमुख्योक्तिभिरित्यनेन,—

"विष्णुनामा स वेदेषु वेदान्तेषु च गीयते । 5
ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः ।
ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम् ॥

नारायणपरा वेदाः, वासुदेवपरा वेदाः, वेदैश्च सर्वैरहमेव वेद्य" इत्यादिवचनानि विवक्षितानि ॥

नः पतिरखिलतनुरित्यनेन—"ईशानो भूतभव्यस्य, इन्द्रो राजा जगतो 10 य ईशे, धाता ददातु नो रयिमीशो जगतः पतिः, धातुः प्रसादान्महिमानमीशं, यः परः स महेश्वरः, न तस्येशे कश्चन, ईशः सर्वस्य जगतः, प्रभुः प्रीणाति, सर्वस्य प्रभुमीशानं, सर्वस्येशानः सर्वस्याधिपतिः, पतिं विश्वस्यात्मेश्वरं, ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिः, पतिं पतीनां परमं परस्तात्" इत्यादीनि विवक्षितानि ॥ 15

मुक्तभोग्य इत्यनेन—"तमक्रतुं पश्यति वीतशोकः, अमृतस्य परं सेतुं, उतामृतत्वस्येशानः, अध्यात्मयोगाधिगमेन गम्यं, मत्वा धीरो हर्षशोकौ जहाति, तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते, ज्ञात्वा तमेवं मनसा हृदा च भूयो न मृत्युमुपयाति विद्वान्, तमेव विदित्वाऽतिमृत्युमेति, नारायणं महाज्ञेयं, ब्रह्मविदाप्नोति परम्, परमे 20 व्योमन्, सोऽश्नुते सर्वान्कामान् सह, ब्रह्मणा विपश्चितेति" इत्यादीनि विवक्षितानि ॥

तस्मात् श्रीमन्नारायण एव सर्वस्मात्परः जगत्कारणभूतो मोक्षप्रदो मुक्तभोग्यो जगच्छरीरो जगत्पतिश्चेति सिद्धान्तः सुप्रतिष्ठित इति ॥

श्रीमद्रामानुजार्यप्रमुखगुरुवरप्राप्तवेदान्तसिद्धान्
सर्वश्रुत्यन्तवाक्यानुगुणसुललितान् सम्यगालोच्य सर्वान् ।
अर्थानाचार्यवर्यः शुभगुणजलधिः सर्वविद्वत्प्रबुध्यैः
व्याकुर्वन्वेदमौलेर्विजयफणितिना वर्द्धते श्रीमहार्यः ॥

5 श्रीः हरिः ओम्

इति श्रीवाधूलकुलतिलकश्रीमहाचार्यचरणारविन्दसेवासम-
धिगतसकलशास्त्रहृदयेन श्रीमद्वाधूलसुन्दरजामातृ-
देशिकसूनुना श्रीसुदर्शनगुरुणा विरचितायां
वेदान्तविजयमङ्गलदीपिकायामद्वैत-
10 विद्याविजयोपन्यासः संपूर्णः ॥

---

संपूर्णा च विजयमङ्गलदीपिका ॥

हरिः ओम् ॥

श्रीमते रामानुजाय नमः ।

15

---